# सूचीपत्रम् ।

| | रु० | आ० | पा० |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ० |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ७ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णु सहस्रनाम | ० | १ | ० |
| व्याकरणकौमुदी (उपक्रमणिका का दूसरा भाग ) | १ | ० | ० |
| शब्दरूपावली | ० | १ | ० |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| सिद्धान्तकौमुदी ( पं० वामनाचार्येण संशोधिता ) | २ | ८ | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | २ | ८ | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | २ | ० | ० |

॥ श्रीमहागणपतये नमः ॥

# चतुर्विंशतिमतसंग्रहः

सर्वज्ञः सकलेश्वरः श्रुतिगिरां तात्पर्यभूमिः परा
द्वैतध्वान्तविधूननैकपटुभिः स्वान्ते चिरं चिन्तितः ॥
तेषामात्मतयैव योऽद्वयवपुर्विद्योतते स्वप्रभः
स्वेच्छोपात्तमनोहराकृतिममुं श्रीबालकृष्णं नुमः ॥ १ ॥
विबुधसुरमुनीन्द्रैर्वन्दितं यत्पदाब्जं
सकलजगदुपात्तानन्तरायान् लुनाति ॥
प्रथितविभव ईशो मत्कृतेर्विघ्नपूगं
शमयतु स गणानामग्रणीर्विघ्नराजः ॥ २ ॥
बालभावमवलम्ब्य भारतीं प्रार्थये किमपि काङ्क्षितं मुहुः ॥
यत्त्वदीयपदपल्लवद्वयं मामकीनरसनातिथिर्भवेत् ॥ ३ ॥
नत्वा शास्त्रार्थतत्त्वज्ञानहं कुर्वे यथामति ॥
श्रीचतुर्विंशतिमतस्मृतेर्व्याख्यानमादरात् ॥ ४ ॥

श्रीमन्वादिचतुर्विंशतिमतं संजिघृक्षुः कश्चित्तच्छिष्यो निर्विघ्नसमाप्तिफलकं मङ्गलं शिष्यशिक्षार्थं मुनिकर्तृकतयैवोपनिबध्नन्नाभिधेयं प्रदर्शयति—

सर्वात्मने नमस्कृत्य ब्रह्मणेऽमिततेजसे ॥
धर्मानूचुस्त्रिवेदोक्तान् स्वर्गादिफलदायकान् ॥

धर्मानूचुरिति मन्वाद्या इति शेषः । ते चानुपदमेव वक्ष्यन्ते । पौरुषेयत्वेप्यस्य ग्रन्थस्य वेदमूलत्वाद्धर्मे प्रामाण्यमित्याशयेन धर्मान् विशिनष्टि । त्रिवेदोक्तानिति । यद्यपि समाहारद्विगौ त्रिवेदीत्यपेक्षितं न च

विशेषणं विशेष्येणेति कर्मधारयः दिक्संख्ये संज्ञायामिति नियमात् । तथापि अवयवो वेद इति मध्यमपदलोपी समासः । वेदशब्दस्तत्संघातलक्षकः । यथा चैतत्तथा द्विगोर्लुगनपत्य इति सूत्रे भाष्यादौ स्फुटम् ॥

के मन्वादय इत्याकाङ्क्षायामाह—

मनुना याज्ञवल्क्येन विश्वामित्रेण चात्रिणा ।
विष्णुना च वसिष्ठेन व्यासेनोशनसा तथा ॥
आपस्तम्बेन वत्सेन हारीतगुरुनारदैः ।
पराशरेण गर्गेण गौतमेन यमेन च ॥
शातातपेन शङ्खेन संवर्त्तेन तथैव च ।
बौधायनेन सांख्येन दक्षेणाङ्गिरसा तथा ॥
चतुर्विंशतिभिः शास्त्रं दृष्टं लोकहिते रतैः ।
धर्मसंरक्षणार्थाय संक्षेपेण महात्मभिः ॥

एतैश्चतुर्विंशतिभिः शास्त्रं वक्ष्यमाणं दृष्टमित्यन्वयः । किमर्थं तत्राह संक्षेपेण अल्पायासेनैव धर्मस्य सम्यग्रक्षणमेवार्थः प्रयोजनं तस्मै रक्षणं चेह शाब्दोनुभवः। नन्वसौ आशुविनाशित्वात्कथं कालान्तरभाविकर्मानुष्ठाने उपयुज्यतामित्याशङ्क्याह—

एतज्ज्ञात्वा द्विजः शीघ्रं धर्मं स्मरति तत्त्वतः ।
तस्मात्सर्वप्रयत्नेन शास्त्रमेतदुदीरयेत् ॥

द्विजस्त्रैवर्णिकः । तथा च स्मरणद्वारा उपयुज्यत इति भावः । उदीरयेत् अध्यापयेदित्यर्थः । अत्र च ब्राह्मण एव अधिकारी बोध्यः । तदुक्तं मनुना—

विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः ।
शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्नान्येन केन चिदिति ॥

यद्यपि अध्ययनं त्रैवर्णिकसाधारणं तथापि अध्यापनं ब्राह्मणैनैव कार्यमित्यर्थः । अध्यापकब्राह्मणालाभे तु

मनुरेवाह—

अब्राह्मणादध्ययनमापत्काले विधीयते ।

अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोरिति ॥

अत्राध्यापनमपि अर्थादनुज्ञानमिति तद्व्याख्यातारः । अध्ययनस्य त्रैवर्णिकसाधारण्यं तु मनुनोक्तम्-

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।

तस्य शास्त्रेधिकारोस्मिन् ज्ञेयो नान्यस्य कस्यचिदिति ॥

शास्त्रमुदीरयेदित्युक्तं तद्विशिनष्टि-

वर्णानामाश्रमाणां च ह्याचारकथनं शुभम् ॥

आचाराः कथ्यन्तेऽस्मिन्नित्याचारकथनम् । इदानीं संदर्भशुद्ध्यनुरोधे मूले वक्ष्यमाणानि वचनानि स्मृत्यन्तरस्थानि कानि चिदुपसंहृत्यावश्यकाः षोडश प्राच्याः संस्कारा व्युत्पाद्यन्ते । ते च गर्भाधान, पुंसवना, नवलोभन, सीमन्तोन्नयन, जातकर्म, नामकरण, निष्क्रमणा, न्नप्राशन, चौलो, पनयनानि, चत्वारि वेदव्रतानि प्रतिशाखं गृह्येपूक्तानि स्नानं, विवाहश्चेति । अत्रापि गर्भाधानाद्याः उपनयनान्ता एव सर्वेषां नियताः न तु स्नानाद्याः । तेन ब्रह्मचर्यादेव प्रव्रजेदित्यादि न विरुध्यते । एते च द्विजानामेव समन्त्रकाः ।

यदाह याज्ञवल्क्यः-

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।

निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रिया इति ॥

वैशब्द एवकारार्थः । अत्र तेषामेव क्रिया इति वदन् शूद्रस्यामन्त्रकाः क्रिया इति दर्शयति अत एव संस्कारानधिकृत्य

यमः-

शूद्रोप्येवंविधः कार्यो विना मन्त्रेण संस्कृत इति ॥

तत्र ऋतौ गर्भाधानं कार्यम् । रजः प्रभृतिषोडशरात्रान्त ऋतुकालः । तदुक्तं याज्ञवल्क्येन-

षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ।

ब्रह्मचार्येव पर्वाण्याद्याश्चतस्त्रश्च वर्जयेदिति ॥

युग्मासु निशासु निशास्विति दिवसनिषेधार्थम् ॥

तथाचाथर्वणश्रुतिः—

प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तत् यद्रात्रौ संयज्यन्त इति ॥

शङ्खलिखितावपि—

नार्त्तवेपि दिवा व्रजेदिति युग्मास्विति बहुवचनं समुच्चयार्थम् । अतश्चैकस्मिन्नप्यृतावप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत् युग्मग्रहणं च पुत्रार्थम् ।

तदाह मनुः—

युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिष्विति ।

अत्र च ऋतौ गच्छेदेवेति नियमविधिः, न ऋतावेवेति परिसंख्या दोषत्रयापत्तेः । यत्र श्राद्धादिषु ब्रह्मचर्यं विहितं तत्राप्यृतौ गच्छतो न दोष इत्याह ब्रह्मचार्येवेति विज्ञानेश्वरः । वस्तुतस्तु ब्रह्मचर्यमेव तत् । यद्रात्रौ संयुज्यते इति प्रागुदाहृताथर्वणश्रुतिस्थब्रह्मचर्यपदवदिदमपि अर्थवादमात्रमित्युचितम् । तथा च श्राद्धकर्तृभोक्त्रोर्ब्रह्मचर्यमृतावप्यावश्यकमिति प्रतिज्ञाय माधवाचार्यैर्वृद्धमनुवचनमुदाहृतम्—

ऋतुकालं नियुक्तो वा नैव गच्छेत्स्त्रियं क्वचित् ।

तत्रागच्छन् समाप्नोति ह्यनिष्टफलमेव त्विति ॥

सूतकादौ तु ऋतावगमनेप्यदोषः ।

तदाहोपमन्युः—

सूतके बन्धने विप्रो ह्यव्यकव्यादिवर्जितः ।

नैनसा लिप्यते तद्वदृतावगमनादपीति ॥

पर्वाणीति बहुवचनबलात् पर्वादीनामित्यर्थः । तेनाष्टमीचतुर्दश्योर्ग्रहणम् ।

यदाह मनुः—

अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।

ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विज इति ॥

आद्या इति । अत्र चतुर्थदिवसे गमनं वैकल्पिकम् । विहितप्रतिषिद्धत्वात् ।

तथाच हारीतः—

चतुर्थेऽहनि स्नातायां युग्मासु गर्भाधानमिति विदधौ । निषेधस्तु चतुर्थे सा न गन्तव्येति व्यासोक्तः ॥ व्यवस्थितश्चायं विकल्पः । रजोनिवृत्तौ चतुर्थ्यां विधिः । तदनुवृत्तौ तु प्रतिषेध इति ॥

तथाच मनुः —

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वलेति ॥

साध्वी गर्भाधानयोग्येत्यर्थ इति माधवः ।

आपस्तम्बोपि—

स्नानं रजस्वलायास्तु चतुर्थेहानि शस्यते ।
गम्या निवृत्ते रजसि नानिवृत्ते कथं चनेति ॥

गमनं चैकस्यां रात्रौ सकृदेव तदुक्तम्—

एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् ।
स्वस्थ इन्दौ सकृत्पूज्यं लक्षण्यं जनयेत्पुमानिति ॥

अत्र क्षामता रजस्वलाव्रतजन्या । अल्पाऽस्निग्धभोजनादिना वा कर्त्तव्या ।

तदाह बृहस्पतिः—

स्त्रियाः शुक्रे धिके स्त्री स्यात्पुमान् पुंसोधिके भवेत् ।
तस्माच्छुक्राविवृद्ध्यर्थं स्निग्धं भक्ष्यं प्रकल्पयेत् ॥
लघ्वाहारां स्त्रियं कुर्यादेवं संजनयेत्सुतमिति ॥

नियमान्तरमाह याज्ञवल्क्यः—

यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन्निति ॥

अनृतावपि स्त्रीकामनायां सत्यां स्त्रियं रमयेदेवेत्यर्थः ।

इदं च पर्वादिव्यतिरेकेण ।

तथा च विष्णुपुराणे तृतीयेंशे—

इति मत्वा स्वदारेषु ऋतुमत्सु नरो व्रजेत् ।
यथोक्तदोषहीनेषु सकामेष्वनृतावपीति ॥

एवं चानृतौ गमननिषेधपराणि वचनानि स्त्रियाः कामनाविरहे बोध्यानि अनृतौ गमनं तु निषेधबौधायनः—

ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोः पापं अयोनौ यश्च सिञ्चतीति ॥

तथा महाभारते—

विसस्तैन्यशपथमसङ्गेऽनृतौ गच्छतो यो दोषः स ममास्तु इत्यसकृदुक्तम्।

अत्रिः—

षण्मासान् कामयेन् मर्त्यो गर्भिणीं स्त्रियमेव हि ।
आदन्तजन्मनादूर्ध्वमेव धर्मो न हीयते इति ॥

ऊर्ध्वं प्रसूतेरूर्ध्वं बालस्य दन्तजननं मर्यादीकृत्येत्यर्थः । स्त्रीणां वरमिति इन्द्रेण दत्तमिति भावः । तथाच श्रुतिः—

ता अब्रुवन् वरं वृणामहे ऋत्वियात्प्रजां विन्दामहे काममाभिजनितोः संभवामेति तस्मादृत्वियात्स्त्रियः प्रजां विन्दन्ते काममाविजनितोः सम्भन्ति वारे वृतं ह्यासामिति । विश्वरूपनाम्नः पुरोहितस्य वधादिन्द्रस्य ब्रह्महत्यायां सत्यां तत्तृतीयांशं रजोरूपेण परिणतं स्वीकुर्वत्यः स्त्रिय इन्द्रमब्रुवन् ऋत्वियात् ऋतुकालीनात्पुरुषसम्बन्धात् आविजनितोः प्रसवपर्यन्तं सम्भवन्त्यनुभवन्ति वारे वरसंबन्धिनि वचने ।

इति गर्भाधानप्रकरणम् ॥

अथ पुंसवनम् ।

गर्भामासप्रभृतितृतीयमासे गर्भाभिव्यक्तौ सत्यां तत्रैवानभिव्यक्तौ तु चतुर्थे मासि कार्यम् । अनवलोभनं तु चतुर्थ इति स्मृत्यर्थसारेः। तृतीये चतुर्थे षष्ठेष्टमे वा मासे शुक्रसोमबुधगुरुवारेषु पुंसवनानवलोभने कुर्युरित्यन्ये ॥ अत्र नियतकालत्वाद् गुरुशुक्रास्तबालवार्द्ध-

कमलमासादिष्वपि न दोषः ॥ अस्तादिरहितकाललाभे तु शुक्रास्तादौ न कार्य्यम् । सीमन्तादिने वा कार्ये ।

## अथ सीमन्तोन्नयनम् ।

तच्च गर्भसापेक्षया तृतीये चतुर्थे पञ्चमे षष्ठे सप्तमेऽष्टमे वा मासि ।
तथाच लौगाक्षिः—तृतीये गर्भमासे सीमन्तोन्नयनं कार्यमिति ।
तथा आश्वलायनः—चतुर्थे गर्भमासे सीमन्तोन्नयनं षष्ठेऽष्टमे वेति ।
बैजवापः—अथ सीमन्तोन्नयनं चतुर्थे पञ्चमे षष्ठे वेति ।

सांख्यायगृह्ये सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनमिति । एतेष्वसंभवे तु यावत्प्रसवं कार्यम् ।

तथाच शङ्खः—यावद्वा न प्रसव इति । अत्रापि शुक्रास्तादिकालान्तरासंभवे न दोषः ॥ इदं च प्रतिगर्भं नावर्त्तते ॥

तथाच हारीतः—
सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेदिति ॥
विष्णुना यन्मतान्तरमप्युक्तम्—
सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते ।
केचिद्गर्भस्य संस्काराद्गर्भे गर्भे प्रयुञ्जते इति ॥
तत्कृतेऽभ्युदयइत्येवं परम् ।
तथाचाश्वलायनस्मृतौ—
प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यत इति ॥
बलिर्विष्णुबलिः गर्भाष्टमे मासे कार्यः ॥ इदं च-
बहल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ।
इति वचनमाश्रित्य गृह्यसूत्रानुक्तेरिदानीं नाचरन्ति ।
अकृतसीमन्तायाः प्रसवे तु विशेषः सत्यव्रतेनोक्तः—

स्त्री यद्यकृतसीमन्ता प्रसूयेत कथंचन ।
पुत्रं गृहीत्वा विधिवत्पुनः संस्कारमर्हतीति ॥
सीमन्तानन्तरं नियमविशेषः स्मर्यते–
नदीप्रतरणं चैव शकटारोहणं तथा ।
उग्रौषधं तथा क्षारं मैथुनं भारवाहनम् ॥
कृते पुंसवने चैतद्गर्भिणी परिवर्जयेदिति ॥

अथ जातकर्म ।

जातमात्रे पुत्रे पिता तस्य मुखं निरीक्ष्य नद्यादावुदङ्मुखः स्नात्वा तदसंभवे दिवाऽऽहृताभिः शीताभिः अद्भिः सुवर्णयुताभिः गृह एव स्नात्वा नालच्छेदात्पूर्वं वृद्धिश्राद्धं हेम्ना कृत्वा जातकर्मदानादि कुर्यात् ।

प्राङ्नाभिवर्द्धनात्पुंसो जातकर्म विधीयते ।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषामिति मनुस्मृतेः ॥ इदं च रात्रौ संध्यायां ग्रहणे जाताशौचान्तरमध्येपि कार्यम् ॥ मृताशौचमध्ये जातश्चेत्तदैव वा आशौचान्ते वा कार्यम् ॥

तदुक्तं विष्णुधर्मोत्तरे–
आशौचोपरमे कार्यमथवा नियतात्मभिरिति ।
पितरि ग्रामान्तरगते सति पितृव्यादिर्गोत्रजो ज्येष्ठक्रमेणेदं कुर्यात् । आदित्यपुराणे विशेष उक्तः—
तत्र दद्यात्सुवर्णं तु भूमिं गास्तुरगं रथम् ।
छत्रं छागं च माल्यं च शयनं वसनं गृहम् ॥
यावन्न च्छिद्यते नालं तावद्दद्यात्स्वशक्तित इति ॥
शङ्खोपि–
सर्वेषां च सकुल्यानां द्विपदचतुष्पदधान्यहिरण्यानि दद्यादिति ॥

अथ नामकरणम् ।

तच्च जातकर्मानन्तरमेव वा एकादशे द्वादशेऽष्टादशेऽन्हि संवत्सरे

वा अन्यस्मिन् वा शुभेन्हि कार्यम् ॥ नाम चास्मै दद्युरिति गृह्यस्थ-चकारस्वरसेन जातकर्मसमानकालीनतालाभात् ॥

तथा च मनुः—

नामधेयं दशम्यां तु द्वादश्यां वास्य कारयेदिति ॥

दशम्यामतीतायामित्यर्थः । दशम्युत्तरकाल इति यावत् इति महाभाष्ये पस्पशान्हिके स्फुटम् ॥ तथा विष्णुरपि—आशौचापगमे नामधेयमिति ।

तथा विष्णुपुराणेपि—

ततस्तु नाम कुर्वीत पितैव दशमेऽहनि इति ॥

भविष्योत्तरेपि—

नामधेयं दशम्यां च केचिदिच्छन्ति पार्थिव ।

द्वादश्यामथ वा रात्रौ मासे पूर्णे तथापरे ॥

अष्टादशेहनि तथा वदन्त्यन्ये मनीषिण इति ॥

गृह्यपरिशिष्टे—

जननाद्दशरात्रे व्युष्टे दशरात्रे संवत्सरे वा नामकरणमिति ॥ अत्र स्वगृह्यानुरोधेन व्यवस्थितेति माधवः । अत्र नियतकालेपि विष्टि-वैधृतिव्यतीपातग्रहणसंक्रान्तिश्राद्धादिने निषेधः । गुरुशुक्रास्तमलमासादिनिषेधस्तु नास्ति । नियतकालातिक्रमे तु सोप्यस्तीत्यन्यत्र विस्तरः । अत्र जातकर्मवत्पित्राद्याः क्रमेण कर्त्तारः ॥

## अथ निष्क्रमणम् ॥

तच्च चन्द्रदर्शनं सूर्य्यदर्शनं वा देवतानमस्कारात्मकं वा द्वादशेऽह्नि तृतीये वा मासि चतुर्थे वा कुर्यात् ॥

तथाच स्कान्दे—

द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहादिति ॥

यमस्तु—

ततस्तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनमिति ॥

याज्ञवल्क्यस्त्वाह— चतुर्थे मासि निष्क्रम इति ॥

अथान्नप्राशनम् ॥

तच्च षष्ठे मास्यष्टमे वा दन्ते जाते वा कार्यम् ॥

तथाच याज्ञवल्क्यः— षष्ठेन्नप्राशनं मासीति ॥

यमः—अष्टमे वापि कर्त्तव्यमिति ॥

लौगाक्षिः—षष्ठे मासेऽन्नप्राशनं जातेषु वेति ॥

शङ्खस्तु—संवत्सरेऽन्नप्राशनं अर्द्धसंवत्सरे इत्येके इति ॥

अथ चूडाकर्म ॥

तच्च प्रथमे द्वितीये पञ्चमे सप्तमे वाऽष्टमे उपनीत्या सह वा यथाकुलाचारं कार्यम् ॥

तथाच यमः—

ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिदर्शनादिति ॥

शङ्खः—तृतीये वर्षे चूडाकर्म पञ्चमे वेति ।

कारिकायाम्—

यथाकुलं च केषांचिदुपनीत्या सहेष्यते इति ॥

यदि गर्भाधानादिसंस्कारलोपस्तदा प्रायश्चित्तं कृत्वा कालात्ययनिमित्तं प्रायश्चित्तहोमं च कृत्वा चौलहोमः कार्यः ॥

तदाह भगवान् शौनकः—

आरभ्याधानमाचौलात्काले नीते तु कर्मणाम् ।
व्याहृत्याऽऽज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥

कार्यमिति शेषः । प्रायश्चित्तं च सएवाह—

एतेष्वेकैकलोपेपि पादकृच्छ्रं समाचरेत् ।
चूडाया अर्द्धकृच्छ्रं स्यादापादि त्वेवमीरितम् ॥
अनापदि तु सर्वत्र द्विगुणं द्विगुणं चरेत् ॥

मनुः

जातकर्मादिसंस्कारा: स्वकाले न भवन्ति चेत् ।
चौलादर्वाक् प्रकुर्वीत प्रायश्चित्तादनन्तरमिति ॥
प्रायश्चित्तहोमे कृते तत्कर्म कृताकृतम् ।
तथाच कारिका–
प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ।
कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चित इति ॥

प्रायश्चित्तहोमस्तु प्रधानहोमात्पूर्वं समस्ताभिर्व्याहृतिभिः प्रतिकर्मल घमेकैकाज्याहुतिः कार्येति । चूडाहोमश्च लौकिकेऽग्नौ । तस्य सभ्य इति नाम ॥ चूडायां विशेषः स्मर्यते–

मध्येशिरसि चूडा स्याद्वाशिष्टानां तु दक्षिणे ।
उभयोः पार्श्वयोरत्रिकश्यपानां शिखा मता ॥
लौगाक्षिस्तु–

दक्षिणतः कुमुजा वसिष्ठाना,मुभयतोऽत्रिकश्यपानां, मुण्डा भृगवः, पञ्चचूडा आङ्गिरसः, मण्डलोर्ध्वशिखिनोन्ये यथाकुलधर्मं वेति ॥ कुमुजा केशपङ्क्तिः । तथा विशेषान्तरमाह ज्योतिर्नारदः–

शिशोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चमाब्दादधोर्ध्वे तु गर्भिण्यामपि कारयेत्॥
सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते ॥
तथा
भिन्नभार्यासुतस्येह न दोषश्चौलकर्मणि इति ॥

एते च संस्काराः स्त्रीणाममन्त्रकाः कार्याः होमस्तु समन्त्रक इति स्मृत्यर्थसारादौ—उपनयनात्प्राग्बाला उच्छिष्टादावप्रयता न स्युः कामचारवादभक्षश्च ॥

तथाच गौतमः–प्रागुपनयनात्कामचारवादभक्ष इति॥ कामचारः इच्छागतिः । कामवादोऽश्लीलादिभाषणम् । कामभक्षः पर्युषादि-भक्षणम् । लशुनादिभक्षणं चेति हरदत्तः। इदं च महापातकवर्जमिति।

स्मृत्यर्थसारे स्मर्यते च–

स्यात्कामचारभक्ष्योक्तिर्महतः पातकादृते इति ॥

नैषां चाण्डालादिस्पर्शे सचैलस्नानम्। प्रागन्नप्राशनादभ्युक्षणम्। प्राक्चौलादाचमनं पश्चात्स्नानमित्येके। गौतमः–– न तदुपस्पर्शनादशौचमिति। तस्य अकृतोपनयनस्य उदक्यादिस्पृष्टस्य स्पर्शनान्नाऽशौचं तेन स्नानं न कर्त्तव्यमित्यर्थ इति हरदत्तः। षष्ठवर्षादूर्ध्वं तु स्नानं कर्त्तव्यमिति स एव। अनुपनीताः पित्रोः स्वधानिनयनादृते मन्त्रान् न ब्रूयुः। तथाच गौतमः–न ब्रह्माभिव्याहरेदन्यत्र स्वधानिनयनादिति।

मनुरपि–

न ह्यस्मिन् विद्यते कर्म किंचिदामौञ्जिबन्धनात् ।

नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते ॥ इति

स्वधानिनयनादिति पित्र्यस्य सर्वस्य कर्मण उपलक्षणम्। अन्यत्रोदककर्मस्वधापितृसंयुक्तेभ्य इति वृद्धवसिष्ठोक्तेः। अगृहीताक्षरः पुत्रः पित्रोः संस्कारमर्हतीत्यादिस्मृत्यन्तराच्चेति हरदत्तः। अक्षराभ्यासं तु कुर्युः। तदाह मार्कण्डेयः–

प्राप्तेऽथ पञ्चमे वर्षे विद्यारम्भं तु कारयेत् ।

ततःप्रभृत्यनध्यायान् वर्जनीयान् विवर्जयेत् ॥

अष्टमीद्वितयं चैव पक्षान्ते च दिनत्रयमिति ।

नृसिंहोऽपि––

अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पञ्चमहायने इति ॥

तानेतान् चौलान्तान् संस्कारान् प्रतिपादयितुं प्रायश्चित्तकाण्डशेषे मूलम्–

जाते पुत्रे जातकर्म नाम चैकादशेऽहनि ।

चतुर्थे निष्क्रमो मासि षष्ठेऽन्नप्राशनं मतम् ॥

चूडाकर्म तृतीयेऽब्दे कुलधर्मेण वा तथेति ॥

## अथोपनयनम् ॥

तत्र मूलम्––

गर्भाष्टमोऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।

एकादशे क्षत्रियस्य वैश्यस्य द्वादशे स्मृतमिति ॥

उपनयनमेवोपनायनं स्वार्थेऽणिति विज्ञानेश्वरः । एवं तु उत्तर पदवृद्धिर्दुर्लभा पूर्वपदे च प्रवर्त्तेत । नच नयनशब्दादेवाणि पश्चादुप शब्देनसमासः । गतेः प्राक् सुबुत्पत्तेः समासात् सुबुत्पत्तिं विना च तद्धितोत्पत्त्ययोगात् । धातूपसर्गयोगस्यान्तरङ्गत्वाच्च प्रज्ञादिष्वपाठाच्च । तस्माण्णिजन्ताल्ल्युडित्येव युक्तम् ॥ तथाच भर्तृहरिः—

निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते इति ॥

णेरणाविति सूत्रे भाष्यादौ स्फुटमेतत् ॥ अत्र समासे गुणभूतस्यापि उत्तरत्रानुषङ्गेण गर्भादेकादशे गर्भादेव द्वादशे इति च बोध्यम् ॥

तथाच मनुः—

गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विश इति ॥

काम्योपनयने कालविशेषमाह मनुरेव—

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।

राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे ॥

विष्णुः—

षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे ।

अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः ॥

इदं च त्रैवर्णिकाविषयं तथाच संग्रहे—

सप्तमे वाष्टमे वर्षे नवमे दशमे तथा ।

एकादशे द्वादशे वा ह्युपनेया द्विजातयः ॥

ब्रह्मवर्चसमायुष्यं तेजोऽन्नाद्यं तथेन्द्रियम् ।

पशून् कामयमाना वै प्राप्नुवन्ति यथाक्रममिति ॥

आपस्तम्बोऽपि—सप्तमे ब्रह्मवर्चसकाम,मष्टमे आयुष्कामं, नवमें तेजस्कामं, दशमेऽन्नाद्यकाम, मेकादशे इन्द्रियकामं, द्वादशे पशुकाम, मिति । गुरुशुक्रादिशुभग्रहबलालाभे प्रकारान्तरेण वा प्रतिबन्धे सती

पञ्चमाब्दमारभ्याषोडशादाद्वाविंशादाचतुर्विंशाद्विप्रादीनां क्रमेण कार्यम्। अत ऊर्ध्वं सावित्रीपतिता व्रात्याः स्युस्तेषामचीर्णप्रायश्चित्तानामुपनयनं न कार्यमित्याहुर्मूले।

आषोडशाच्चाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
सावित्रीपतिता ऊर्ध्वं विज्ञेयास्ते द्विजाधमा इति॥

अत्र वत्सरादित्यनन्तरमुपनेया इत्यस्यानुषङ्गः। द्विजाधमा इति। नचेत्प्रायश्चित्तमनुतिष्ठन्तीति भावः।

तथाच याज्ञवल्क्यः—

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥
अतऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतो रिति॥

व्रात्यस्तोमाख्ये क्रतौ कृते सति तु उपनयनाधिकारिणो भवन्तीत्यर्थः॥

ज्योतिर्नृसिंहेण विशेष उक्तः—

उत्तरायणगे सूर्ये कर्त्तव्यं त्वौपनायनमिति॥

गृह्योपि—उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहा इति। श्रुतिः— वसन्ते ब्राह्मणमुपनयीत।

वराहः—

माघादिपञ्चमासेषु मेखलाबन्धनं शिशोः।
ज्येष्ठमासे न ज्येष्ठस्य जन्ममासे न सर्वेषाम्॥

बृहस्पतिः—

शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विनेति।
भृगोराङ्गिरसो मौढ्ये कर्त्तव्यं नोपनायनमिति च॥

भृगुः शुक्रः। अङ्गिराः गुरुः।

ज्योतिर्नृसिंहोपि—

तृतीया पञ्चमी षष्ठी द्वितीया वापि सप्तमी।

पक्षयोरुभयोश्चैव विशेषेणैव पूजिताः ॥
कृष्णे त्रयोदशीं केचित् इच्छन्ति मुनयस्तथा ॥
संग्रहे—
रिक्ताष्टमीपर्वतिथीननध्यायांश्च वर्जयेदिति ॥
अनध्याया नित्या नैमित्तिकाश्च । अत्र क्वचित्प्रतिप्रसवमाह भरद्वाजः—
या चैत्रवैशाखसिते तृतीया माघे च सप्तम्यथ फाल्गुनस्य ।
कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैरिति ॥
वसिष्ठसंज्योतिःफलोदये—
ज्येष्ठे द्वितीयासितजाश्विने तु दशम्यथो माघासिता चतुर्थी ।
सद्वादशी सामगवन्हृचाभ्यां त्याज्यास्त्विमाःसोपपदा व्रतादाविति॥
अपरार्के—
नष्टे चन्द्रेऽष्टमे शुक्रे निरंशे चैव भास्करे ।
कर्त्तव्यं नोपनयनं नानध्याये गलग्रहे ॥
निरंशलक्षणम्—
राहोः प्रथमराशिस्थो निरंशः सूर्य उच्यते इति ।
गलग्रहश्च ज्योतिर्निबन्धे—
त्रयोदशीचतुष्कं तु सप्तम्यादित्रयं तथा ।
चतुर्थी चैव सम्प्रोक्ता अष्टावेते गलग्रहा इति ॥
गलग्रहस्यापवादमाह भरद्वाजः—
विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
उपनीतस्त्वनध्याये पुनः संस्कारमर्हतीति ।
वसन्ततौं ऋत्वन्तरीयशुक्लपक्षे च गलग्रहो न दोषायेति फलितोर्थः॥
संस्कार्यविशेष उक्तः स्मृत्यर्थसारे—
पण्ढान्धबधिरस्तब्धजडगद्गदपङ्गुषु ।
कुब्जवामनरोग्यार्त्तशुष्काङ्गिविकलाङ्गिषु ॥
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।

ध्वस्तपुंस्त्वेपि चैतेषु संस्काराः स्युर्यथोचितम् ॥

मूकोन्मत्तौ न संस्कार्यावित्येके । कर्मस्वनधिकारात्पातित्यं नास्ति तदपत्यं संस्कार्यम् । अन्ये संस्कार्या इत्याहुः ॥ होमं तावदाचार्यः करोति । उपनयनं च विधिना आचार्यसमीपनयनं वा अग्निसमीपनयनं वा सावित्रीवाचनं वा । अन्यदङ्गं यथाशक्ति कार्यम् । विवाहश्च कन्यास्वीकारः, अन्यदङ्गमिति ॥

केचिदाहुर्द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ ।
अमृते च मृते पत्यौ जारजौ कुण्डगोलकाविति ॥

ब्रह्मपुराणे—पण्ढादीनुपक्रम्योक्तम् ।

ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ।
संस्कारमन्त्रहोमादीन् करोत्याचार्य एव तु ॥
उपनेयांश्च विधिवदाचार्यः स्वसमीपतः ।
आनीयाग्निसमीपं वा सावित्रीं संस्पृशन् जपेत् ॥
कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेदिति ।

अत एव तेषां विवाहप्रसक्तिसत्त्वात्तत्कनीयसां परिवेदनदोषापवादो वक्ष्यते ।

उपनेतृक्रममाह वृद्धगर्गः—

पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपायनेऽधिकारी स्यात्पूर्वाभावे परः परः ॥

तथा—

पितैवोपनयेत्पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥

आश्वलायनः—

एकमातृप्रसूतानां कन्या वा पुंसकौ तयोः ।
सहोद्वाहं न कुर्वीत तथैव व्रतबन्धनमिति ॥

अधिकारसिद्धये प्रायश्चित्तमाह विष्णुः—

कृच्छ्रत्रयं चोपनेता त्रीन् कृच्छ्रांश्च वटुश्चरेत् ।
सावित्रीमभ्यसेदग्निपवित्राणि च संस्मरन् ॥
सहस्रं द्वादशाख्यं च सावित्रीं प्रजपेत् बुधः ।
स्वाधिकारार्थमेवास्य प्रदानार्थं हि तत्स्मृतमिति ॥

तथा

नान्दीश्राद्धे कृते पश्चादनध्यायस्त्वकालिकः ।
मौञ्जीबन्धं ततः कुर्याद्वेदारम्भं न कारयेत् ॥

अकालिकः गर्जनिर्घातादिनिमित्तकः यदि भवेदिति शेषः । आश्वलायनानामुपनयनदिने वेदारम्भाभावाद्वेदारम्भाकरणं यजुर्वेदिविषयम् । आश्वलायनस्तु वृद्धिश्राद्धदिनाद्दिनषट्कमध्ये मुहूर्त्तान्तरे सति तेनैव नान्दीश्राद्धेन तत्र उपनयनं कुर्यात् । तदुक्तम्–

एकविंशत्यहो यज्ञे विवाहे दश वासराः ।
त्रिषट् चौलोपनयने नान्दीश्राद्धं प्रचक्षत इति ।

तदूर्ध्वं तु मुहूर्त्ते श्राद्धान्तरपूर्वकमुपनयनं यथाकालं कुर्यात् । यदा गर्जाद्यनध्यायशङ्का तदा नैव अनुप्रवचनीयचरुं श्रपयेत् । होमस्तु सायंसंध्योत्तरमेव । तथा सति नानध्यायदोषः । तदुक्तं संग्रहे–

न संध्यागर्जिते काले न वृष्ट्युत्पातदूषिते ।
ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्त्तते ॥

तथा

ब्रह्मौदनं पचेदन्हि पक्वमन्नं न दुष्यति ॥

तथा चोपनयनानुप्रवचनीयचरुश्रपणयोरन्तरानध्याये पुनरुपनयम् । पुनरुपनयने निमित्तान्तराण्याह मनुः–

अज्ञानात्प्राश्य विण्मूत्रं सुरां संस्पृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातय इति ॥

विष्णुरपि–

विड्वराहग्रामकुक्कुटगोमांसभक्षणेषु च प्रायश्चित्तान्ते पुनः संस्कारं

कुर्यादिति ।

तथा बौधायनः—

सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हतीति ॥

शाखारण्डोपि स्वशाखाग्रहणकाले पुनरुपनेयः । इममर्थं पुनरुपनयने विधिविशेषञ्च कारिकाकार आह—

वेदान्तरमधीत्यैव ऋग्वेदं ये त्वधीयते ।
उपनीतिरियं तेषामलङ्करणवर्जिता ॥
यद्वैतदुपनीतस्य प्रायश्चित्तं यदा पतेत् ।
कृताकृतं च वपनं मेधाजननमेव च ॥
मेधाजननसद्भावे व्रतचर्या भवेदिह ।
अनुप्रवचनीयश्च तदभावे द्वयं नच ॥
परिदानं न कार्यं स्यान्निमित्तानन्तरं त्विदम् ।
पूर्वस्याः वाचयेत्स्थाने तत्सवितुर्वृणीमहे इति ॥

पूर्वस्याः गायत्र्याः । तथाच गृह्यम्—तत्सवितुर्वृणीमहे इति सावित्रीमिति ॥

## अथ ब्रह्मचारिधर्माः ।

यमः—

मेखलासहितं दण्डमुपवीतं च नित्यशः ।
कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥
अग्नीन्धनं भैक्षचर्यामधःशय्यां गुरोर्हितम् ।
आसमावर्त्तनात्कुर्यात्कृतोपनयनो द्विज इति ॥

यद्यपि कौपीनं कुत्सित इति पाणिनिसूत्रे कौपीनशब्दस्य लिङ्गे शक्तिरुक्ता तथापि तदाच्छादनवाससि निरूढलक्षणेति भाष्यादौ स्थितम् ॥ उपाकरणपर्यन्तं वटुः सावित्र्या ब्रह्मयज्ञकामिति कारिकावचनात् ।

मनुः—

वर्जयेन्मधुमांसं च गन्धमाल्यरसान् स्त्रियः ।
शुक्तानि चैव सर्वाणि प्राणिनां चैव हिंसनम् ॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधं च लोभं च नर्त्तनं गीतवादनम् ॥
द्यूतं च जनवादं च परिवादं तथाऽनृतम् ।
एकः शयीत सर्वत्र न रेतः स्कन्दयेत्कचित् इति ॥

मधु क्षौद्रमिति विज्ञानेश्वरः । मांसं छागादेरपि । रसो हर्षः । शुक्तानि निष्ठुरवाक्यानि । उपानद् यानस्याप्युपलक्षणम् ॥ यानोपानच्छत्रेत्यादि गौतमवचनात् । नारायणस्तु— रसा उत्कटरसा गुडादयः शृङ्गारादयो वा । यद् द्रव्यमनम्लं सत् कालवशेन द्रव्यान्तरयोगेन वा अम्लतां गतं तच्छुक्तम् । सर्वाणि शुक्तानि दध्यादीन्यपि ॥ नत्वत्र शुक्ता वागिति व्याचख्यौ ॥

याज्ञवल्क्योपि—
भास्करालोकनाऽश्लीलपरिवादांश्च वर्जयेदिति ।

गौतमोपि— नादित्यमीक्षेतेति ॥ ब्रह्मचारिणोऽयं सदा आदित्यदर्शनप्रतिषेधः । स्नातकस्य तु नेक्षेतोद्यन्तमादित्यमित्यादिमनूक्तो विशेषनिषेधो बोद्धव्य इति हरदत्तः । विज्ञानेश्वरस्तु—उदितास्तमितादित्यविषयकतामेव ब्रह्मचारिणामपि मन्यते । तदुत्सर्गे त्विति सूत्रे मीमांसाग्रन्थेष्वप्येवमेव स्थितम् ।

कूर्मपुराणे—
नादर्शं चैव वीक्ष्येत नाचरेद्दन्तधावनम् ।
गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत, न कामत इति ॥

गुरूच्छिष्टमिति । पितुर्ज्येष्ठभ्रातुश्चेत्यर्थः । तथाचापस्तम्बः— पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यमिति ॥

गुरोर्गुरौ सन्निहिते गुरुवद् वृत्तिमाचरेत् ।
गुरुपुत्रेषु पत्नीषु गुरोश्चैव स्वबन्धुषु ॥

इति वचनात् । यद्यपि भेषजार्थमिति । तदेकापनोद्ये व्याधौ माक्षिकं मांसादि च गुरूच्छिष्टं भक्षणीयमित्यर्थः । इदं च माधवीये स्मृत्यर्थसारादौ च स्फुटम् ।

वशिष्ठोपि—स चेद्व्याधीयीत कामं गुरोरुच्छिष्टशेषमौषधार्थं सर्वं प्राश्नीयादिति । व्याधीयीत व्याधिमान् स्यादिति मदनपारिजाते । गुरुवद् गुरुपुत्रेषु वर्त्तितव्यामिति तदुच्छिष्टभक्षणमपि प्राप्तं तथापि तन्निषेधति मनुः—

उन्मर्दनं तु गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्याद्गुरुपुत्रस्य पादयोश्चावनेजनम् ॥

तथा

अभ्यञ्जनं स्नापनं च गात्रोद्वर्त्तनमेव च ।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनमिति ॥

व्यासः—

जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि ।
यच्च शिष्येण कर्त्तव्यं यच्च दासेन वा पुनः ॥
कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत्तु पार्श्वत इति ॥

प्रचेताः—

ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् इति ॥

हारीतः—लौहे मृन्मये वा पात्रे भुञ्जीतेति ॥

मेखलायां विशेषमाह मनुः—

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवीति ॥

मुञ्जास्तृणविशेषाः तत्कृता मौञ्जी । मूर्वा लताविशेषस्तत्प्रभवा मौर्वी ।

मुञ्जाभावे तु कर्त्तव्या कुशाश्मन्तकबल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥

अत्र ग्रन्थिविकल्पः प्रवरसंख्याभेदेन व्यवस्थितः ।

दण्डानाह मनुः—

ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।

पैप्पलोदुम्बरौ वैश्यो दण्डानर्हति धर्मत इति ॥

अनुकल्पमाह यमः—

एतेषामप्यभावे तु सर्वेषां सर्वयज्ञिया इति ।

दण्डपरिमाणमाह मनुः—

केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।

ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विश इति ॥

गौतमोऽपि—मूर्द्धललाटनासाग्रप्रमाण इति ॥

दण्डलक्षणमाह मनुः—

ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।

अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिता इति ॥

यज्ञोपवीतमाह मनुः—

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।

शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम् ॥

शणसूत्रमयं क्षौमम् । पैठीनसिः—कार्पासमुपवीतं ब्राह्मणस्य क्षौमं राजन्यस्य आविकं वैश्यस्येति ॥ क्षुमा अतसी तस्याः शणः क्षौमम् । उक्तोपवीतानामलाभे गोवालादिकं ग्राह्यम् ॥

तदाह देवलः—

कार्पासक्षौमगोवालशाणवल्कतृणादिकम् ।

सदा संभवतः कार्यमुपवीतं द्विजातिभिरिति ॥

ऋष्यशृङ्गः—अपिवाससी यज्ञोपवीतार्थे कुर्यात्तदभावे त्रिवृता सूत्रेणेति । तत्र नवतन्तुकं कार्यम् ।

तदाह देवलः—

यज्ञोपवीतं कुर्वीत सूत्रेण नवतन्तुकम् ।

नवतन्तुकं नवगुणम् ।

कात्यायनः–

त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतमिति ।

ऊर्ध्ववृतलक्षणमाह संग्रहकारः—

करेण दक्षिणेनोर्ध्वं गतेन त्रिगुणीकृतम् ।

वलितं मानवे सूत्रं शास्त्र ऊर्ध्ववृतं स्मृतमिति ॥

ऊर्ध्वं स्थितेन दक्षिणेन करेण यद्वलितं तदूर्ध्ववृतमित्यर्थः ॥

कात्यायनः–

त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यत इति ।

यज्ञोपवीतपरिमाणमाह सएव–

पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् ।

तद्धार्यमुपवीतं स्यान्नातिलम्बं नचोच्छ्रितमिति ॥

देवलः—

स्तनादूर्ध्वमधो नाभेर्न कर्त्तव्यं कथञ्चन ।

स्तनादूर्ध्वं श्रियं हन्ति नाभ्यधस्तात्तपःक्षयः ॥

एतच्च न प्रमाणपरम् । अपिधारणपरेण परमतो न पूर्ववचनेन विरोध इति गौडनिबन्धे ॥

धारणीयोपवीतसंख्यामाह भृगुः—

उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते ।

एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः ॥

एतच्च नित्याभिप्रायम् ॥ बहुषु कामनाश्रवणात् ॥

तदाह देवलः–बहूनित्यायुष्कामस्येति ॥

स्मृत्यन्तरे–

यज्ञोपवीते द्वे धार्ये दैवपित्र्योश्च कर्मणि ।

तृतीयमुत्तरीयार्थे आयुष्कामो बहून्यपीति ॥

कात्यायनः, भृगुश्च–

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतमिति ॥
अत्र पूर्वार्द्धेन पुरुषार्थता अपरार्द्धेन क्रत्वर्थता लभ्यते ।
उपवीतधारणमन्त्रमाह देवलः-
यज्ञोपवीतमिति वा व्याहृत्या वापि धारयेदिति ॥
शिखायां विशेषमाह कौथुमिः-
शिखिवच्छिखया भाव्यं ब्रह्मावर्त्तनिबद्धया ।
प्रदक्षिणं द्विरावर्त्य पाशान्तः संप्रवेशनात् ॥
प्रथमं द्विगुणं कृत्वा ब्रह्मावर्त्तमितीरितम् ।
गायत्रीजपनं कुर्याच्छिखायाश्च निबन्धने इति ॥
उपवीते विशेषमाह देवलः-
सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम् ।
सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत् ॥
विच्छिन्नं चाप्यधोयातं भुक्त्वा निर्मितमुत्सृजेदिति ॥
यज्ञोपवीतादीनां त्रोटनादौ प्रतिपत्तिमाह मनुः—
मेखलामाजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रत इति ॥

## अथोत्तरीयम् ।

मनुः—
कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥
वास्तं छागीयम् । कार्ष्णादीन्युत्तरीयाणि शाणादीन्यन्तरीयाणि।
तथाच शङ्खः —कृष्णरुरुबस्ताजिनान्युत्तरीयाणीति । वासिष्ठोऽपि— कृष्णाजिनमुत्तरीयं ब्राह्मणस्य रौरवं राजन्यस्य । गव्यं वस्ताजिनं वा वैश्यस्येति । तथा पारस्करः— ऐणेयमाजिनमुत्तरीयं ब्राह्मणस्य रौरवं राजन्यस्य । आजं गव्यं वा वैश्यस्य । सर्वेषां वायव्य-

मिति । यद्यप्येण्या ढगिति स्त्रीप्रत्ययान्तादेव ढञ् विहितः
तथा चामरः–
ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिपु इति ॥
तथापि एणचर्मणा सह एणीचर्मणि विकल्प इति केचित् ।
यमः– सर्वेषां वा रौरवाजिनमिति । रुरुश्चित्रमृगः ।
आग्नेये–
मार्गवैयाघ्रवास्तानि चर्माणि ब्रह्मचारिणामिति ॥
वस्तश्छागः ।
अन्तरीयाण्याह गौतमः–वासांसि शाणक्षौमचीरकुतपाः सर्वेषामिति। शणस्य विकारः शाणः। क्षुमा अतसी तद्विकारः क्षौमम् । श्वेतपट इत्यन्ये। दर्भादिनिर्मितं चीरम् । ऊर्णानिर्मितः कम्बलः कुतपः । चत्वार्येतानि वासांसि सर्वेषामिति हरदत्तः ।
पक्षान्तरमाह गौतमः– कार्पासं वा अविकृतमिति । अविकृतं कुसुम्भादिना अरक्तम् । वासः सर्वेषामित्यनुवर्तते । मतान्तरमाह गौतमः– काषायमप्येके । तत्रापि नियममाह सएव । वार्क्षं ब्राह्मणस्य ॥ माञ्जिष्ठहारिद्रे इतरयोः । वृक्षकषायेण रक्तं वार्क्षं ब्राह्मणस्य । माञ्जिष्ठ्या रक्तं हारिद्र्या च रक्तमितरयोः क्षत्रियवैश्ययोरित्यर्थः ॥
मनुः–
वसीरन्नानुपूर्व्येण शणक्षौमाविकानि चेति ॥
वासिष्ठः—शुक्लमहतं वासो ब्राह्मणस्य कार्पासं माञ्जिष्ठं क्षौमं क्षत्रियस्य पीतं कौशेयं वैश्यस्येति ॥
अहतलक्षणमाह प्रचेताः—
ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनमिति ॥

अथाग्नीन्धनम्—

तदकरणे प्रत्यवायमाह हारीतः–

अकृत्वा भैक्ष्यचरणं असमिध्य च पावकम् ।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेदिति ॥

पावकसमिन्धनं समिद्धोमः । सायंप्रातः समिधमादध्यादिति गृह्य-वचनात् ॥ केचित्तु सायमेवेच्छन्ति । तथाच लौगाक्षिः— सायमेवा-ग्निमिन्धत इत्येके इति ॥

तत्र समिल्लक्षणमाह कात्यायनः—

नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका नोना तथा न स्याद्विशाखिका ॥

वायुपुराणे—

पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदभावेऽर्कवैतसाविति ॥

अग्निकार्याकरणे प्रायश्चित्तमुक्तमृग्विधाने—

मानस्तोके जपेन्मन्त्रं शतसंख्यं शिवालये ।
अग्निकार्यं विना भुक्तौ न पापं ब्रह्मचारिण इति ॥

तत्र कालमाह कारिकाकारः—

अग्निकार्यं च भिक्षायाः प्रागूर्ध्वं वा तदिष्यत इति ॥

याज्ञवल्क्यः—

प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु ।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥
संध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ।
अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपीति ॥

## अथोपसंग्रहणाभिवादनप्रपञ्चः ।

तत्र मनुः—

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥

असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत् ।
भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोभिवादने इति ॥

अमुकगोत्रो देवदत्तशर्माहं भो अभिवादयइत्युक्त्वा कर्णौ स्पृष्ट्वा दक्षिणोत्तरपाणिभ्यां गुरोः पादौ गृहीत्वा शिरोवनमनमुपसंग्रहणम् । अभिवादने तु पादग्रहणं नास्ति ॥ पादस्पर्शनमात्रमपि कृताकृतामिति स्मृत्यर्थसारः । अभिवादनवाक्ये चाभिवादये इत्यस्यान्ते प्रयोगो गाय-त्र्यभिवादनमात्रविषयकः । तथाच तदेवाधिकृत्याह भरद्वाजः—

सगोत्रनामशर्माहं भवत्यन्तेभिवादये ।
इत्येतज्ज्ञापणं यत्तन्मन्त्रेस्यादभिवादनमिति ॥

अन्यत्र अभिवादये देवदत्तनामाहमस्मि भो इति प्रयोक्तव्यम् ॥

तदाह मनुः—

अभिवादात्परं विप्रो ज्यायांसमभिवादयन् ।
असौनामाहमस्मीति स्वनाम परिकीर्त्तयेत् ॥
भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोभिवादन इति ॥

अभिवादात्परम् अभिवादयेशब्दस्योपरीत्यर्थ इति पारिजात-कारादयः

मनुः—

निषेकादीनि कर्माणि यः करोति यथाविधि ।
संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥
अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तयेति ॥

याज्ञवल्क्यः—

स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ।
एते मान्या यथा पूर्वमेभ्यो माता गरीयसीति ॥

गौतमस्तु मतान्तरमप्याह—आचार्यः श्रेष्ठो गुरूणां मातेत्येके इति। गुरूणां पित्रादीनां मध्ये आचार्यः उक्तलक्षणः श्रेष्ठः ॥ स हि विद्यातस्तं जनयति । तच्च श्रेष्ठं जन्म तेनानेकगुरुसमवाये स एव प्रथमं पूज्यः। एके त्वाचार्यो माता पूज्येत्याहुः ॥

तथाच वसिष्ठः—

उपाध्यायाद्दशाचार्या आचार्याणां शतं पिता ।
पितुर्दशशतं माता गौरवेणातिरिच्यते इति ॥

मातेत्यादि द्विरुक्तिरध्यायपरिसमाप्त्यर्थमिति हरदत्तः।

मनुः —

उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।
ब्रह्मस्य जन्मनः कर्त्ता स्वधर्मस्य च शासिता ॥
बालोपि विप्रो वृद्धस्य पिता भवति धर्मतः ।
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ॥
असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ।
मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा ॥
भ्रातुर्भार्योपसंग्राह्या सवर्णाऽहन्यहन्यपि ।
विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः ॥
पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि ॥
मातृवद् वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥

माता ताभ्यइति । तेन तासामुपकारे क्रियमाणे यदि मातुरनिष्टं स्यात्तदा न कार्यमित्युक्तं भवति इति नारायणः।

त्र्यब्दपूर्वं श्रोत्रियाणामल्पेनापि स्वयोनिषु ॥

त्र्यब्दपूर्वं कालोत्पन्नतया यो ज्येष्ठः तद्विषयत्वादभिवानेऽपि त्र्यब्दपूर्वम् । त्रिवर्षपूर्वः श्रोत्रियोऽभिवाद्य इति फलितोर्थः । स्वयोनिषु । ज्ञातिबन्धुषु । स्वल्पेनापि कालेन एकदिनपूर्वत्वेनापि ज्येष्ठतायामभिवादनमित्यर्थः । तदुक्तं वयस्यः समानेऽहनि जात इति । संध्या-

कालाभिवादने तु विशेषमाह पारिजाते यमः—

ज्यायानपि कनीयांसं संध्यायामभिवादयेत् ।
विना पुत्रं च शिष्यं च दौहित्रं दुहितुः पतिमिति ॥

अभिवादनवाक्ये विशेषमाह मनुः—

नामधेयस्य ये केचिदभिवादं न जानते ।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव चेति ॥

नामधेयस्याभिवादं नामधेयसहिताभिवादनवाक्यार्थं संस्कृतानभिज्ञतया धर्मशास्त्राज्ञानेन च ये न जानते विशिष्य न जानन्ति तान् प्रत्यभिवादनवाक्यज्ञानपि अहमित्येव ब्रूयात् । अभिवादनवाक्यरूपशब्दस्यैवानेन निवृत्तिः सजातीयत्वात् । पादोपसंग्रहणस्य त्वनिवृत्तिः । तथा अभिवादनवाक्यार्थं जानाना अपि मातृष्वस्रादिस्त्रियोऽहमित्येव वदेयुः इति नारायणो व्याचख्यौ । संस्कृतादिज्ञानवतोपि प्रत्यभिवादनप्रकाराज्ञानेऽनभिवाद्यतामाह मनुः—

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥

प्रत्यभिवादनं अभिवादनप्रतियोगिवाक्यम् । तल्लक्षणं च मनुराह-

' आयुष्मान् भव सौम्ये ' ति वाच्यो विप्रोभिवादने ।
अकारश्चास्य नाम्नोन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥

आयुष्मान्भव सौम्य शिवशर्म३न् अ इत्यादि वाच्यमित्यर्थः । यदा तु पूर्वाक्षरं संध्यक्षरं भवति तदा एकारस्य आइ ऐकारस्य चैवम्, ओकारस्य औकारस्य च आउ इत्यादेशं कुर्यात् । हराइअ भटाउअ इति यथा । तथाच पाणिनिः-एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुताविति अधिकृत्य प्रत्यभिवादे शूद्र इति आह । वसिष्ठश्च—आमन्त्रिते स्वरोऽन्त्यः प्लवते । संध्यक्षरमप्रगृह्यम् । आयावुभावं चापद्यते इति । इदं च वाक्ये संहिताया अनित्यत्वादुक्तम् । संहिताविवक्षायां तु तयोर्य्वावचि संहितायामित्यस्य प्रवृत्तौ, हराय पटाव इत्यादि

योध्यमिति हरदत्तः । माधवाचार्यास्तु ॥ नाम्नोन्ते स्थित आकारः प्लुतो वाच्य इत्यर्थः । आकार इति अच उपलक्षणम् ॥ पूर्वमक्षरं यस्य स तथा । अक्षरमिह व्यञ्जनं सामार्थ्यात् । तथाच आयुष्मान् भव सौम्य देवदत्ता इति प्रयोगः । न त्वकारोप्यपूर्वो विधीयते वाक्यभेदापत्तेरित्याहुः। इदमेव व्याख्याद्वैधमभिप्रेत्य स्मृत्यर्थसारेपि प्रत्यभिवादनवाक्यं द्वेधा दर्शितमिति दिक् । यस्तु त्रिवर्षपूर्वत्वादिगुणशून्यत्वादनभिवाद्यस्तस्मिन् दृष्टे यत्कार्यं तदाह मनुः—

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव चेति ॥

ब्राह्मणादीनां स्वस्वजातीये दृष्टे स्वस्वजात्युक्तं तथा स्वस्वावरजातीये तत्तज्जात्युक्तं न त्वेतदवरजातेरुत्तमं प्रति इति नारायणः । प्रत्यभिवादनाभिधानानन्तरमभिवादितेन गुर्वादिना एतत्प्रष्टव्यमित्यपि केचिदाहुः ॥

मनुः—

न वाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।
भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित् ॥
परपत्नी तु या स्त्री स्यादसंबद्धा तु योनितः ।
तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च ॥

यावद्दीक्षासमाप्तिः तावदेव नाम न ग्राह्यमिति नारायणः । ननु परपत्नीति व्यर्थः स्वपत्नीव्यवच्छेदस्य गार्हस्थ्य एव संभवेन ब्रह्मचारिप्रकरणे ऽनुपयोगादिति चेत् सत्यम् । एतदेव ज्ञापकं एतत्प्रकरणस्था विधयः स्नातकादिषु संभविनस्तैरप्यनुष्ठेया इति नारायणः । अत एव स्मृत्यर्थसारेपि गुर्वादय उपसंग्राह्या इत्याद्युक्त्वा समावृत्तेन चेत्युक्तम् । तथाच गौतमेनापि तृतीयेऽध्याये उक्तम् । उत्तरेषां चैतदविरोधीति । एतद् ब्रह्मचारिणामुक्तम् । द्यूतनिषेधादि उत्तरेषामप्याश्रमाणां भवति । विशेषवचनैर्यन्न विरुध्यते इति हरदत्तः । अत्र हरदत्ताकृतमेव व्या-

ख्यानान्तरम् । उत्तरेषां यद्धर्मजातं तदप्येतस्य बोध्यमिति । तेनाविरुद्धा गृहस्थादिधर्मा अपि ब्रह्मचारिणां प्राप्यन्ते । तथा स्मृत्यर्थसारे--

मत्तं प्रमत्तमुन्मत्तं धावन्तमशुचिं नरम् ।
वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ॥
अभ्यक्तशिरसं स्नानं कुर्वन्तं नाभिवादयेत् ।
जपयज्ञगणस्थं च समित्पुष्पकुशानलान् ॥
उदपान्याघ्र्यभैक्षान्नं वहन्तं नाभिवादयेत् ।
अभिवाद्य द्विजश्चैतान् अहोरात्रेण शुध्यति ॥
देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम् ।
नमस्कारं न कुर्याच्चेदुपवासेन शुध्यति ॥
सर्वे चापि नमस्कार्याः सर्वावस्थासु सर्वदा ।
आशीर्वाच्या नमस्कार्यैर्वयस्यस्तु पुनर्नमेत् ॥
स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः ॥ इति ।

याज्ञवल्क्यः--

गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ।
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ॥

विष्णुपुराणेपि--

उभे संध्ये रविं भूप ! तथैवाग्निं समाहितः ।
उपतिष्ठेत्तथा कुर्याद् गुरोरप्यभिवादनम् ॥
तेनैवोक्तः पठेद्वेदं नान्यचित्तः पुरः स्थित इति ॥

वेदमिति । स्वशाखामित्यर्थः । तदाह वसिष्ठः--

पारम्पर्यागतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथेति ॥

सपरिबृंहणः साङ्गोपाङ्गः । स्वशाखापरित्यागं स एव निषेधति--

स्वीयशाखोज्झिता येन ब्रह्म तेनोज्झितं परम् ।
ब्रह्महैव स विज्ञेयः सद्भिर्नित्यं विगर्हित इति ॥

स्वशाखाध्ययनानन्तरं तु शाखान्तराध्ययनेऽभ्युदयः ॥ तथाच वासिष्ठः—

अधीत्य शाखामात्मीयां परशाखां ततः पठेदिति ।

तथा कूर्मे—

योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः ।
स वै मूढो न संभाष्यो वेदबाह्यो द्विजातिभिः ॥
न वेदपाठमात्रेण संतुष्टो वै भवेद् द्विजः ।
पाठमात्रावसायी तु पङ्के गौरिव सीदति ॥
योधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतान्न मपद्यते इति ॥

मूले—

योऽनधीत्य द्विजो मोहादन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥
अनभ्यासेन वेदानामाचारस्य च लङ्घनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥
पठित्वा बोधयेदर्थं वेदानां कर्मसिद्धये ।
पाठमात्रावसायी तु पङ्के गौरिव सीदति ॥
एवं ज्ञानं क्रियाहीनं हतास्त्वज्ञानतः क्रियाः ।
अपश्यन्नन्धको दग्धः पश्यन्नपि हि पङ्गुक इति ॥

स्फुटोऽर्थः । तथा धर्मशास्त्रमभ्येतव्यम् । तदाह बृहस्पतिः—
वेदमध्यापयेत्पश्चाच्छास्त्रं मन्वादिकं तथेति ॥

नारदः—

पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ ।
भ्राजते न सभामध्ये जारगर्भ इव स्त्रिय इति ॥

मनुः—

नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ ।

न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेदिति ॥

न स्वप्यादित्यर्थः । शिक्षायाम्—

हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ।

ऋग्यजुः सामभिर्दग्धो वियोनिमाधिगच्छतीति ॥

व्यासः—

अनध्यायेष्वधीतं यच्च शूद्रस्य संनिधौ ।

प्रतिग्रहनिमित्तं च नरकाय तदुच्यते इति ॥

अत्र यद्यपि संपूर्णशास्त्राध्ययनमावश्यकं तथा आपत्काले एकदेशाध्ययनेनापि निर्वाहः । तदाह मनुः—

यथोदितेन विधिना नित्यं छन्दस्कृतं पठेत् ।

ब्रह्म छन्दस्कृतं चैव द्विजो युक्तो ह्यनापदीति ॥

छन्दस्कृतं मन्त्रभागं । छन्दोबद्धत्वात् ब्रह्म इति ब्राह्मणमित्यर्थः मन्त्राणां साक्षात्कर्माङ्गतयान्तरङ्गत्वात् । यथाविधि गृहीतानामेव च विनियोगार्हत्वात् । ब्राह्मणस्य तूपदेशमात्रार्थतया बहिरङ्गत्वादशक्तेन मन्त्रमात्रमध्येयं शक्तेन तूभयमपीत्यर्थः ॥ पाराशरादावेतत्स्पष्टमेव ॥

अथानध्यायाः ।

ते च द्विविधा नित्या, नैमित्तिकाश्च । तत्र नित्यानाह हारीतः—

प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः ।

श्वोनध्यायेऽद्यशर्वर्यां नाधीयीत कदाचनेति ॥

नैमित्तिकानाह याज्ञवल्क्यः—

श्वक्रोष्टुगर्दभोलूकसामवाणार्त्तनिःस्वने ।

अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥

देशे शुचावात्मनि च विद्युत्स्तनितसंप्लवे ।

भुक्त्वार्द्रपाणिरम्भोन्तः अर्द्धरात्रेऽतिमारुते ॥

पांसुप्रवर्षे दिग्दाहे संध्यानीहारभीतिषु ।

धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥

खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुरिति ॥

साम सामवेदघोषः । तथाच मनुः—

ऋग्वेदो देवदेवत्यो यजुर्वेदश्च मानुषः ।
सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिरिति ॥

तेन ह्यन्नं क्रियत इतिवद्धेत्वर्थवादपुरःसरमाह—

सामध्वनावृग्यजुषी नाधीयीत कदाचनेति ॥

वाणो वंश इति विज्ञानेश्वरः । वाणशब्दे वाणमोक्षाशिक्षाद्याद्युत्पन्ने शब्दे इति तु सर्वज्ञनारायणः । एवं वीणादिस्वनेपि वाणभेरीमृदङ्गगदार्त्तशब्देषु इति गौतमवचनव्याख्यावसरे वाणो वीणाविशेषे वाणः शततन्तुरिति महाव्रते दर्शनादिति हरदत्तेनोक्तम् । गर्दः शकटमिति विज्ञानेश्वरः । हरदत्तस्तु गर्त्तशब्देष्विति पठित्वा गर्त्तो रथः । "आरोहथोवरुणामित्रगर्त्तम् स्तुहि श्रुतं गर्त्तसदं युवानमि" त्यादौ गर्त्तो हि रथमुच्यत इति निरुक्ते च तथा दर्शनादिति व्याचख्यौ । अमेध्याः सूतिकादयः । तथाच वसिष्ठः—पतितचण्डालशवसूतिकाश्रावणे तु त्रिरात्रं वाग्यता आसीरन् इति प्रायश्चित्तं स्मरति । विद्युत्संप्लवे । पुनः पुनर्विद्योतमानायां विद्युति । स्तनितसंप्लवे । पुनः पुनर्मेघघोषे च तात्कालिकोऽनध्याय इति विज्ञानेश्वरः । नारायणस्तु—

विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीदिति ।

मूलमुदाहृत्य विद्युदादित्रयस्य संध्याकालादन्यस्मिन् काले मिलितानां त्रयाणामुत्पत्तौ, तथा महोल्कानां च संप्लवे विद्युदाद्यतरेण सह युगपदुत्पादे आकालिकं यत्र काले निमित्तमुत्पन्नं दिनान्तरीयतत्कालोत्पत्तिपर्यन्तम् । एतच्च वर्षाव्यतिरिक्तकाले द्रष्टव्यमिति व्याचख्यौ । युक्तं चैतत् अन्यथा प्रादुष्कृतेष्वग्निषु तु इत्याद्यग्रिममनुग्रन्थाऽसङ्गतिप्रसङ्गादिति संध्यागर्जितेष्वाकालिकोऽनध्यायः । तदाह गौतमः—

स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निष्विति।

आकालिका इत्यनुवर्त्तते। स्तनयित्नुर्मेघशब्दः। प्रादुष्कृतेष्वग्निषु अग्निहोत्रहोमकाले, संध्यायामिति यावत्। प्रत्येकमाकालिका अनध्यायहेतव एते। यस्मिन् काले एते भवन्ति अपरेद्युस्तत्पर्यन्तकाल आकालः तत्र भव आकालिकोऽनध्यायः। एतच्च प्रातःसंध्यास्तनिते। सायंसंध्यास्तनिते तु रात्रिमात्रं नाधीयीत। तदाह हारीतः— सायंसंध्यास्तनिते रात्रिः प्रातःसंध्यास्तनितेऽहोरात्रमिति। इदमप्यपर्त्तौ वर्षाकाले तु प्रातश्चेद् गर्जवर्षादयः तदाहर्मात्रमनध्यायः। तदाह गौतमः— अहन्यृतौ इति सायं तु सूर्योदयपर्यन्तं तदाह मनुः—

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने।
सज्योतिः स्यादनध्याय इति।

सज्योतिरिति। प्रातश्चेद्यावदादित्यदर्शनं सायं तु यावन्नक्षत्रास्थितिः। विद्युत्तु यदि नक्तं दृश्यते न संध्यायां तदाऽपररात्रपर्यन्तमनध्यायः॥ तदाह गौतमः—विद्युति नक्तं चापरात्रादिति। यद्यह्नः तृतीयाद्भागादारभ्य विद्युत्प्रवर्त्तते न संध्यायां नापि नक्तं तदा सर्वरात्रमनध्यायः। एतदाह गौतमः— त्रिभागादिप्रवृत्तौ सर्वं, सर्वमासर्वरात्रम् गौतमः-उल्का विद्युत्समेत्येकेषाम्। यथा विद्युत्यनध्यायस्तथोल्कायामपीत्येकेषां मतमित्यर्थः। गौतमः— स्तनयित्नुरपराह्णे। अपराह्णे यो गर्जः स विद्युत्समः। अपि प्रदोषे। प्रदोषे भवन् स्तनयित्नुर्विद्युत्समः अपररात्रादनध्यायहेतुः सर्वं नक्तमार्द्धरात्रात्। प्रथमाद्रात्रिभागादारभ्य आर्द्धरात्रात्प्रवृत्तः स्तनयित्नुस्सर्वं नक्तमनध्यायहेतुः। अहश्चेत्सज्योतिः। अहनि चेत्स्तनयित्नुर्भवति तदा सकलं दिनमनध्याय इत्यर्थः। इदं च प्रागपराह्णाद्गर्जे सति बोध्यमिति हरदत्तः। एवं च विज्ञानेश्वरोक्तं तात्कालिकत्वमुक्ताविशेषानाक्रान्तेऽपराह्णोत्तरकालीनगर्जे विद्युदाद्यमिलिते बोद्धव्यम्॥ भुक्त्वार्द्रपाणिरिति॥ नाधीयीतेति शेषः। अर्द्धरात्रे मध्यमप्रहरद्वये इति विज्ञानेश्वरः॥ रात्रेर्मध्यमदण्डदशके इति तु उदके

मध्यरात्रे चेति मनुव्याख्यायां नारायणः। निर्णयामृते तु द्वितीययामस्यान्त्यघटिकाद्वयं तृतीययामस्याद्यघटिकाद्वयं चेति चतस्रो घटिका महानिशाख्या अर्द्धरात्रः। तथाच बौधायनः—

महानिशा तु विज्ञेया मध्यं मध्यमयामयोः।

तस्यां स्नानं न कुर्वीत स्वाध्यायं पितृतर्पणमिति॥

मध्यं च कियदित्याकाङ्क्षायां स एवाह—

महानिशा तु विज्ञेया चतस्रो घटिकास्तथेति॥

तथाच दण्डचतुष्टयमेव नाध्येयमिति सिद्धान्तितम्। अतिमारुत इति॥ अत्र विशेषमाह गौतमः— नाधीयीत वायौ दिवा पांसुहरे कर्णश्राविणि नक्तमिति। पांसून् हरतीति पांसुहरः। अपांसुहरे तु दिवा न दोषः। पांसुहरेपि रात्रौ न दोषः। कर्णाभ्यां श्रूयते इति कर्णश्रावी। एवं भूते महाघोषे वायौ नक्तं नाधीयीतेत्यर्थः। एतेन

कर्णश्रावेऽनिले रात्रौ दिवा पांसुसमूहने।

इति मनुरपि व्याख्यातः। सन्ध्यानीहारभीतिष्विति। संध्ययोर्नाधीयीत। तथा नीहारे भीतौ चेत्यर्थः। तथाच मनुः—

नीहारे बाणशब्दे च संध्ययोरेव चोभयोरिति।

धावतइति। त्वरितं गच्छतोऽनध्याय इत्यर्थः। शिष्टे चेति। तदनुज्ञावधिरनध्यायः। तथाच मनुः— अतिथिं चाननुज्ञाप्येति। खरेत्यादि। खरादीनामारोहणे प्रत्येकमनध्याय इति विज्ञानेश्वरः। खरोष्ट्रयुक्तं यद्यानं शकटादीति मनौ नारायणः। इरिणं शून्यम्। उषरं मरुभूमिर्वेति। तात्कालिकान् निमित्तसमकालीनान्। गौतमः— अभ्रदर्शने वापर्त्तौ वर्षर्त्तोरन्यत्र सोदकमेघस्य दर्शने नाधीयीतेत्यर्थः। मूत्रित उच्चारितः। सञ्जातमूत्रेच्छो, निरुद्धमूत्रः। तथा उच्चारितः निरुद्धपुरीषः। कृतमूत्रपुरीषे तु विशेषं वक्ष्यति। वर्षति च। वर्षति देवे तावन्नाधीयीत। एके वलीकं सन्तानम्। वलीकं गृहपटले। तत्र वर्षधारा संतन्यते यथा तथा वर्षति सति नाध्येयमित्येके॥ अन्या

नपि नित्यानाह नारदः—

अयने विषुवे चैव शयने बोधने हरेः ।
अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिष्विति ॥

अयने मकरे, कर्कटे च । विषुवं तुलामेषयोः शयने आषाढ-शुक्लद्वादश्यां बोधने कार्तिकशुक्लद्वादश्याम् । मन्वादिषु—

अश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी तथा ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैते दत्तस्याक्षयकारका

इति मत्स्यपुराणोक्तास्वि त्यर्थः । अत्राष्टमी कृष्णेत्युपादानात् द्वादस्यादयः शुक्ला गृह्यन्ते । युगादिष्विति ।

वैशाखमासस्य च या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥

इति विष्णुपुराणे ।

शुक्ला तृतीया वैशाखे प्रेतपक्षे त्रयोदशी ।
कार्त्तिके नवमी शुक्ला माघे दर्शश्च पूर्णि मेति ।
चोक्तास्वित्यर्थः ।

मनुः—

उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणे स्मृतम् ।
अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिष्विति ॥

उपाकर्मणि त्र्यहमनध्यायः । उत्सर्गे तु त्र्यहम् । पक्षिण्यहोरा-त्राभ्यां सह विकल्प्यते । तथाच मनुरेव—

यथाशास्त्रं च कृत्वैवमुत्सर्गं छन्दसां बहिः ।

विरमेत्पक्षिणीं रात्रीं यद्वाप्येकमहर्निशम् ॥
अतऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि तु सर्वाणि कृष्णपक्षेषु संपठेदिति ॥

उपाकर्मानन्तरं विशेषमाहापस्तम्बः—श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीतेति । प्रदोषे रात्रेः प्रथमयामे । तथाच गौतमः— प्राधीतस्यं च निशायां चतुर्मुहूर्त्तमिति । उपाकृत्याध्येतुं प्रावृत्तः प्राधीतः "आदिकर्मणि क्तः कर्त्तरि च" इति क्तः । तस्य निशायां चतुर्मुहूर्त्तं अष्टौ नाडिका अनध्याय इत्यर्थः । अष्टकास्त्रिति । यद्यपि हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति मार्गशीर्षप्रभृतिमासचतुष्टये कृष्णाष्टमीनामष्टकाश्राद्धदिनत्वं सूत्रे उक्तं तथापि सप्तमी नवमीयुतास्ता एव तिस्रोऽष्टका इह ग्राह्याः । तथाच गौतमः— तिस्रोष्टकास्त्रिरात्रकमन्त्यामेकेइति ॥ त्रिष्वपरपक्षेषु तिस्रोष्टकास्त्रिरात्रमनध्यायहेतवः । तदहः पूर्वेद्युरपरेद्युश्च । एके तु फाल्गुनस्थामपि मन्यन्ते इत्यर्थः । हेमन्तशिशिरयोरित्युदाहृताश्वलायनसूत्रादिति भावः । यद्वा अन्त्यामन्त्यामेवेत्यर्थः । तथाचाश्वलायनः । एकस्यां वेति । आपस्तम्बोपि या माघ्याः पौर्णमास्या उपरिष्टादष्टमी ज्येष्ठी या संपद्यते तामेकाष्टकेत्याचक्षत इति । ऋत्वन्तास्विति । यद्यपि चान्द्रमासघटितानामृतूनामन्त्यासु रात्रिषु अनध्ययनं पर्वत्वादेव सिद्धं तथापि सौरमासद्वयकृतानामृतूनामन्त्ये दिनेऽ नध्ययनसिध्यर्थमिदमिति नारायणः । गौतमः— कार्त्तिकी फाल्गुन्याषाढी पौर्णमासीति । त्रिरात्रमिति वक्ष्यमाणमनुषज्यते । उक्तपौर्णमासीरारभ्य त्रिरात्रमनध्यायः । तथाच तदुत्तरद्वितीयायामपि नाध्येतव्यमिति फलितमिति माधवः । स्मृत्यर्थसारे च—आषाढी—कार्त्तिकीफाल्गुनीसमीपस्थाद्वितीयासु चेति ॥ चातुर्मास्यद्वितीयास्वित्यादिना उदाहरिष्यमाणेन वचनेनाप्ययमर्थो लभ्यते ॥ हरदत्तस्तु—तिस्रः पौर्णमास्योऽनध्यायहेतवः । पौर्णमास्यनन्तरे तु अनध्याये मूलान्तरं द्रष्टव्यमिति व्याचख्यौ ॥ याज्ञवल्क्यः—

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्माणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥
संध्यागर्जितनिर्घाते भूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशं आरण्यकमधीत्य च ॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतुसंधिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये इति ॥

स्वशाखेति ॥ स्वशाखाध्यायिनि प्रेते त्र्यहमनध्याय इत्यर्थः । निर्घाते उत्पातध्वनौ । समाप्य वेदमिति । मन्त्रब्राह्मणयोरन्यतरसमाप्तावित्यर्थ इति विज्ञानेश्वरः । शाखासमाप्ताविति तु हरदत्तः । द्युशब्दो दिवसपर्यायोपीति द्युद्रुभ्यां म इति सूत्रे न्यासकारः । राहुसूतके चन्द्रसूर्योपरागे द्युनिशमनध्यायः । यत्तु त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके इति मनूक्तं तद् ग्रस्तास्तमयविषयमिति विज्ञानेश्वरः । राज्ञः चन्द्रस्य चकारो भिन्नक्रमः तेन सूर्यस्य च राहोः सकाशात् । सूते प्रसवे । राहुच्छायाभिभूतस्य पुनरुद्भव इति यावत् । नतु राज्ञः सूतकमिति नृपमरणमुच्यते । लक्षणाप्रसङ्गात् । विषयस्थे च राजनि प्रेते इति गौतमेन तत्र सज्योतिरनध्याय इत्युक्तत्वाच । यद्यपि तत्र गृहस्थानामाशौचादेवानध्यायः सिद्धस्तथापि ब्रह्मचार्यर्थमिदम् । स्मृत्यर्थसारे तु ग्रहणे रात्रौ मोक्षे त्रिरात्रम् । दिवा मोक्षे त्रिरात्रम् । दिवा मोक्षे त्र्यहमित्युक्तम् । गौतमस्तु—आकाशनिर्घातभूमिकम्पराहुदर्शनोल्काइत्याह । अत्र हरदत्तः—निर्घातोऽशनिपातः राहुदर्शनं ग्रहणमिति व्याचख्यौ । ऋतुसंधिष्विति । ऋत्वन्तासु च रात्रिष्विति प्राग्व्याख्यातेन मनुवचनेन समानार्थमिदम् । विज्ञानेश्वरस्तु—ऋतुसंधिगतासु प्रतिपत्स्विति व्याचख्यौ । भुक्त्वा चेति । इदं चोत्सवविषयकम् । तथाच गौतमः—ऊर्ध्वं भोजनादुत्सवे इति । उपनयनाद्युत्सवे भो-

जनादूर्ध्वं तदहरनध्याय इति हरदत्तो व्याचख्यौ। श्राद्धभोजने तत्प्रतिग्रहे चेति विज्ञानेश्वरः। गौतमस्तु--श्राद्धिनामाकालिकमकृताश्राद्धिकसंयोगेपीति। अत्र हरदत्तः-श्राद्धी श्राद्धकर्त्ता नतु भोक्ता। तत्र श्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रमिति अहोरात्रस्योक्तत्वात्। यद्वा श्राद्धे केवलं भुक्तवन्ते नतु पित्र्याद्यर्थं पात्रतया। तेषां पूर्वोक्तोऽहोरात्रः॥ पित्राद्यर्थानां तु आकालिको बोध्यः। अकृतान्नम् आमान्नं तदेव श्राद्धिकं श्राद्धे दीयमानं तत्प्रतिग्रहेपीत्यर्थ इति। एकोद्दिष्टे तु त्रिरात्रम्। तदाह मनुः-

प्रतिगृह्य द्विजो विद्वान् एकोद्दिष्टस्य केतनम्।
त्र्यहं न कीर्त्तयेत् ब्रह्म राज्ञो राहोश्च सूतके इति॥

इदं च महैकोद्दिष्टविषयमिति स्मृत्यर्थसारे नारायणीये च॥ यदा तु त्रिरात्रादूर्ध्वमपि गन्धलेपावनुवर्त्तेते स तदा तत्क्षयपर्य्यन्तमनध्याय इत्याह मनुः-

यावदेकानुदिष्टस्य लेपो गन्धश्च तिष्ठति।
विप्रस्य विदुषो देहे तावद् ब्रह्म न कीर्त्तयेदिति॥

पशुमण्डूकेति॥ यत्पुनर्गौतमेनोक्तम् श्वनकुलसर्पमण्डूकमार्जाराणां त्र्यहमुपवासो विप्रवासश्चेति, तत्प्रथमाध्ययन एव बोध्यमिति विज्ञानेश्वरः। हरदत्तोपि-

पशुमण्डूकमार्जारश्वसर्पनकुलेषु च।
अन्तरागमने विद्यादनध्यायमहर्निशमिति।

मनुवचनमुदाहृत्य इदं च धारणाध्ययनविषयम्। गौतमीयं तु ग्रहणाध्ययनविषयमित्याह। शक्रपात इति। शक्रध्वजस्यावरोपणादिवसे उच्छ्र्यदिवसे चेत्यर्थः। कूर्मपुराणे-

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च।
कदाचिदपि नाध्येयं कोविदारकपित्थयोरिति॥

गौतमः-नित्यमेके नगरे इति-मतभेदेनानध्ययनमाह। मनुस्तु

व्यवस्थामाह–

नित्यानध्याय एव स्याद् ग्रामेषु नगरेषु च ।
धर्मनैपुण्यकामानामिति ॥

व्रतसमापनमात्रेण विद्यामसमाप्यैव ये स्नास्यन्ति ते विद्यानिरपेक्षब्रह्मचारिधर्ममात्रानुरोधकत्वाद्धर्मनैपुण्यकामाः । ये तु विद्यां समाप्यैव स्नास्यन्ति ते विद्यानैपुण्यकामाः । तत्र प्राथमिकानां ग्रामेऽनध्यायो न तु द्वितीयानामिति **नारायणः** ॥ **मनुः**–

निर्घाते भूमिचलने ज्योतिषां चोपसर्जने ।
एतानाकालिकान् विद्यादनध्यायानृतावपीति ॥

उपसर्जने उपसर्गसूचके विकारे । युद्धच्छिद्रादावित्यर्थः । **गौतमः**–आचार्यपरिवेषणे ज्योतिषोश्चेति । आचार्यौ गुरुशुक्रौ तयोः परिवेषे ज्योतिषोः चन्द्रसूर्ययोश्च परिवेषे च तावत्कालं नाधीयीत । यद्वा परिवेषणमन्नोपहरणम् । आचार्यस्य गुरोः परिवेषणे नाधीयीतेति **हरदत्तः** । **मनुः**–

शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ।
नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव चेति ॥

प्रौढपादइति पादे पादान्तराधायी । पीठाद्यासनार्पितपादो वेति **हरदत्तः** । वसक्थिकाम् उत्तरीयादिना पृष्ठेन सह जानुद्वयस्य वेष्टनम् । सूतकान्नाद्यं सूतकसंबन्ध्यन्नम् । एतच्चानध्ययनमाप्रायश्चित्तकरणादिति **नारायणः** । अन्नजरणान्तमिति तु **स्मृत्यर्थसारे** । **मनुः**—

न विवादे न कलहे न सेनायान्न संगरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥
रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षतेइति ।

विवादे ऋणदानादिविप्रतिपत्तिशब्दश्रवणे । भुक्तमात्र इति । भुक्त्वार्द्रपाणिरिति **याज्ञवल्क्योक्तेन** तुल्यार्थम् । अजीर्ण इति । जरणोचितकालेऽप्यन्नस्याजरणे सतीत्यर्थः इति **नारायणः** । सोपपद-

तिथावनध्यायः। तथाच नारदीये—

अयने विषुवे चैव शयने बोधने हरेः।
अनध्यायस्तु कर्त्तव्यो या च सोपपदा तिथिरिति॥

सोपपदास्तिथयस्तु—

सिता ज्येष्ठद्वितीया च आश्विने दशमी सिता।
चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृता इति॥

स्मृत्यर्थसारे—ऐन्द्रश्रवणद्वादशीमहाभरण्योश्च। अपरपक्षान्ते मेतद्वितीयायां रथसप्तम्यां च। शवानुगनपरिचरणेषु। आकाशे शवदर्शने वाऽहोरात्रम्। महागुरौ मृते द्वादशरात्रम्। असपिण्डे गुरौ त्रिरात्रम्। आचार्ये उपाध्याये च पक्षिणी। समानविद्ये सब्रह्मचारिणि च। आचार्यभार्यापुत्रशिष्येष्वहोरात्रम्। ऋत्विग्याज्यस्वयोनिसम्बन्धेषु चैवम्। अग्न्युत्पाते गोविप्रमृतौ त्रिरात्रम्। अयने विषुवे च पक्षिणी। अकालवृष्टौ। आर्द्रादिज्येष्ठान्तादन्यत्राकालवृष्टिः। आरण्यमार्जारसर्पनकुलपञ्चनखादेरन्तरागमने त्रिरात्रम्। आराण्यश्वशृगालादिवानररजकादौ द्वादशरात्रम्। खरवराहोष्ट्रादिचण्डालादिस्तूतिकोदक्याशवादौ मासम्। गोगवयाजब्रह्मघ्ननास्तिकादौ त्रिरात्रम्। शशमेषश्वपाकादौ षण्मासम्। गजगण्डसारससिंहव्याघ्रमहापापिकृतघ्नादावब्दमनध्यायः। शोभनगृहे शोभने दिने चानध्यायः। विवाहमौञ्जीबन्धनमातिष्ठोद्यापनादिष्वासमाप्तेः सपिण्डसगोत्राणामनध्यायः। यज्ञे चानुबन्ध्यान्तमृत्विजामाचार्याणां च। एकानध्याययुग्मत्वे त्वन्त्यापररात्रेऽनध्यायः। अनध्याययुग्मे पूर्वदिनापररात्रौ चेत्येके।

अभ्यङ्गस्नानकाले च महास्वेदेऽतिकम्पने।
गोविप्ररोधने सर्वशब्देषु श्राद्धपङ्क्तिषु॥
उदयेऽस्तमये चापि मुहूर्त्तत्रयगामि यत्।
तद्दिनं तदहोरात्रं चानध्यायविदो विदुः॥
केचिदाहुः क्वचिद्देशे यावत्तद्दिननाडिकाः।

तावदेव त्वनध्यायो न तन्मिश्रे दिनान्तरे इति ॥

निर्णयामृते श्लोकभीष्मः—

चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु ।
पक्षाधिकत्रयोदश्यां तस्या एवोत्तरा तिथिः ॥
दर्शस्पृक् चेद्दिवैव स्यादनध्यायः श्रुतावपीति ॥

पक्षेत्यादेरयमर्थः । द्वितीयादित्रयोदश्यन्तानामेकादशस्वाध्यायानां यदि तिथिवृद्ध्या त्रयोदश्यधिका भवति तस्यां नाध्येयम् । किञ्च यस्यास्त्रयोदश्या उत्तरा चतुर्दशी दिवैव दर्शं स्पृशति साप्यनध्यायः । श्रुतौ । श्रवणद्वादश्याम् । चातुर्मास्यद्वितीयाश्च गर्गेणोक्ताः—

शुचाऊर्जे तपस्ये च या द्वितीया विधुक्षये ।
चातुर्मास्याद्वितीयास्ताः प्रवदन्ति महर्षय इति ॥

विधुक्षये कृष्णपक्षे ।

## अथ प्रदोषाः ।

उपाकरणानन्तरं मासं प्रदोषे नाधीयीतेति प्रागुक्तम् । प्रदोषश्च पूर्वरात्रिर्विवक्षिता इति माधवः । तथा माधवीये पुराणम्—

मेधाकामस्त्रयोदश्यां सप्तम्यां च विशेषतः ।
चतुर्थ्यां च प्रदोषेषु न स्मरेन्नच कीर्त्तयेदिति ॥

चतुर्थ्यादितिथिद्वैविध्ये त्वाह प्रजापतिः—

षष्ठी च द्वादशी चैव अर्द्धरात्रोननाडिका ।
प्रदोषे न त्वधीयीत तृतीया नवनाडिकेति

निर्णयामृते । गर्गोऽपि—

रात्रौ यामत्रयादर्वाक् सप्तमी या त्रयोदशी ।
प्रदोषः स तु विज्ञेयः सर्वकर्मविगर्हित इति ॥
रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते ।
प्रदोषः स तु विज्ञेयो वेदाध्ययनगर्हित इति ।

स्मृत्यर्थसारे ॥

अनध्यायेष्वध्ययने प्रज्ञामायुः प्रजां श्रियम् ॥
ब्रह्मवीर्यं श्रियं तेजो निकृन्तति यमः स्वयम् ॥
मन्त्रवीर्यक्षयभयादिन्द्रो वज्रेण हन्ति च ।
ब्रह्मराक्षसता चान्ते नरकश्च भवेद् ध्रुवमिति ॥

पूर्वोक्तेष्वनध्यायेषु उच्चारणमेव निषिद्धं नतु चिन्तनमपि। अतएव
उदक्ये चार्द्धरात्रे च विण्मूत्रस्य विसर्जने ।
उच्छिष्टश्राद्धभुक् चैव मनसापि न चिन्तयेद् ।

इति मनुवचनव्याख्यायां नारायण आह—अत्र मनसा चिन्तनस्य निषेधादन्यत्र मनसा चिन्तने दोषाभावो गम्यत इति । तथा मानसमप्यशुचिरिति गौतमवाक्यं हरदत्तो व्याचख्यौ । अप्रयतः सन् मानसमप्यध्ययनं न कुर्यात् । एवं चान्येष्वनध्यायहेतुषु मानसमनिषिद्धं भवतीति ॥ मनुः—

वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोस्त्यनध्याये होममन्त्रेषु चैव हीति ॥

वेदोपकरणमङ्गोपाङ्गादि । अत्र विशेषः कूर्मपुराणे

अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ।
न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेदिति ॥

स्मृत्यर्थसारे च—

चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु तु ।
वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेदिति ॥

तथा दुर्मेधसां विस्मृतिशीलानां च बहुवेदपाठिनां च वेदेऽप्यनध्यायसंकोच उक्तः ।

स्मृत्यर्थसारे—

चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा ।
दुर्मेधसामनध्यायस्त्वन्तरागमनेषु च ॥
तथा विस्मृतिशीलानां बहुवेदप्रपाठिनामिति ॥

स्वाध्येये चेति । ब्रह्मयज्ञ इत्यर्थः । तथाच शौनकः—

नित्ये जपे च काम्ये च क्रतौ पारायणेपि च ।
नानध्यायोस्ति वेदानां ग्रहणे ग्राहणे स्मृत इत्यर्थः ॥

नित्यादावनध्यायो न किन्तु ग्रहणादावेवेत्यर्थः ।

स्मृत्यर्थसारे—

नित्ये नैमित्तिके कार्ये व्रतयज्ञक्रतौ तथा ।
प्रवृत्ते काम्यकार्ये च नानाध्यायाः स्मृतास्तथा ॥
देवतार्चनमन्त्राणां नानध्यायः कदा चनेति ॥

मनुः—

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विज इति ।

नित्यं नित्ये कर्त्तव्ये ब्रह्मयज्ञे । तथाच श्रुतिः—तस्य वा एतस्य ब्रह्मयज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देश इति । इत्यनध्यायप्रकरणम् ॥

## अथ भिक्षाचर्या ।

याज्ञवल्क्यः—

ब्राह्मणेषु चरेद्भैक्ष्यमनिन्द्येष्वात्मवृत्तये ।
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ॥
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमामिति ॥

ब्राह्मणेष्विति स्वस्वजातीयोपलक्षणम् । तथाच व्यासः—

ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्ष्यमन्वहम् ।
सजातीयगृहेष्वेव सार्ववर्णिकमेव चेति ॥

अत्र सार्ववर्णिकमापद्विषयम् । तथाच माधवीये भविष्यत्पुराणम्—

चातुर्वर्ण्यं चरेद्भैक्ष्यमलाभे कुरुनन्दनेति ॥

आपद्यपि शूद्रात्पक्वं न ग्राह्यम् । तदाहाङ्गिराः—

तस्मादामं ग्रहीतव्यं शूद्रादप्यन्ततोऽब्रवीदिति ।

अनापदि तु स्वजातिप्रशस्तेष्वेव भैक्ष्यमाहरेत् । तदाह मनुः—

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहमिति ॥

क्वचिदपवादमाह स एव—

गुरोः कुले च भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं परित्यजेत् ॥
सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसंभवे ।
नियम्य प्रयतो वाचमभिशस्तांश्च वर्जयेदिति ॥

यत्तु

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
याचेत भिक्षां प्रथमं या चैनं न विमानयेदिति ॥

तदुपनयनाङ्गभिक्षाविषयम् । तच्च भैक्ष्यं भोजनपर्याप्तमेवाहर्त्तव्यं नत्वधिकम् । तदाह यमः—

आहारमात्रादधिकं न क्वचिद् भैक्ष्यमाहरेत् ।
युज्यते स्तेयदोषेण कामतोऽधिकमाहरन्निति ॥

हारीतः—लोहे मृन्मये वा पात्रे भुञ्जीतेति ॥ आपस्तम्बः—भुक्त्वा स्वयममत्रं प्रक्षालयेदिति । तच्च भैक्ष्यं गुर्वनुज्ञापुरःसरं भोक्तव्यम् । तदाहतुर्मनुयमौ—

समाहृत्य तु तद्भैक्षं यावदर्थममायया ।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिरिति ॥

गुर्वसंनिधौ तद्भार्यादिभ्यो निवेदयेत् । तदाह गौतमः—निवेद्य गुरवेऽनुज्ञातो भुञ्जीतासंनिधौ गुरोः तद्भार्यापुत्रसब्रह्मचारिभ्य इति ॥

याज्ञवल्क्यः—

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।
अपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् इति ॥

यद्यपि प्रागेव उभयोरग्निकार्यं विहितम् । “ अग्निकार्यं ततः

कुर्यात्संध्ययोरुभयोरपी" ति । तथापि संध्याकाले कथंचिदग्निकार्यस्य कालान्तरविधानार्थमिदम् । न पुनस्तृतीयप्राप्त्यर्थम् । सत्कृत्येति । सत्कारश्च हारीतेन दर्शितः– भैक्ष्यमवेक्षितं पर्यग्निकृतमादित्यदर्शितं गुरवे निवेदितमनुज्ञातं अमृतसंमितं प्राहुर्यदश्नाति ब्रह्मचारी ब्रह्मसिद्धिमवाप्नोतीति ॥

याज्ञवल्क्यः–

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।

ब्राह्मणः काममश्नीयात् श्राद्धे व्रतमपीडयन् ॥

अनापदि व्याध्याद्यभावे । ब्राह्मण इति । क्षत्रियादेः श्राद्धभोजनव्युदासार्थम् ।

तथाच मनुः–

राजन्यवैश्ययोश्चैव न तत्कर्म प्रचक्षत इति ॥

श्राद्ध इत्युपलक्षणम् । तथाच मनुः–

व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवादिति ।

ऋषिवद् वानप्रस्थवत् । एते मुन्यन्नाशनमभिमतीति नारायणः । व्रतमिति । मधुमांसादि परिहरन्नित्यर्थः । ब्रह्मचर्यकालावधिमाह याज्ञवल्क्यः–

प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ॥

ग्रहणान्तिकमित्येकइति ॥

यमः–

वसेद् द्वादशवर्षाणि चतुर्विंशतिमेव वा ।

षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेदिति ॥

मनुः–

षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ।

तदर्धिकं पादिकं वा ग्रहणान्तिमेकमेव चेति ।

वेदत्रयाध्ययनार्थं व्रतं ब्रह्मचर्याश्रमधर्मरूपं चर्यं चरणीयम् ।

तथाच प्रतिवेदं द्वादशाब्दानामिति फलितम् ॥ यस्तु चतुरो वेदानध्येतुं शक्तः तस्याष्टचत्वारिंशदिति बोध्यम् ॥ यथाऽऽपस्तम्बः—उपेतस्याचार्यकुले ब्रह्मचारी वासोऽष्टाचत्वारिंशद्वत्सरान् इति । एवं चाथर्वणस्त्रयीनिष्कर्षत्वादेतद्व्रतेनैव व्रतसिद्धिरिति । नारायणोक्तौ मूलं मृग्यम् । तदर्धिकमित्यादि । प्रतिवेदं पाट्वार्षिकं त्रैवार्षिकं वेत्यर्थः । तदेतत्संगृहितं दीपिकायाम्—

प्रतिवेदं ब्रह्मचर्यं वर्षाणि द्वादशाथवा ।
षट्त्रीणि ग्रहणान्तं वेति ॥

ब्रह्मचारी द्विविधः । उपकुर्वाणको, नैष्ठिकश्च ॥ उपकुर्वाणकस्य धर्मा उक्ताः । नैष्ठिकस्य तूच्यन्ते । तत्र मनु—

यदि त्वात्यन्तिको वासो रोचेत स्वगुरोः कुले ।
युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥
आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद् वृत्तिमाचरेत् ॥
एतेष्वविद्यमानेषु स्थानासनविहारवान् ॥
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मन इति ॥
एतच्च सद्वृत्तब्राह्मणगुर्वादिविषयम् ।

तथा च मनुः—

नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं चरेत् ।
ब्राह्मणे वाननूचाने काङ्क्षन् गतिमनुत्तमामिति ॥

स्थानासनविहारवानिति । स्थानमङ्गुष्ठाग्रादिना नियतमूर्ध्वावस्थानम् । आसनं नियमेनोपवेशनम् । विहारो भ्रमणम् । एतैस्तपोविशेषमभिप्रैतीति नारायणः । अग्निशुश्रूषामिति । सा च हारीतशङ्खलिखितयमैर्निरूपिता । याज्ञियाः । समिध आहृत्य संमार्जनोपलेपनोल्लेखनसमूहनसमिन्धनपर्यग्निकरणपरिक्रमणोदस्थापनहोमस्तोत्रनमस्कारादिभिरग्निं परिचरेन्नाग्निमधितिष्ठेन्न पद्भ्यां कर्षेन्न मुखेनोपध-

मेन्नापश्चाग्निं च युगपद्धारयेन्नाजीर्णभुक्तो नोच्छिष्टो वाभ्यादध्यात् ॥ विविधैर्हविर्भिर्विशेषैराज्ञे यैरहरहमग्निमिन्धेदामन्त्र्य गच्छेदागत्य निवेदयेत् तन्मनाः शरीरोपरमान्ते ब्रह्मणः सायुज्यं गच्छतीति ॥ स्फुटं चैतन्माधवीये । वसिष्ठः—ब्रह्मचार्याचार्यं परिचरेदाशरीरविमोक्षणात् । आचार्ये च प्रेतेऽग्निं परिचरेत् संयतवाक् चतुर्थषष्ठाष्टमकालभोजी जटिलः शिखा जटो वेत्युपक्रम्य त्रिरन्होभ्युपेयादपइत्याह । त्रिषवणस्नायी स्यादित्यर्थः ॥ यत्तु दक्षवचनम्—

प्रातर्मध्यान्हयोः स्नानं वानप्रस्थगृहस्थयोः ।
यतेस्त्रिषवणस्नानं सकृत्तु ब्रह्मचारिण इति ॥

तदुपकुर्वाणकविषयम् । यदपि अपामुपस्पर्शनमेके गोदानादिति गौतमवाक्येन गोदानव्रतानन्तरमेव स्नानम् । ततः प्राक् दीक्षितवदिति नित्यस्नानस्यानुष्ठानमुक्तं तदप्युपकुर्वाणकविषयमेव बोध्यम् । यत्तु

कुब्जवामनजात्यन्धक्लीबपङ्ग्वार्त्तरोगिणाम् ।
व्रतचर्या भवेत्तेषां यावज्जीवं न संशयइति ।

विष्णुवचनान्नैष्ठिकत्वं कुब्जादिमात्रविषयकमिति । तन्न । चत्वार आश्रमा इत्युपक्रम्य यमिच्छेत्तमावसेदिति वसिष्ठेनोच्यमानस्य गृहस्थताया ऐच्छिकत्वस्यासंगत्यापत्तेः । भविष्यत्पुराणेपि—

गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम् ।
ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकम् ॥
वैखानसो वापि भवेत्परिव्राडथवेच्छयेति ॥

वैखानसो वानप्रस्थः । तस्माद्रागिविषयकं गार्हस्थ्यम् ॥ विष्णुवाक्यं तु नीरागमात्रोपलक्षकमिति । नैष्ठिकत्वं तु ब्राह्मणस्यैव नतु क्षत्रियादेः ।

एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः ।
स गच्छत्युत्तमं स्थानं नचेह जायते पुनरिति ।

मनुवाक्ये विप्रपदेन क्षत्रियादिव्युदासादिति नारायणः ।

एतच्च नैष्ठिकब्रह्मचर्यं कलौ न कार्यम्। कलिवर्ज्येषु परिगणनात्। कलिवर्ज्यानि च प्रसङ्गात्प्रदर्श्यन्ते। तत्र माधवीये ब्रह्मपुराणम्—

दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः।
गोत्रान्मातृसपिण्डात्तु विवाहो गोवधस्तथा॥
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिरिति॥

दीर्घकालमिति। नैष्ठिकब्रह्मचर्यमित्यर्थ इति दीपिकाकारः। अन्ये तु अष्टाचत्वारिंशद्वर्षाणि इत्याद्यपि कलौ निषिध्यत इत्याहुः। कमण्डलुधारणम्। अथ कमण्डलुचर्यामुपदिशन्तीत्यादिबौधायनोक्तेतिकर्त्तव्यताकम्। सोदकं च कमण्डलुमित्यनेन स्नातकस्य विहितं मृन्मयकरकधारणम्। गोत्रात् स्वगोत्रोत्पन्नायाः पितृष्वसुः। मातृसपिण्डाद् मातुलात्। यः श्रुतिस्मृतिसदाचारैर्मातुलकन्यापरिणयः प्राप्तः सोऽनेन कलौ निषिध्यते। तेन मातुलस्य सुतामूढ्वेत्यादीनि वचनानि कलिविषयाण्येव। अत एव व्यासेन कलिनिन्दाप्रक्रमे—

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा।
शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः—

इत्युक्तम्। मातृतो मातृपक्षे। कूटस्थात्तृतीयां मातुलसुतां पितृतः पितृपक्षे तृतीयां पैतृष्वस्रेयीमित्यर्थः। एतेन कृष्णार्जुनादीनां मातुलकन्यापरिणयोपि युगान्तरीयत्वान्न विरुध्यते। आधुनिकानां तु तदाचारोऽनाचार एव। अतएव बौधायनेन पञ्चधा विप्रतिपत्तिर्दक्षिणत इत्युपक्रम्य यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनं इत्यनाचारत्वमेव प्रतिपादितमिति। गोवधो मधुपर्कादौ। मद्यं गौडीमाध्व्यादिरूपं क्षत्रियवैश्ययोर्निषिध्यते। न ब्राह्मणस्य। नित्यं तन्निषेधात्। न पैष्टी। सर्वेषु तन्निषेधात्। क्रतुरपि।

देवराच्च सुतोत्पत्तिः दत्ता कन्या न दीयते।

देवरात्। चकारात्सपिण्डात् सगोत्राद्वा सुतोत्पत्तिः। " अपुत्रां

गुर्वनुज्ञात " इत्यादिवाक्यैर्विहिता । कलौ नेत्यनुपपद्यते । देवरात् सुतोत्पत्तेश्च वाग्दत्ताविषयता । यावद्वक्ष्यमाणत्वात् निषेधोऽपि तद्विषयक एव बोध्यः । दत्तेति

पुरा पुरुषसम्भोगान्मृते देयेति केचन ।

ऋतावदृष्टे कन्यैव पुनर्देयेत्यादिना पुनर्देयतयोक्ता संस्कृता कन्या अक्षतयोनिः पुनः कलौ न देयेत्यर्थः । दत्ताशब्दस्य ऊढापरत्वं च वचनान्तरादध्यवसीयते । तथाच माधवीये पुराणम्—

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुमिति ॥

ज्येष्ठांशमिति । ज्येष्ठस्य विंश उद्धारः । सर्वद्रव्याच्च यद्वरमित्यादिनोक्तमित्यर्थः । बृहन्नारदीये—

समुद्रयातुः स्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपगतं तथा ॥
देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः ।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ।
दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥
महाप्रस्थानगमनं गोमेधश्च तथा मखः ।
इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिण इति ॥

समुद्रे नौकादिना यो याति तस्य समुद्रयानम्, ब्राह्मणस्य न्यासापहरणमित्यादिबौधायनोक्तप्रायश्चित्तकरणेपि अन्यैः स्वीकारः व्यवहारः । तदुक्तम्—

द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रह इति ।

उपगतं विवाहः ।

असवर्णासु कन्यासु विवाहश्च द्विजातिषु ।

इति वचनात् । मांसदानं मांसपरिवेषणम् ।

शौचञ्च पात्रशुद्धिश्च श्रद्धा च परमा यदि ।
अनन्ततृप्तिकृच्छ्राद्धे एतत्खलु नचामिषम् ॥
यस्तु प्राणिवधं कृत्वा मांसैस्तर्पयते पितॄन् ।
सोऽविद्वांश्चन्दनं दग्ध्वा कुर्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे यथाकिंचिद्बालोऽत आदातुमिच्छति
पतत्यज्ञानतः सोपि मांसेन श्राद्धकृत्तथा । इति
बृहत्पराशरस्मरणात् ॥
अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेदिति ।

निगमवचनाच्च महाप्रस्थानगमनम् । आशरीरपातमुत्तरदिग्गमनम् । तथान्येपि धर्मज्ञसमयप्रमाणकत्वेन माधवदीपिकाकारादिभिः संगृहीताः

विहितान्यपि कर्माणि धर्मलोपभयाद् बुधैः ।
समापने, निवृत्तानि साध्वभावात्कलौ युगे ॥
आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥
सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः ।
अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः ॥
वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा ।
प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम् ॥
संसर्गदोषस्तेयान्यमहापातकनिष्कृतिः ।
वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ॥
दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ।
सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि ॥
अयोनौ सङ्ग्रहे वृत्ते परित्यागो गुरुस्त्रियाः ।
परोद्देशात्मसन्त्याग उच्छिष्टस्यापि वर्जनम् ॥

प्रतिमाभ्यर्चनार्थाय सङ्कल्पश्च सधर्मकः ।
अस्थिसंचयनादूर्ध्वं अङ्गस्पर्शनमेवच ॥
शामित्रं चैव विप्राणां सोमाविक्रयणं तथा ॥
पङ्क्त्यानशने चान्नहरणं हीनकर्मणः ।
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् ॥
भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ।
शिष्यस्य गुरुदारेषु गुरुवद् वृत्तिशीलिता ॥
आपद्वृत्तिर्द्विजाग्र्याणां अश्वस्तनिकता तथा
प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः ॥
ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ।
बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः ॥
यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः ।
नवोदके दशाहं च दक्षिणा विधिचोदिता ॥
ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च ।
भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा ॥
गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया ।
पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम् ॥
यत्र सायंगृहत्वं च सूरिभिस्तत्त्वदर्शिभिः ।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥
निवर्त्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ।
समयश्चापि साधूनां प्रमाणं वेदवद्भवेदिति ॥

अस्यार्थः, जनमेजययज्ञसमापने सति विहितान्यपि कानि चि-त्कर्माणि कलौ निवर्त्तितानि । तदनुष्ठानयोग्यसाधुपुरुषाभावात् । आततायिनामुद्यतशस्त्रादीनां द्विजाग्र्याणां विप्राणां "ब्राह्मणं वा बहुश्रुतमाततायिनमायान्तं हन्यादेवे" त्यादिना विहितं संमुखमकूट-शस्त्रेण मारणम् । सत्रे आसनोपायिचोदिते सप्तदशावराश्चतुर्विंशति-

परमाः सत्रमासीरन्नित्यादिना विहिते दीक्षाः । सुराग्रहणस्य सुराग्रहणकर्तुः, संग्रहो व्यवहारः । अग्निहोत्रं हूयते यया स्रुचा सा वैकङ्कती अग्निहोत्रहवणी, तस्या नित्यं होमानन्तरं हुतावशिष्टप्राशनार्थं लेहः जिह्वया आस्वादनम् । कथंचिल्लीढायाः पुनः परिग्रहः ।

वेदाग्नियुक्तविप्रस्य त्र्यहमाशौचमिष्यते ।

इत्यादिना देवलादिभिरुक्त आशौचसंकोचः । कामकृते महापातकादौ मरणान्तिकं यत्प्रायश्चित्तम् ।

न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ।

इत्यादिनोक्तं तस्य विधानमुपदेशः । तदाह मनुः—

प्रतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिरिति ।

स्वयमेव धर्मशास्त्राद् ज्ञात्वाऽन्यापदेशेन पृष्ट्वा वा तदनुष्ठानं न निवार्येत इति भावः । संसर्गदोषः पतितसंसर्गेण पातित्यम् । "संवत्सरेण पतति पतितेन सहाचर" न्नित्यादिना प्रतिपादितम् । तथाच पराशरः— कलौ पतितकर्मणेति । एतेन संसर्गः शोधितैरपीत्यादिना शोधितसंसर्गस्यापि निषेधमधिगम्य पतितसंसर्गे दोषाभावोक्तिर्विरुद्धचेतेति परास्तम् । पातित्यानभ्युपगमेऽपि दोषाभ्युपगमात् । एतच्च

आसनाच्छयनाद्यानात्संभाषात्सहभोजनात् ।

संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसीति ।

पराशरवचनव्याख्यावसरे माधवाचार्यैः स्फुटीकृतम् । स्तेयान्यस्मिन् महापातके निष्कृतिः॥ इदं च रहस्यप्रायश्चित्तविषयकमिति केचित् । अतएव पराशरे नवमाध्याये तस्मात्प्रकाशयेत्पापमित्युक्तिरपि संगच्छत इत्याहुः । वरातिथिभ्यां मधुपर्के, पितृभ्यः श्राद्धे । दत्तः— मातृपितृभ्यां, तदन्यतरेण वा । "पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसंनिकृष्ट एव प्रतिगृह्णीयात्" इत्यादिवसिष्ठोक्तविधिना पुत्रीकृतः । औरसो धर्मपत्नीजः । ताभ्यामितरेषाम् । सवर्णान्या असवर्णा या अङ्गनास्ता-

भिर्दुष्टैः तत्संपृक्तैः कृतप्रायश्चित्तैरपि संसर्गः। अयोनाविति । युगान्तरे तु योनौ अयोनौ वा संसर्गे सति परित्याग इति गम्यते । परेषां गोब्राह्मणस्त्र्यादीनामुद्देशेन तदापद्विमोक्षार्थे प्राणत्यागः "गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान् परित्यजे" दित्यादिनोक्तः । उच्छिष्टस्यापि वर्जनमिति । स्वमुच्छिष्टमुच्छिष्टोपहतं चेत्यादिवसिष्ठाद्युक्तम् । इयमेव प्रतिमा यावज्जीवं पूजनीयेत्येवमादिः संकल्पः ।

ततः सञ्चयनादूर्ध्वमङ्गस्पर्शो विधीयते

इत्यादिना विहितोऽङ्गस्पर्शः । शामित्रं यज्ञे स्वयं पशुप्रमाणम् । षण्णां भक्तानामनशनम् । उपवासत्रयम् । तस्मिन्

बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्

इत्यादिस्मृत्या ।

तथैव सप्तमे काले भक्तानि षडनश्नता ।

अश्वस्तननिधानाय हर्त्तव्यं हीनकर्मणः

इति मनुस्मृत्या च विहितमन्नहरणम् ॥ आपद्वृत्तिरिति ॥ आपदि क्षत्रादिवृत्तिभिर्जीवनम् । विप्राणां संततिजीवनाय जातारणिपरिग्रहः । प्रवासित्वम्, सर्वदा प्रवासशीलता । मुखेनोपधमेदग्निमित्यादिना विहितं मुखेनाग्निधमनम् । अभिनवोदके दशाहवर्जनम् ।
"दशरात्रेण शुध्येत भूमिष्ठं च नवोदक" मित्यादिनोक्तं दशाहमित्युक्त्या ।

काले नवोदकं शुद्धं न पिबेच्च त्र्यहं च तत् ।

अकाले तु दशाहं स्यात्पीत्वानाद्यादहर्निशम् ॥

इति स्मृत्युक्तस्य दशाहप्रतिषेधस्यैवम्प्रतिप्रसवो नतु त्र्यहप्रतिषेधस्येति दर्शयति । "गुरवे तु वरं दत्त्वे" त्यादिनोक्ता स्नानार्थं गुरुदक्षिणा। आर्याधिष्ठिता वा शूद्राः संस्कर्त्तारः स्युः इत्याद्यापस्तम्बोक्तं ब्राह्मणगृहे शूद्रस्य पाचकत्वम्। गोतृप्त्यविके जले शिष्टानामाचमनकरणम् शुचिगोतृप्तिकृत्तोयमिति प्रासम् । पितृपुत्रविरोधे तु साक्षिणां त्रिपणो दम इत्युक्तम् । संन्यासिनां यत्र सायङ्कालस्तत्रैवावस्थानम् । यत्र

सायं गृहे मुनिरित्यनेनोक्तम्। एतानि सर्वाणि निवर्त्तितानि इत्यन्वयः। सन्यासिपद्धतौ व्यासः—

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः ॥
संन्यासस्तु न कर्त्तव्यो ब्राह्मणेन विजानतेति ।
अत्र त्रेतापरिग्रह इति वदता सर्वाधानमेव निषिध्यते ।

अतएव लौगाक्षिः—

अर्धाधानं स्मृतं श्रौतस्मार्त्तोग्न्योस्तु पृथक्कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रितेति ॥

युगस्य पूर्वं पूर्वयुगं कलेः पूर्वभाग इत्यर्थः । अर्धाधानमपि यावद्वर्णवेदविभागं कार्यम् । तदाह देवलः—

यावद्वर्णविभागोस्ति यावद्वेदः प्रवर्त्तते ।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे इति ॥

यद्यपि संन्यासस्य चतुश्चत्वारिंशच्छताब्दाऽवधिकत्वं व्यासेनोक्तं तथापि गौणकालोऽनेन समर्प्यत इति केचित् । त्रिदण्डैकदण्डाभिप्रायेण व्यवस्थेत्यपरे । सामान्यतः श्रुतस्य व्यासवाक्येनोपसंहार इत्यन्ये इति कलिनिषिद्धानि । तदेवं नैष्ठिकब्रह्मचर्यस्य कलौ निषिद्धत्वादुपकुर्वाणत्वमेवाश्रित्य वेदाध्ययनं कर्त्तव्यमिति स्थितम् ॥

तच्चाध्ययनमुपाकर्मप्रभृत्येवेति प्रसङ्गात्तन्निर्णय उच्यते । तत्र गृह्यम्—अथाध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य पञ्चम्यां हस्तेन वेति । अस्यार्थः, अधीयन्त इत्यध्याया वेदाः तेषामुपाकरणं प्रारम्भः श्रावणमासस्य श्रवणेन श्रवणायुक्ते काले "नक्षत्रेण युक्तः कालः" इत्यणो "लुबविशेष" इति लुप् । "नक्षत्रे च लुपी" ति सप्तम्यर्थे तृतीया । पञ्चम्यामिति । श्रावणस्येति सम्बध्यते । श्रावणमासस्य पञ्चमी यदा हस्तसंयुक्ता भवति तदा वेत्यर्थः । इदं च कालद्वयम् ओषधिप्रादुर्भावे सति बोध्यम् ॥ याज्ञवल्क्यः—

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥

ओषधिप्रादुर्भावे सति श्रावणमासस्य श्रवणं पूर्णिमा हस्तश्च शाखाभेदेन व्यवस्थिताः । यदि तु तत्र ग्रहसंक्रान्ती स्यातां तदा श्रावणस्य शुक्लपञ्चम्यां कार्यम् । अथवा श्रावणशुक्लपक्षवर्त्तिन्यां यस्यां कस्याञ्चिद्धस्तान्वितायां तिथौ इति दीपिकादिबहुग्रन्थसम्मतोऽर्थः । अतएव स्मृत्यर्थसारेऽपि–कस्मिंश्चिद्दिने इत्युक्तम् । अत्र पञ्चम्यामिति पक्षो बह्वृचादिभिर्ग्राह्यः । यजुर्वेदिनां तु मध्ये वाजसनेयिभिरेव ग्राह्यः । संक्रान्तिर्ग्रहणं वेत्यादिवक्ष्यमाणस्मृतिमहार्णववचनबलादिति दीपिकादौ स्थितम् ॥ ओषधिप्रादुर्भावविरहे तु भाद्रपदे कार्यम् । तथा बह्वृचपरिशिष्टकारिका—

अध्यायानामुपाकर्म श्रावणे श्रवणेन तु ।
तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ॥
अदृष्टयौषधयस्तस्मिन् मासे तु न भवन्ति चेत् ।
तदा भाद्रपदे मासे श्रवणेन करोति तदिति ॥

श्रवणनक्षत्रखण्डे तु विशेषमाह व्यासः–

धनिष्ठासंयुते कुर्याच्छ्रावणं कर्म यद्भवेदिति ।

स्मृतिमहार्णवे–

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् ।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिरिति ॥

गर्गः—

पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युः ग्रहसंक्रान्तिवर्जित इति ॥

अत्र तैत्तिरीयकपदमन्येषामपि यजुःशाखिनामुपलक्षणम् । तेषां कालान्तराविधानादिति निर्णयामृते । दीपिकायान्तु–यदि पौर्णमासीपूर्वाह्णरूपमात्रं कर्मकालं दिनद्वयेऽपि न व्याप्नोति व्याप्नोति

वा तदा निर्णयार्थं प्रवर्त्तमानमिदं वचनं तैत्तिरीयका इति विशेषोपादानात्तन्मात्रपरम्। इतरे तु याजुषाः पूर्वत्रैव कुर्युरिति सिद्धान्तितम्। यत्तु

श्रावणी दुर्गनवमी दुर्वा चैव हुताशनी।
पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम्।

इति वचनं तद्दीपिकाकारमते—तैत्तिरीयकभिन्नयाजुषपरमिति स्पष्टमेव। निर्णयामृतकारमते—तु श्रावण्यां विधीयमानं हिरण्यगर्भपवित्रारोपणमेतस्य विषयः। उपाकर्माङ्गभूतमाभ्युदयिकश्राद्धं वेति तैरेव व्याख्यातम्। सिंहस्थिते सवितरि या अमावास्या तदन्ते चान्द्रमासे या पौर्णमासी सा श्रावणी। तथाच हरदत्तः—

मेषादिस्थे सवितरि यो यो दर्शः प्रवर्त्तते।
चान्द्रमासास्तत्तदन्ताश्चैत्राद्या द्वादश स्मृताः।
तेषु या या पौर्णमासी सा सा चैत्र्यादिका स्मृता॥
कादाचित्केन योगेन नक्षत्रस्येति निर्णय इति॥

कात्यायनः—

अर्धरात्रादधस्ताच्चेत् संक्रान्तिर्ग्रहणं तदा।
उपाकर्म न कुर्वीत परस्ताच्चेन्न दोषकृदिति॥

बृहस्पतिः—

नर्मदोत्तरभागे तु कर्त्तव्यं सिंहयुक्तके।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे इति॥

इदं सर्वशाखासाधारणमिति केचित्। अन्ये तु यान् प्रति सिंहे विधानमस्ति तान् प्रत्येव नर्मदोत्तरभागरूपदेशविधिपरं पूर्वार्द्धम्। तैरेव तर्हि दक्षिणे कथं कर्त्तव्यमित्याकाङ्क्षायां उत्तरार्द्धप्रवृत्तिरित्याहुः। एतेन

वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ।
उपाकर्म न कर्त्तव्यं कर्त्तव्यं सिंहयुक्तके॥

इति माधवोदाहृतं स्मृत्यन्तरमपि व्याख्यातम्। आद्यमते सर्वशाखासाधारण्येन नर्मदोत्तरभागे कर्कटनिषेधाभिप्रायत्वात्। द्वितीयमते

तु छन्दोगान् प्रति सिंहे कर्त्तव्यमिति विधिः, कुलीरे न कर्त्तव्यमित्यनुवादः । तथाच गर्गः—

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्ध्रदिः ।
छन्दोगा मिलिताः कुर्युरुत्सर्गं स्वस्वच्छन्दसाम् ।
शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकमिति ।
सिंहे रवावित्येतद् उत्सर्गोपाकर्मभ्यां संबध्यते ।
यत्तु कश्यपवचनम्—
गुरुशुक्रतिरोधाने वर्जयेच्छ्रुतिचोदितम् ।
इत्याह भगवानत्रिः श्रावणं तु विशेषत इति ॥
तत्प्रथमोपाकर्मविषयम् । तदुक्तं संग्रहे—
गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा ।
तथाधिमाससंसर्गमलमासादिषु द्विजाः ॥
प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृदिति ॥
अधिमासादिष्विदं कर्मोत्तरत्र कर्त्तव्यमित्याह पराशरः—
उपाकर्म तथोत्सर्गं प्रसवाहोत्सवाष्टकाः ।
मासवृद्धौ परे कार्याः वर्जयित्वा तु पैतृकमिति ॥
परे उत्तरे मासि कार्या इत्यर्थः । प्रसवाहोत्सवो जातेष्टिः ॥
कात्यायनः—
उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ।
अभिषेकाब्दवृद्धीनां न तूत्कर्षो युगादिष्विति ॥
यत्तु ऋष्यशृङ्गवचनम्—
दशहरासु नोत्कर्षः चतुर्ष्वपि युगादिषु ।
उपाकर्म महाषष्ठ्याद्येतादिष्टं वृषादित इति ॥

तच्छन्दोगविषयम् । तेषां हि कालवृद्धावपि सिंहार्क एवोपाकर्म । तथाच तद्विषये सिंहे रवावित्यादिगर्गवचनं प्रागुदाहृतम् । यदा पुनः श्रावणीप्रौष्ठपद्योः शुक्रास्तमयादिना प्रतिबन्धः तदानीमाषाढ्यां कर्त्तव्यम् ।

तदुक्तं कूर्मपुराणे—

श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ।
आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं स्मृतमिति ॥

अत्र च सर्वशाखाधिकरणन्यायेन कर्मैक्ये स्थिते वेदोपाकरणमनूद्य मासमात्रं विधीयते, पौर्णमास्यामित्यवयुत्यानुवाद इति निर्णयामृते, माधवीये च । दीपिकादौ तु—बौधयानीयैरेवाषाढी ग्राह्या, श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्येति बौधायनोक्तेर्गृह्यानुसारेण व्यवस्थौचित्यादिति स्थितम् । माधवस्तु—आषाढादिषु त्रिष्वपि मासेषु पूर्णिमाश्रवणहस्ताः शाखाभेदेन व्यवस्थिताः ॥

तदाह गोभिलः—

पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः ।
बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिन इति ॥

अत्रौदयिक इति पर्वादिषु सर्वत्र सम्बध्यते । पर्वण औदयिकत्वे विशेषमाह स एव—

श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ।
तदा त्वौदयिकी ग्राह्या नान्या त्वौदयिकी भवेदिति ॥

परिशिष्टे—

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् ।
श्रावणं कर्म कुर्वीत ऋग्यजुःसामपाठका इति ॥

त्वाष्ट्रऋक्षसमन्वितमिति । चित्रासंयुक्तहस्त इत्यर्थः ।

गोभिलः—

अध्यायानामुपाकर्म कुर्यात्काले ऽपराह्णके ।
पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुरिति ॥

याजुषाणां तु विशेषमाह प्रचेताः—

भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव त्विति ॥

इदं च ब्रह्मचारिधर्मः । उपाकृत्याधीयीतेति ग्रहणाध्ययनाङ्गत्व-

प्रतीतेः। ग्रहणाध्ययने च ब्रह्मचारिण एव। "वेदमधीत्य स्नाया" दिति स्नानात् प्राचीनत्वावगमात्। यदा तु व्रतानि वा पारं नीत्वेति स्मृतिबलाद्वेदमसमाप्यैव स्नाति तदा गृहस्थस्यापि ग्रहणाध्ययनेऽधिकारसंभवादस्त्येवोपाकर्म। अत एव शौनकः—समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेत इत्येक इति। अधीयीतेत्यनुवर्त्तते। येन नियमविशेषेण युक्तो ब्रह्मचार्यधीते तेनैव नियमेन समावृत्तो ऽप्यधीयीत। समावृत्तादितरे ब्रह्मचारिणस्तु यथान्यायं स्वनियुक्तप्रकारेणाधीयीरन्। तथा जायोपेतो गृहस्थोऽपि ब्रह्मचारिवन्नियमोपेतोऽधीयीतेति। अतएव मनु,याज्ञवल्क्यस्मृत्योर्गृहस्थधर्मप्रकरणे उपाकर्मणः पाठः संगच्छते इति माधवाचार्याः। एवं च ब्रह्मचारी, तथा समावृत्तो ऽप्यकृतविवाहः, तथा कृतविवाहोऽपीति, त्रयो ग्रहणाध्ययनं कुर्वन्तस्तदङ्गभूते उपाकर्मण्यधिकारिण इति माधवनिबन्धे फलितोऽर्थः। दीपिकाविवरणे तु—समावृत्तशौनकवचनं जायोपेयीत्येके इति पठित्वा समावृत्तः सन् जायोपेयी गृहस्थः, इतरे ब्रह्मचारिणः, तथा चोभयेऽधिकारिण इति व्याख्यातम्। हरदत्तास्तु—उपाकृत्याधीयीतेत्यत्र न ग्रहणाध्ययनमात्रस्य ग्रहणं किंतु वेदाध्यारणस्याध्यापनपारायणादिसाधारणस्य। तदन्तं चेदं प्रतिसंवत्सरमनुष्ठेयम्। श्रवणादि-वार्षिकमिति गौतमस्मरणात्। तथा च सकलब्रह्मचारिगृहस्थसाधारणमिदम्। तत्र न मांसं भुञ्जीतेत्यादिगौतमोक्तनियमः अध्यापकस्य, व्रतमात्रस्नातकस्याध्येतुश्च। तत्राप्यध्यापकस्य ऋतुद्वयं मासद्वयं चाशक्त्यपेक्षं वैकल्पिकं ब्रह्मचर्यम्। प्रवचनयुक्तो वर्षाशरदि मैथुनं वर्जयेदित्यापस्तम्बोक्तेः। द्वैमास्यो वा नियम इति गौतमोक्तेश्च। व्रतस्नातकस्याध्येतुस्तु ग्रहणान्तं ब्रह्मचर्यम्। ऋतुगमनं तु पाक्षिकमिति सिद्धान्तयित्वा तत्र प्रमाणत्वेन समावृत्त इत्यादिवाक्यं जायोपेयीत्येके इति पठित्वा ब्रह्मचारिकल्पेनेति प्रसक्तस्य स्त्रीसङ्गनिषेधस्य प्रतिप्रसवोऽयं पाक्षिक ऋतौ जायोपेयीति व्याचख्यौ। "उपाकृत्य यथाविधि

युक्तश्छन्दांस्यधीयीतेति" ति मनुग्रन्थव्याख्यायां नारायणोऽप्येवम् । युक्तं चैतत् ।

समावृत्तोऽप्यधीयानो मधुमांसादि वर्जयेत् ।
ऋतुस्नातोपगनं समावृत्तस्य मन्वते ॥

इति कारिकानुगुण्याच्च । तथाच नृसिंहकृते प्रयोगरत्ने गोभिलः—

उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
धारणाध्ययनाङ्गत्वाद् गृहिणां ब्रह्मचारिणामिति ॥

कात्यायनः—

प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद् द्विजैः ।
क्रियते च्छन्दसां तेन पुनराप्यायनं भवेत् ॥
अयातयामैश्छन्दोभिः यत्कर्म क्रियते द्विजैः ।
क्रीडमानैरपि सदा तत्तेषां सिद्धिकारणम् ॥
उत्सर्जनं च वेदानामुपाकरणकर्म च ।
अकृत्वा वेदजप्येन फलं नाप्नोति मानव इति ॥

तस्मादाश्रमत्रयेऽपीदमावश्यकमिति स्थितम् । इदं च कर्म वृद्धिश्राद्धपूर्वकं कर्त्तव्यमिति वृद्धिश्राद्धप्रकरणे वृत्तिकृन्नारायणः ।

अत्रेतिकर्त्तव्यतामाह कार्ष्णाजिनिः—

उपाकर्मणि चोत्सर्गे यथाकालं समेत्य तु ।
ऋषीन् दर्भमयान् कृत्वा पूजयेत्तर्पयेत्तत इति ॥

व्यासः—

ऋषीणामर्चनं सर्वं कर्त्तव्यं च निवीतिनेति ॥

गालवः—

कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप ! ।
हुत्वाग्नौ गुरवे दत्वा पितृभ्यो धारयेत्तत इति ॥
पितृभ्यो दत्वा स्वयं धारयेदित्यर्थः ॥

काष्णाजिनिः-

वेदारम्भणतः पूर्वं सक्तुप्राशनतः परम् ।
नवयज्ञोपवीतानि दद्याद्वै धारयेत्तत इति ॥

दानफलं चोक्तं वायुपुराणे-

उपाकर्मणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् ।
आयुस्मान् जायते तेन कर्मणा मानवो भुवीति ॥

ब्रह्मचारिणं प्रति विशेष उक्तः कालादर्शे-

मौञ्जीं यज्ञोपवीतं च नवं दण्डं च धारयेत् ।
कटिसूत्रं चैव नवं नवं वस्त्रं तथैव चेति ॥

कारिकायाम्-

पश्चादग्नेस्तु दर्भेषु प्रागग्रेषूपविश्य च ।
आसिच्याऽपः शरावादौ दर्भांस्तत्र निधाय च ॥
प्रागग्रदर्भगर्भास्ते कुर्युर्ब्रह्माञ्जलीनथ ।
सव्याहृतिं जपत्युच्चैः सावित्रीं ब्रह्मयज्ञवत् ॥
त्रिरभ्यस्येयुरोङ्कारं व्याहृतीश्चात्र कर्मणीति ॥

नित्यब्रह्मयज्ञे हि यद्यपि सावित्र्या एवाभ्यासः, नतु व्याहृतीनाम्
ओंपूर्वा व्याहृतीस्तिस्रः समस्तास्तु सकृद्वदेत् ।
पच्छस्त्वर्धर्चशः सर्वां सावित्रीं त्रिर्वदेद्‌धया ॥
इति कारिकाकारवचनात् । तथापीह कर्मणि व्याहृतीरप्यभ्यस्येयुरिति ब्रह्मयज्ञाद्विशेषो बोध्य इत्यर्थः ॥ इत्युपाकर्मनिर्णयः ॥

## अथोत्सर्जनम् ।

मनुः-

पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनीति ॥

यदा श्रावण्यामुपाकर्म तदा पुष्यमासस्य शुक्लप्रतिपदि पूर्वाह्णे, यदा प्रौष्ठपद्यामुपाकर्म तदा माघस्येति व्यवस्थितो विकल्पः ।

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्
इति मनुनैवोक्तत्वात् ॥

याज्ञवल्क्यः—

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिरिति ॥

अष्टकायां कृष्णाष्टम्याम् । बहिः ग्रामाद्बहिः । जलान्ते जलसमीपे । गोभिलः-

छन्दोगा मिलिताः कुर्युः प्रातरौत्सर्गिकीं क्रियाम् ।
अपराह्णे त्तुपाकर्म पुष्यहस्तर्क्षयोर्द्विजा इति ।

हस्तर्क्षेऽपराह्णे उपाकर्म पुष्ये प्रातरुत्सर्जनं छन्दोगाः कुर्युरित्यर्थः । इदं च सिंहस्थे सवितरि बोध्यम् । सिंहे रवौ तु पुष्यर्क्षे इत्यादिपूर्वोदाहृतगर्गवचनात् । कदाचित् भाद्रपदेपि । तथाच परिशिष्टे—

मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा ।
तदा च श्रावणे कुर्यादुत्सर्गं छन्दसां द्विज इति ॥

बौधायनः—श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य तैष्यां माघ्यां वोत्सृजेदिति ॥ कात्यायनः—

उपाकृत्योदगयने ततोऽधीयीत धर्मवित् ।
उत्सर्गश्चेत्तथा तिष्यतिथ्यां प्रौष्ठपदेऽपि चेति ॥

आश्वलायनैस्तु माघ्यामुत्सर्जनं कार्यम् । तथाच गृह्यम्-मध्यमाष्टकायामिति ॥ कारिका च-

अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते इति ॥

अनुकल्पः स्मर्यते खादिरगृह्ये-

पुष्ये तूत्सर्जनं कुर्यादुपाकर्म दिनेऽथवेति ॥

श्रुतिश्च-

"यः स्वाध्यायमधीतेब्द"मिति । एवमुत्सृष्टस्यापि पुनरध्ययनं प्रागु-

पाकरणात् कालविशेषे विदधाति मनुः—

अतः परं तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि समस्तानि कृष्णपक्षेषु संपठेदिति ॥

कारिकायाम्—

अत आरभ्य षण्मासान् षडङ्गानि त्वधीयते ।
शुक्ले वेदमधीयीत कृष्णेऽङ्गानीति केचन ॥

इत्युत्सर्जनम् ।

प्रासङ्गिकं समाप्य क्रमप्राप्तं व्रतचतुष्टयं प्रस्तूयते । तच्च यद्यपि प्रतिशाखं गृह्येपूक्तं तथाप्याश्वलायनानां दिङ्मात्रमुच्यते । तत्र श्रीधरीये नृसिंहः—

तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम् ।
चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च ॥
द्विजानां व्रतबन्धस्तु स्वाध्यायेषु प्रशस्यते ।
रिक्ताविष्टिविवर्ज्येषु महानाम्निकमेव चेति ॥

अत्र महानाम्नीमहाव्रतोपनिषद्व्रतगोदानाख्यं चतुष्टयं महानाम्निकशब्देन विवक्षितं प्राणभृदुपदधातीतिवदिति तद्व्याख्यातारः । तत्र जन्मप्रभृति त्रयोदशे वर्षे महानाम्नीव्रतम् । चतुर्दशे महाव्रतम् । पञ्चदशे उपनिषद्व्रतम् । षोडशे गोदानम् । महानाम्न्यादिव्रतेषु लुप्तेषु तारतम्येन त्रीन् षट् द्वादश वा कृच्छ्रान् कृत्वा पुनर्व्रतं प्रारभेतेति स्मृत्यर्थसारे ॥

## अथ समावर्त्तनम् ।

तत्र याज्ञवल्क्यः—

गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

वरम्, अभिलषितं यथाशक्ति दत्वा स्नायात् । अशक्तं प्रत्याह तदनुज्ञयेति । अदत्तवरोपीति भावः । तथाच गृह्यम्—विद्यान्ते गुरुमर्थेन

निमन्त्र्य कृतानुज्ञस्य वा स्नानमिति । वेदं व्रतानि वेत्यनेन स्नातकत्रैविध्यं दर्शितम् । वेदं पारं नीत्वेत्यत्रार्थावगतिरपि विवक्षिता । तथाच कूर्मपुराणम्—

वेदं, वेदौ, तथा वेदान्, वेदान् वा चतुरो द्विजः ।
अधीत्य चाधिगम्यार्थं ततः स्नायाद्यथाविधीति ॥

व्रतमात्रस्नातकेनाप्यारण्यकमधीत्यैव समावर्त्तितव्यम् ।

तथाच कारिकाकारः—

वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।
व्रतपक्षेपि शब्दार्थमारण्याध्ययने कृते इति ॥

शब्दार्थमक्षरग्रहणार्थं न त्वर्थज्ञानापेक्षापि अनुष्ठानानुपयोगात् । विरक्त्युत्तरकालं साधनचतुष्टयसंम्पन्नं प्रत्युत्तरमीमांसाप्रवृत्तेः । पूर्वोक्तं कूर्मपुराणवचनं तु कर्मकाण्डार्थज्ञानपरमिति भावः । तदेतदभिसंन्धायाहुर्मूले—

वेधानधीत्य यत्नेन पाठतो ज्ञानतस्तथा ।
समावर्त्त्य सवर्णां तु लक्षण्यां स्त्रियमुद्वहेदिति ॥

ज्ञानत इति । षडङ्गेतिहासपुराणादिष्वपि नियमविधिसत्त्वात्तदुपष्टम्भेन कर्मकाण्डार्थं निश्चित्येत्यर्थः । पाद्मे मदालसाप्रसङ्गे—

साङ्गं च सव्रतं चैव वेदमावर्त्तयेद् द्विजः ।
एतन्मुख्यमतो न्यूनं तद्गौणमिति कथ्यते इति ॥

ब्रह्मचारिधर्मलोपे तु तत्प्रायश्चित्तं कृत्वा समावर्त्तनं कार्यम् । प्रायश्चित्तं च ऋग्विधाने शौनकेनोक्तम्—

'तं वोधिया' जपेन्मन्त्रं लक्षं चैत्रे शिवालये ।
ब्रह्मस्वकीयधर्मेषु न्यूनं चेत्पूर्णमेव तदिति ॥

महानाम्न्यादिव्रतचतुष्टयलोपे त्वाह शौनकः—

व्रतानि विधिवत्कृत्वा स्वशाखाध्ययनं चरेत् ।
अकृत्वाभ्यस्यते येन स पापी विधिघातकः ॥

प्रत्येकं कृच्छ्रमेकैकं चरित्वाज्याहुतीः शतम् ।
हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनक इति ॥

यस्य ब्रह्मचर्यावस्थायां सपिण्डादिमरणं तेन समावर्त्तनानन्तरं त्रिरात्रमाशौचं कार्यम् । तदाह मनुः-

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेदिति ॥

आदिष्टी व्रतादेशयोगाद् ब्रह्मचारी। उदकं तिलाञ्जलिम्। एतच्च पित्रादिव्यतिरिक्तविषयकमित्यादि आशौचप्रकरणे वक्ष्यते ।

इति समावर्त्तनम् ॥

## अथ स्नातकव्रतानि ।

तत्राश्वलायनः-तस्यैतानि व्रतानि भवन्ति । न नक्तं स्नायात् न नग्नं स्नायात् न नग्नां स्त्रियमीक्षेत अन्यत्र मैथुनात् । वर्षति न धावेत् । न वृक्षमारोहेत् । न कूपमवरोहेत् । न बाहुभ्यां नदीं तरेत् । न संशयमभ्यापद्येतेति । तस्यैतानीति वचनं न नक्तं स्नायामिति संकल्पयेदित्येवमर्थम् । अत एव कारिकायाम्—

ततः संकल्पयेन्नक्तं न स्नायीत्युत्तराण्यपीत्युक्तम् । ततः होमसमाप्त्यनन्तरं मेखलाविसर्गात्प्राक् व्रतान्तराण्याह याज्ञवल्क्यः-

न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ।
न विरुद्धप्रसङ्गेन संतोषी च भवेत्सदा ॥
राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।
दम्भिहैतुकपाखण्डिवकवृत्तींश्च वर्जयेत् ॥ २ ॥
शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ।
न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ ३ ॥
न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।
नाहितं नानृतं चैव न स्तेनः स्यान्न वार्द्धुषी ॥ ४ ॥
दाक्षायणी ब्रह्मसूत्री वेणुमान् सकमण्डलुः ।

कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ ५ ॥
नतु मेहेन्नदीच्छायावर्त्मगोष्ठाम्बुभस्मसु ।
न प्रत्यग्न्यर्कगोसोमसंध्याम्बुस्त्रीद्विजन्मनः ॥ ६ ॥
नेक्षेतार्कं न नग्नां स्त्रीं नच संसृष्टमैथुनाम् ।
नच मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ ७ ॥
'अयं मे वज्र'इत्येव सर्वं मन्त्रमुदीरयन् ।
वर्षत्यप्रावृतो गच्छेत् स्वपेत्प्रत्यक्शिरा नच ॥ ८ ॥
ष्ठीवनासृक्सकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् ।
पादौ प्रतापयेन्नाग्नौ न चैनमपि लङ्घयेत् ॥ ९ ॥
जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत् ।
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत् ॥ १० ॥
विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ।
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ ११ ॥
नाचक्षीत धयन्तीं गां नाद्वारेण विशेत् क्वचित् ।
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः ॥ १२ ॥
प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।
दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमम् ॥ १३ ॥
देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनानि च ॥ १४ ॥
विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदा चन ।
आमृत्योः श्रियमाकाङ्क्षेन्न कंचिन्मर्मणि स्पृशेत् ॥ १५ ॥
दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।
श्रुतिस्मृत्युदितं कर्म नित्यं कर्म समाचरेत् ॥ १६ ॥
गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।
न निन्दाताडने कुर्यात् पुत्रं शिष्यं च ताडयेत् ॥ १७ ॥
कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।

अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु ॥ १८ ॥
मातृपित्रतिथिभ्रातृजामिसंबन्धिमातुलैः ।
वृद्धबालातुराचार्यैः वैद्यसंश्रितबान्धवैः ॥ १९ ॥
ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः ।
विवादं वर्जयित्वा तु सर्वान् लोकान् जयेत् गृही ॥ २० ॥
पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिषु ।
स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च ॥ २१ ॥
परशय्यासनोद्यानगृहयानानि वर्जयेत् ।
अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि ॥ २२ ॥
कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ।
वैणाभिशस्तवार्द्धुष्यगणिकागणदीक्षिणाम् ।
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥ २४ ॥
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।
शस्त्रविक्रयिकर्मारतुन्नवायश्ववृत्तिनाम् ॥ २५ ॥
नृशंसराजरजककृतघ्नवधजीविनाम् ।
चैलधावसुराजीवसहोपपतिवेश्मनाम् ॥ २६ ॥
पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ २७ ॥
शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेदिति ॥ २८ ॥
अस्यार्थः,स्वाध्यायविरोधिनमर्थं नेहेत । एतेन
सर्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः ।

इति मूलमपि व्याख्यातम् । यतस्ततः अविदिताचाराच्च । विरुद्धमयाज्ययाजनादि । प्रसंगो गीतादिः । विरुद्धं च प्रसंगश्चेति समाहारद्वन्द्वः । तथाच मनुः—

नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्मणा ।
न विद्यमानेष्वर्थेषु नार्त्यामपि यतस्ततं इति ॥

अत्र प्रसङ्गेन प्रकृष्टसङ्गेन । अत्यन्ततत्परतया नेहेतेति नारायणः । अत्र प्रकरणे नञ् पर्युदासार्थः । व्रतानीमानि धारयेदिति मनुना व्रतशब्देनोपक्रमात् । सदा अर्थालाभेपि । क्षुधा सीदान्नित्यनेन विभागादिप्राप्तकुटुम्बपोषणपर्याप्तधनो न कुतश्चिदर्थमान्विच्छेदिति गम्यते। किञ्च दम्भिहैतुकादीन् लौकिकशास्त्रीयेषु सर्वकार्येषु वर्जयेत् । लोकरञ्जनार्थमेव कर्मानुष्ठायी दम्भी। युक्तिबलेन सर्वत्र संशयकारी हैतुकः। त्रैविद्यविद्यावृद्धाऽपरिगृहीताश्रमिणः पाखण्डिनः । वकवद् वृत्तिरस्य तल्लक्षणं च मनुराह—

अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च वकवृत्तिरुदाहृत इति ॥

नीचेति । नीचं कर्त्तनाद्धस्वम् । एतेन मुण्डनं न कार्यमित्यभिप्रैति । तथाचापस्तम्बः । न समावृत्ता मुण्डयेरन् अन्यत्र विहारादिति ॥ मनुरपि—

क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिरिति ।

क्लृप्तं कर्त्तनादिना ह्रस्वतां नीतं नतु मुण्डितमिति नारायणः। हरदत्तश्च—एतेन श्मश्र्वादिप्ररोहणमपि निषिद्धं भवति। तथाच गौतमः—न रूढश्मश्रुकः स्यादिति । न संस्थितइति । उत्थितः सन् नाश्नीयादित्यर्थः । व्याघ्राद्युपहतदेशाक्रमणादिरूपं प्राणविपत्तिसंशयावहं कर्म न प्रपद्येत । न कुर्यात् । स्तेनः अदत्तादायी । वार्धुषी प्रतिषिद्धवृद्ध्युपजीवी । किञ्च, दाक्षायणी सुवर्णकुण्डलधारी ।

यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ।

इति मनुस्मरणात् । अत्र हि धारयेदित्यनुवर्त्तते। वेदम् ऐष्टिकवेदप्रकृतिं कुशमयीं मुष्टिमिति नारायणः । ब्रह्मसूत्रीति द्वितीययज्ञोपवीतप्राप्त्यर्थम् । तथाच वसिष्ठः—

स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम् ।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुरिति ॥

अयं च कमण्डलुः कलौ निषिद्ध इत्युक्तं प्राक् । दैवम् देवताप्रतिमाम् । मृदं तीर्थादुद्धृत्य स्थापिताम् । वनस्पतीन् अश्वत्थादीन् । दक्षिणतः कृत्वा व्रजेदित्यर्थः । तथाच मनुः—

मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन् इति ॥

प्रज्ञातान् प्रसिद्धान् । किं च नद्यादिषु न मेहेत् मूत्रपुरीषोत्सर्गं न कुर्यादित्यर्थः । तथा अग्न्यादीन् प्रति अग्न्यादीनामभिमुखं न मेहेत् । नाप्येतान् पश्यन् । यथाह गौतमः—न वाय्वग्निविप्रादित्यापो देवता गाश्च प्रतिपश्यन् वा पुरीषामेध्यान्युदस्येदिति । अमेध्यं ष्ठीवनादि । मूत्रपुरीषयोः पृथग्ग्रहणं तु तयोरतिशयेन वर्जनार्थमिति हरदत्तः । किञ्च अर्कं नेक्षेत । अत्र विशेषमाह मनुः—

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपसृष्टं नवारिस्थं न मध्यं नभसो गमिति ॥

उपसृष्टं राहुणा गृहीतम् । स्नानार्थं सकृद्दर्शने तु न दोषः । दृष्ट्वा स्नायादिति विधानादिति नारायणः । वस्तुतस्तु दर्शनं न विधेयमिति वक्ष्यामि । संसृष्टमैथुनाम् कृतोपभोगाम् । अनग्नामपि उपभोगान्ते न पश्येदित्यर्थः । अशुचिः सन् राहुं तारकाश्च न पश्येत् । किञ्च वर्षति सति "अयं मे वज्रः पाप्मानमपहन्तु" इति मन्त्रं पठन् सन् अप्रावृतशिरा गच्छेत् नतु धावेत् । "न प्रधावेच्च वर्षती"ति निषेधात् । नच प्रत्यक्शिराः स्वप्यात् । किञ्च ष्ठीवनादीन्यप्सु न निक्षिपेत् । एनम् अग्निम् । किञ्च अञ्जलिना सहंताभ्यां पाणिभ्यां न पिबेत् । जलग्रहणं पेयमात्रस्योपलक्षणमिति विज्ञानेश्वरः ।

तथाच मनुः—

नैकः स्वप्याच्छून्यगेहे श्रेयांसं न प्रबोधयेदिति ।

अक्षैः अक्षादिभिः । धर्मघ्नैः पशुलङ्घनादिभिः न क्रीडेत् । व्याधित इति सहार्थे तृतीया । किञ्च, जनपदादिविरुद्धं वर्जयेत् । नदीतरम्, वाहुभ्यां नदीतरणम् । नदीतडाकादि उपलक्षणमिति हरदत्तः, नारायणश्च । वाहुभ्यामिति तु विवक्षितम् । तेनोडुपादिना परिगमने न दोषः । इह जलं पिबेदित्यत्र जलस्य नदीतरमित्यत्र नद्याश्च विवक्षा तत्रैव वाहुभ्यामित्यस्य श्रेयांसं न मयोथयेदित्यत्र श्रेयस्त्वस्य चोद्देश्यविशेषणत्वेऽपि विवक्षेति वैषम्यम् । व्याख्यातृवचनमेव शरणम् । एवमग्रेऽपि । किञ्च परस्य क्षीरादि पिबन्तीं गां तस्मै नाचक्षीत । कर्तृप्रत्ययः । वत्सेन धीयमानां गां स्वामिने न ब्रूयादित्यर्थ इत्याहुः । वस्तुतस्तु धयन्तीं धापयन्तीम्, अन्तर्भावितण्यर्थाच्छतृप्रत्ययः । नाचक्षीतेत्युपलक्षणम्, नापि निवर्त्तयेत् । तथाच मनुः—

न वारयेद् धयन्तीं गां न चाचक्षीत कस्य चिदिति ॥

क्वचित् ग्रामे गृहादौ च कुद्वारेण न विशेत् । तथाचापस्तम्बः— न कुसृत्या ग्रामं प्रविशेत् । यदि प्रविशेत् "न मोमो रुद्राय वास्तोष्पत" इत्येतामृचं जपेदन्यां वा रौद्रीमिति । राज्ञ इति सकाशादिति विशेषः । सूनी प्राणिहिंसा सास्यास्तीति सूनी चक्री तिलनिष्पीडकः । ध्वजी सुराविक्रयी । नराधिपः समनन्तरोक्तो लुब्धः शास्त्रातिक्रमकारी च । यथाक्रमं दुष्टाः । एतेन

दशसूनासमश्चक्री दशचक्रिसमो ध्वजः ।
दशध्वजसमा वेश्या दशवेश्यासमो नृपः ॥

इति मूलस्थश्लोकोऽपि व्याख्यातः । गोब्राह्मणेति गवादीनि उच्छिष्टः सन् न स्पृशेत् । पदा तु अनुच्छिष्टोऽपि न स्पृशेत् । प्रमादात् स्पर्शे तु प्रायश्चित्तं मनुना स्मर्यते—

स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् ।
गात्राणि चैव सर्वाणि नाभिं पाणितलेन त्विति ॥

पुत्रं शिष्यं चेति । अत्र विशेषं मनुराह—

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चनेति ॥

शिष्ट्यर्थं ताडयेच्च ताविति च । तस्माद्विवादान्तरभङ्गेन शिष्यादिरपि न ताडनीयः । अस्वर्ग्यमिति । लोकविद्विष्टं पञ्च पञ्चनखा भक्ष्या इत्यादिस्मृतिबलाद्यद्यपि धर्मादनपेतं तथापि नाचरेत् यतोऽस्वर्ग्यम् । अपूर्वसाधनं न किन्तु अभ्यनुज्ञातमात्रम् । नन्वेवं मधुपर्कगोवधादेः स्वर्गसाधनतयानुष्ठानापत्तिः अग्नीषोमीयादिसमकक्षत्वादिति वाच्यम् । कलिनिषिद्धेषु तस्य गणितत्वात् । ये तु अग्नीषोमीयादेः स्वर्गसाधनत्वमस्ति नतु मधुपर्के गोवधस्येत्याहुः, तेषां हृदयं चिन्त्यम् । किंच मात्रादिभिः विवादं वर्जयित्वा लोकान् जयेत् । भ्राता भिन्नोदरोपि । जामयः विद्यमानभर्तृका भगिन्यः । वैद्यो विद्वान् भिषग्वा । बान्धवाः पितृपक्षा मातृपक्षाश्च । मातुलस्य पृथग्ग्रहणमादरार्थम् । सनाभयः सोदराः । अजामिभगिनीप्राप्त्यर्थमेतत् भ्रातॄणां जामिनां च पृथग्ग्रहणात् पञ्चेति । परवारिषु सर्वसत्वोद्देशेनात्यक्तेषु तडागादिषु अनेनात्मीयेषु उत्सृष्टे च पिण्डोद्धरणं विनापि स्नानमभ्यनुज्ञायते । देवखातम् पुष्करादि । पर्वताद्युच्चप्रदेशात्प्रसृतमुदकं प्रस्रवणम् । नद्यादिषु पञ्चपिण्डानुद्धरणेनैव स्नायादित्यर्थः । किंच परकीयानि शय्यादीनि । अदत्तानि अननुज्ञातानि वर्जयेत् । नोपयुञ्जीत । अग्निहीनस्येति । श्रौतस्मार्ताग्न्योरधिकाररहितस्य शूद्रादेः । अधिकारवतोप्यग्निरहितस्य च । नाद्यादित्युपलक्षणम् । न प्रतिगृह्णीयादित्यपिबोध्यम् । "प्रशस्तानां स्वकर्म तस्माद् द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्चे" ति गौतमवचनात्, कदर्येति

अत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् ।

लोभाद्यः पितरो भृत्यान् स कदर्य इति स्मृतः ॥

इति लक्षितः कदर्यः । बद्धो निगडादिना, वाचा संन्निरुद्धश्च ॥ रङ्गावतारी नटचारणमल्लादिः वैणो वेणुच्छेदनजीवी । उलेपश्छान्दसः । मांधवस्तु वैणो वीणावादनजीवीति व्याचख्यौ ॥ गणदीक्षी । बहु-

याजकः । एतेषामन्नं नाद्यादित्यनुवर्त्तते । एवमग्रेपि ॥ माधवस्तु-गणिकान्नम् गणान्नं दीक्षितान्नं चेति वा । तथाच मनुः—

गणान्नं गणिकान्नं चेति । दीक्षितस्य कदर्यस्येति च । अत्र दीक्षितान्नस्याग्नीषोमीयवपायागात् प्रागेव निषेधः । "असंस्थितेऽग्नीषोमीये यजमानस्य गृहे नाशितव्य" मिति श्रुतेः ॥ क्रीतराजको भोजनमित्याथर्ववेदिकं वाक्यं तु आपदि अभ्यनुज्ञानार्थम् । तदाहुर्भट्टाः—

तथैव प्राणपीडायां क्रीतराजकभोजनमिति ।
सामान्येनाभ्यनुज्ञानाद्विशेषश्च विशिष्यते ।
विशेषात्यन्तनिर्दोषस्तोकदोषेतरात्क्रियेति च ॥

आतुरः कुष्ठादिमहारोगोपसृष्टः । मत्तो विद्यादिना गर्वितः । क्रूरः दृढाभ्यन्तरकोपः । उग्रः वाक्कायव्यापारेणोद्वेजकः ।

वैश्याशूद्र्योस्तु राजन्यान् माहिष्योग्रौ सुतौ स्मृताविति ॥

लक्षित उग्र इति नारायणः । व्रात्यः पतितसावित्रीकः । अवीरा स्वतन्त्रा । पतिपुत्ररहितेत्यन्ये । पुंवत्कर्मधारयेति पुंवद्भावाभाव आर्षः । ग्रामयाजी ग्रामस्य शान्त्यादिकर्त्ता । बहूनामुपनेता वा । कर्मारो लोहकारः । तक्षणादिकर्त्ता वा । तुन्नवायः सूचीशिल्पोपजीवी । श्वभिर्वृत्तं जीवनमस्यास्तीति श्ववृत्ती । अत इनिठनाविति इनिः । एकाक्षरात्कृतो जातेरित्यस्यानित्यत्वात् । नृशंसो निर्दयः । राजा तत्पुरोहितोपि, राजपुरोहितोपि । राजपुरोहितान्नानि वर्जयेदिति शङ्खवचनात् । रजकः । वस्त्रादीनां नीलादिरागकारः । चैलधारो वस्त्रनिर्णेजनकृत् । सुराजीवी मद्यविक्रयी । उपपतिर्जारः तेन सह वेश्म यस्य । चाक्रिकस्तैलिकः शाकटिको वा । अभिशस्तपतितचाक्रिकतैलिकेति भेदनाभिधानात् । सर्वे चैते कदर्यादयो द्विजा एव बोध्याः । अर्धसीरी हलपर्यायसीरोपलक्षितकृषिफलभागग्राही । आत्मानं निवेदयेत् त्वदीयोहमस्मीति । एते दासादयः शूद्रेषु भोज्यान्नाः । चकारात्कुम्भकारः । गोपनापितकुम्भकारेत्यादिवचनात् । शूद्रविशेषस्य भो-

ज्यान्नत्वं चात्यन्तापद्विषयमिति हरदत्तः । नारायणस्तु—

कन्दुपक्कं शूलपक्कं पायसं दधिसक्तवः ।
एतानि शूद्राद् ग्राह्याणि भोज्यानि मनुरब्रवीत् ।

इतिवचनमुदाहृत्य अन्नाविशेषपरतामाह । वस्तुतस्तु कलिनिषिद्धेषु शूद्रेषु दासगोपालकुलमित्रार्धसीरिणां भोज्यान्नतेति गणितत्वान्नैतस्य निष्कर्षे यत्यते । तथा माधवीये कूर्मपुराणम्—

नाधार्मिकैर्वृते ग्रामे न व्याधिबहुले भृशम् ।
न शूद्रराज्ये निवसेन्न पाखण्डिजनैर्वृते ॥
कृष्णो वा यत्र चरति मृगो नित्यं स्वभावतः ।
पुण्याश्च विश्रुता नद्यस्तत्र कामं वसेद् द्विजः ॥
परस्त्रियं न भाषेत नायाज्यं याजयेद्बुधः ।
न देवायतनं गच्छेत्कदाचिच्चाऽप्रदक्षिणम् ॥
न वीजयेद्वा वस्त्रेण समवायं च वर्जयेत् ।
नैकोऽध्वानं प्रपद्येत नाऽधार्मिकजनैः सह ॥
न निन्द्येद्योगिनः सिद्धान् व्रतिनो वा यतींस्तथेति ॥

माधवीये मार्कंडेयोपि—

असत्प्रलापमनृतं वाक्पारुष्यं विवर्जयेत् ।
असच्छास्त्रमसद्वादमसत्सेवां च पुत्रक ॥
न म्लेच्छभाषां शिक्षेत न पश्येदात्मनः शकृत् ।
नाधितिष्ठेत्सकृन्मूत्रं केशभस्मकपालिकाः ॥
तुषाङ्गारास्थिशीर्णानि रज्जुवस्त्रादिकानि च ।
वर्जयेन्मार्जनीरेणुं नापेयं च पिबेद् द्विज इति ।

मनुरपि—

स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत् ।

इत्युपक्रम्याह—

वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।

वेषवाग्बुद्धिसारूप्यमाचरन् विचरेदिह ॥
बुद्धिवृद्धिकराण्याशु धान्यानि च हितानिच ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥
न सीदेत् स्नातको विप्रः क्षुधा शक्तः कथंचन ।
न जीर्णमलवद्वासा भवेच्च विभवे सति ॥
न लङ्घयेत् वत्सतन्त्रीं न प्रधावेच्च वर्षति ।
न चोदके निरीक्षेत स्वं रूपमिति धारणा ॥
नाश्नीयाद्भार्यया सार्द्धं नैनामीक्षेत चाश्नतीम् ।
क्षुवतीं जृम्भमाणां वा नचाऽऽसीनां यथासुखम् ॥
नाञ्जयन्तीं स्वके नेत्रे नचाऽभ्यक्तामनावृताम् ।
न पश्येत् प्रस्नुवन्तीं च तेजस्कामो द्विजोत्तमः ॥
नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत् ।
न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ॥
न फालकृष्टे न जले न चित्यां नच पर्वते ।
न जीर्णदेवायतने न वल्मीके कदाचन ॥
न ससत्वेषु गर्त्तेषु न गच्छन्नापि च स्थितः ।
न नदीतीरमासाद्य नच पर्वतमस्तके ॥
नोदक्ययाभिभाषेत यज्ञं गच्छेन्नंचावृतः ।
अग्न्यगारे गवां गोष्ठे ब्राह्मणानां च संनिधौ ॥
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ।
नदीमिन्द्रायुधं दृष्ट्वा कस्य चिद्दर्शयेद्बुधः ॥
न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् ।
न नृत्येदथवा गायेद् न वादित्राणि वादयेत् ॥
न पादौ धावयेत्कांस्ये कदाचिदपि भोजने ।
न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते ॥
उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।

उपवीतमलङ्कारं स्रजं करकमेव च ॥
बालातपः प्रेतधूमो वर्ज्यो भिन्नं तथाऽऽसनम् ।
न मृल्लोष्ठं विमृद्नीयान्न च्छिन्द्यात्करजैस्तृणम् ॥
न कर्म निष्फलं कुर्यान्नायत्यामसुखोदयम् ।
न विगर्ह्य कथाः कुर्यात् वहिर्माल्यं न धारयेत् ॥
गवां पृष्ठेन यानं तु सर्वथैव विगर्हितम् ।
रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत् ॥
सर्वं च तिलसंवद्धं नाद्यादस्तमये प्रति ।
नच नग्नः शयीतेह नचोच्छिष्टः क्वचिद्व्रजेत् ॥
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ।
अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः ॥
न कार्पासस्यास्थि तुषान् दीर्घमायुर्जिजीविषुः ।
न शूद्राय मतिं दद्यात् नोच्छिष्टं न हविष्कृतम् ॥
नचास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ।
न संहताभ्यां पाणिभ्यां कण्डूयेतात्मनः शिरः ॥
न स्पृशेच्चैतदुच्छिष्टो नच स्नायाद्विना ततः ।
केशग्रहान् महारांश्च शिरस्येतानि वर्जयेत् ॥
शिरःस्नातस्तु तैलेन नाङ्गं किंचिदपि स्पृशेत् ।
न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि ॥
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ।
देवतानां गुरोराज्ञां स्नातकाचार्ययोस्तथा ॥
नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च ।
मध्यंदिनेऽर्धरात्रे वा श्राद्धं भुक्त्वा च सामिषम् ॥
संध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् ।
भद्रं भद्रमिति ब्रूयाद् भद्रमित्येव वा वदेत् ॥
शुष्कवैरं विवादं च न कुर्यात्केन चित्सह ।

नातिकल्यं नातिसायं नातिमध्यंदिने स्थिते ॥
नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह ।
अनातुरः स्वानि खानि न स्पृशेदनिमित्ततः ॥
रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत् ।
मङ्गलाऽऽचारयुक्तः स्यात्प्रयतात्मा जितेन्द्रियः ॥
जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः ।
मङ्गलाऽऽचारयुक्तानां नित्यं च नियतात्मनाम् ॥
जपतां जुह्वतां चैव विनिपातो न विद्यते ।
वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः ॥
सावित्रान् शान्तिहोमांश्च कुर्यात्पर्वसु नित्यशः ।
पितॄंश्चैवाष्टकास्वर्चेत् नित्यमन्वष्टकासु च ॥
मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषं दम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत् ॥
परस्य दण्डं नो यच्छेत् क्रुद्धो नैनं निपातयेत् ।
अन्यत्र पुत्राच्छिष्याच्च शिष्ट्यर्थं ताडयेच्च तौ ॥
प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् ।
अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः ॥
अम्भस्यश्मप्लवेनैव सह तेनैव मज्जति ।
न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ॥
परकीयनिपानेषु न स्नायाद्धि कदाचन ।
सप्तोद्धृत्य ततः पिण्डान् कामं स्नायाच्च पञ्च वा ॥
उदपानात्स्वयंगृह्य वहिः स्नात्वा न दुष्यति ।
यमान् सेवेत सततं न नित्यं नियमान् बुधः ॥
आनृशंस्यं, क्षमा, सत्यम्, अहिंसा, दम, मस्पृहम् ।

ध्यानं, प्रसादो, माधुर्य्यं, मार्जवं, च यमा दश ॥
शौच,मिज्या, तपो, दानं, स्वाध्यायो,पस्थनिग्रहौ ।
व्रतो,पवासौ, मौनं, च स्नानं च नियमा दश ॥
नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्मादवृत्तावेकरात्रिकम् ॥
उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत्सदा ।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥
गुरून् भृत्यांश्चोज्जिहीर्षन् आर्चिष्यन् देवताऽतिथीन् ।
सर्वतः प्रतिगृह्णीयाद् नतु तृप्येत्स्वयं ततः ॥
येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन् न रिष्यति ॥
एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती ।
स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः शुभः ॥
अनेन विप्रो वृत्तेन वर्त्तयन् वेदशास्त्रवित् ।
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते इति ॥

स्वर्ग्यायुष्येत्यादेर्मनुग्रन्थस्यायमर्थः । वयसो बाल्यादेः । कर्मणो यागादेः ।अर्थस्य धनस्य । वेषं सारूप्यम् । तदनुरूप आत्मन्युत्कर्षप्रत्ययः । शास्त्राणि विद्यास्थानानि । नियमान् व्याख्यानानि । नियम्यते एभिरर्थ इति व्युत्पत्तेः । शक्तः अर्जनसमर्थः । वत्सतन्त्रीं गोवत्सबन्धनं, दामेति नारायणः । वत्सशब्दो जातरूपलक्षणामिति हरदत्तो नोपरिवत्सतन्त्रीं गच्छेदिति गौतमस्मृतेर्व्याख्यायाम् । धारणा निश्चयः । नाश्नीयादिति । सार्धमेकपात्रे इति नारायणः । एकस्मिन् काले भोजनं निषिध्यत इति व्याख्यानान्तरं हरदत्तेन कृतम् । यत्तु माधवीये अङ्गिरोवचनम्—

ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन ।
न तस्य दोषमिच्छन्ति नित्यमेव मनीषिण इति ॥

तद्विवाहविषयामिति विज्ञानेश्वरस्मृत्यर्थसारप्रभृतयः। एतेन ब्राह्मण्या भार्यया सार्द्धं क्वचित् भुञ्जीत वाऽध्वनि।

अधोवर्णस्त्रिया सार्द्धं भुक्त्वा पतति तत्क्षणाद्।

इति माधवोदाहृतमादित्यपुराणवचनमपि व्याख्यातम्। क्वचिद्विवाहे अध्वनि चेत्यर्थात्। इदमपि सर्वथा दोषाभावपरं न भवति। किन्तु दोषाल्पत्वपरमिति माधवाचार्याः। क्षुवतीं क्षुतंकुर्वतीम्। टुक्षु शब्दे। नाञ्जयन्तीमिति। एतच्च न भार्यामात्रविषयं किन्तु स्त्रीमात्रपरम्। भार्यया सहभोजनम्, अञ्जयन्त्यवेक्षणं च वर्जयेदिति गौतमस्वरसादिति मतान्तरं हरदत्तेनोक्तम्। प्रस्नुवन्तीं पुत्रं पाययन्तीमित्यर्थः। नुम् छान्दसः। ष्णुप्रस्रवणे। एकवासा नग्नो वा नाद्यान्न च स्नायादिति नारायणः। जीर्णे शीर्णे प्राकारादौ तथा देवतायतने चेत्यर्थः। अवृतो यजमानेनाऽनामन्त्रितः। इदं चार्त्विज्यादिलोभेन न गच्छेदित्येवं परम्। दिदृक्षया गमने तु न दोषः। तथाच गौतमः—

न यज्ञमवृतो गच्छेद्दर्शनाय तु कामत इति।

गोष्ठे स्थाने। उद्धरेदिति उत्तरीयाद्बहिः कुर्यादित्यर्थः। उद्धृतस्नेहं पिण्याकादि। तक्रे तु वचनाददोष इति नारायणः। हरदत्तस्तु—उद्धृतस्नेहविलयनपिण्याकमथितप्रभृतीनि चानन्तवीर्याणि नाश्नीयादिति गौतमवचनमुपादाय उद्धृतस्नेहे उपात्ताग्रमण्डे दधिपयसी, विलयनं नवनीतमलम्। यस्य मथनमात्रं नाम्बुसंसर्गः तद्दधिमथनम्। उद्धृतनवनीतं तक्रं तु आश्यमनाश्यं वेति चिन्त्यम्। आचारस्त्वशनमेवेति।

तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बुनिर्जलमिति।

नैघण्टुका इति व्याख्यत्। अतिसौहित्यम् अत्यशनम्। करकं मृत्कमण्डलुम्। बालातपः सङ्गवकालातपः, शरदि पुनःसंधुक्षणादादित्यस्य बाल्यं तदातपो बालातप इत्यन्ये। करजैर्नखैः। कर्मकारीयादिकाम्यम्। निष्फलं फलसंकल्पशून्यं न कुर्यात्। वृथाचेष्टा त्व-

स्मिन्नेव प्रकरणे पृथङ्गिलिपिद्वा ।

न कुर्वीत वृथाचेष्टां न वार्यञ्जलिना पिबेदिति ।

वहिर्माल्यं शिखावेष्टनेन । सवृषं चेति रथादियोजनेन तु गोभिर्यानम् ईषद् गर्हितमिति तात्पर्य्यम् । तिलसंबद्धं तिलप्रकृतिकं तैलाद्यपि । अस्तमयं प्रति । तदनन्तरम् । संविशेत् शयीत । कपालिका घटाद्यंशः । कार्पासस्यास्थि वीजम् । मतिं दण्डनीतिशास्त्रादिविषयम् । अयं च साक्षादुपदेशे निषेधः

श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रत इति ।

ब्राह्मणद्वारकोपदेशस्याभ्यनुज्ञानात् । नोच्छिष्टमिति । अत्र हरदत्तः-गृहस्थशूद्रविषयकोयमुच्छिष्टदाननिषेधः । उच्छिष्टमन्नं दातव्यं शूद्रायागृहमेधिने । गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिने इति व्याघ्रवचनात् । एवं च गौतमीये दशमेऽध्याये उच्छिष्टाशनं शिल्पवृत्तिश्चेति शूद्रधर्मेषु यत्पठ्यते तदपि अगृहस्थशूद्रपरमेवेति वोध्यम् इति आस्थितवान् । हविष्कृतामिति यत आकृष्य हुतं हविस्तं पुरोडाशादिहविःशेषम् । नचास्येति पूर्ववत् । पूर्वं दण्डनीत्यादिविषयिणी मतिर्न देयेत्युक्तम् । सम्प्रति धर्मादिविषयिणीत्यपौनरुक्त्यम् । एतदिति शिर इत्यर्थः । ततः शिरसो विना । इदन्तु शक्तविषयम् । "आशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणा" मिति स्मरणात् । केशग्रहान् परेण स्वशिरःकेशग्रहान् । अङ्गं स्वाङ्गं न स्पृशेन्न त्रसयेत् । बभ्रुणः कपिलस्य प्राणिनश्छायाम् । श्राद्धं भुक्त्वा तथा सामिषं भुक्त्वा न सेवेत चिरं तत्र न तिष्ठेत् । भद्रं वस्तुतो यच्छोभनम् । भद्रमित्येवेति अभद्रमपीति भावः । तथाच गौतमः—अधेनुं धेनुभव्येति ब्रूयादभद्रं भद्रमिति । कपालं भगालमिति मणिधनुरिन्द्रधनुरिति । धेनुः पयस्विनी गौः अधेनुस्तद्विपरीता । तामधेनुभव्येति ब्रूयात् । न पुनरधेनुरिति । धेनोर्भव्ये इति वार्त्तिकोक्तो मुम् आर्षत्वान्नेति वोध्यम् । अभद्रमपि वस्तु भद्रमित्येव ब्रूयात् । कपालं ब्रुवन् भगालमिति ब्रूयात् । इन्द्रधनुरिति ब्रुवन् मणि-

धनुरिति ब्रूयादिति हरदत्तो व्याख्यत् । अतिकल्पम् उदयास्त-मये मैत्रं विष्ठोत्सर्गम् । मित्रदेवताप्रसाध्यत्वात् । वक्ष्यति हि मनुः—मित्रमुत्सर्ग इति । अञ्जनं तैलाभ्यङ्गम् । अहिंसादममिति समाहारद्वन्द्वः । स्पृहाया अभावः अस्पृहम् अर्थाभावेऽव्ययीभावः । स्वाध्यायसहित उपस्थनिग्रह इति मध्यमपदलोपी समासः । अश्राद्धिनः श्रद्धारहितस्य । येनास्येति । यत्र व्याख्यातॄणां श्रुत्यर्थे विप्रतिपत्तिस्तद्विषयकमेतत् । सतां मार्गे सदाचारविषयम् । न रिष्यते न हिंस्यते। रुषरिषहिंसायां कर्मणि लट् । अनेन विप्र इति । ब्रह्मचारिणोपि अविरुद्धानि स्नातकव्रतान्येतेन प्राप्यन्ते । अत एव नेक्षेतोद्यन्तमित्यनेन स्नातकप्रकरणस्थेन विशेषेण भास्करालोकननिषेधस्य ब्रह्मचारिप्रकरणे सामान्यतः श्रुतस्याप्युपसंहारमाह विज्ञानेश्वरः । मनुग्रन्थस्य भास्करालोकसामान्यनिषेधस्य तद्ग्रन्थस्थेनैव विशेषेणोपसंहारे सामान्ये वा वैयर्थ्यं स्यादिति नात्रोपसंहार इति तु हरदत्तादयः । एतद्व्रतप्रकरणे च मनु, याज्ञवल्क्याभ्यामुपाकर्मानध्यायावुक्तौ । अत एव ग्रहणाध्ययनप्रकरणाभावाद्धारणाध्ययनेप्यङ्गमुपाकर्म । गोभिलवाक्यं च धारणाध्ययनाङ्गत्वादित्यादि प्रागेवोदाहृतम् । एवं चानध्याया अपि धारणाध्ययनादिसाधारणाः । अतएव ब्रह्मयज्ञाध्ययनादौ अनध्यायाध्ययनप्रतिप्रसवाः पूर्वोक्ताः सङ्गच्छन्ते । अत एव च श्वनकुलादीनामन्तरागमने त्र्यहैकाहयोर्ग्रहणाध्ययनधारणाध्ययनपरत्वेन व्यवस्था विज्ञानेश्वरहरदत्तादिभिरुक्ता सङ्गच्छते । यत्तु प्रसङ्गलक्षणे तृतीयचरणे 'मन्त्राणां कर्मसंयोगे स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वा' दित्यधिकरणे पर्वणि नाध्येतव्यमित्यादीनां प्रकरणाद् ग्रहणाध्ययनाङ्गतेत्युक्तं तत्तु धारणाध्ययनाङ्गताग्राहकं नास्तीति कृत्वाचिन्तामनुरुध्य । उपयोक्ष्यते च समानन्यायेषु भिक्षाचर्यादिषु न चैवं सिद्धान्ते कर्मकालेप्यनध्याये मन्त्रप्रयोगानुपपत्तिः । वाचनिकस्य प्रतिप्रसवस्य प्रागेवोदाहृतत्वादिति दिक् ।

इदानीं गौतमोक्तानि प्रागुक्तेष्वन्तर्भूतानि स्नातकव्रतान्युच्यन्ते नवमे ऽध्याये । न रक्तमुल्वणमन्यधृतं वा वासो बिभृयात् । रक्तं कुसुम्भादिना । उल्वणं बहुमूल्यम् । अन्येन गुरुभिन्नेन धृतमिति हरदत्तः । न स्रगुपानहौ अन्यधृते इति विपरिणमय्य सम्बध्यते । निर्णिक्तमशक्तौ । अशक्तौ अन्यालाभे अन्यधृतं वासः स्रजमुपानहौ च निर्णिज्य धारयेत् । 'नपुंसकमनपुंसकेन' त्येकशेषैकवद्भावौ । न तिष्ठन्नुद्धृतोदकेनाचामेत् । एतेन जानुदघ्ने जले तिष्ठतोप्याचमनमनुज्ञातमिति हरदत्तः । न शूद्राशुच्येकपाण्यावर्जितेन । शूद्रेण शुचिनापि, तथा अशुचिना ब्राह्मणेनापि, तथा एकेन पाणिना शुचिब्राह्मणेनापि यदुदकमावर्जितं तेन नाचामेत् । यद्यपि यत्स्वयं वामहस्तेनावर्जितं दक्षिणेनाचम्यते तथा तत्र हस्तद्वयस्याप्याचमने सम्बन्धाददोष इति हरदत्तः । नाकल्पां नारीमभिरमयेत् । अकल्पाम् अस्वस्थां न गच्छेत् । पादपादधावना सन्दीस्थभोजनादीनि वर्जयेत् । पादेन पादस्य पादप्रक्षालनं, पीठिकास्थभोजनं च वर्जयेदित्यर्थः । न प्रावृत्य शिरोऽहनि पर्यटेत्, प्रावृत्य रात्रौ । रात्रौ प्रावृत्यैव पर्यटेदित्यर्थः । मूत्राचारे च । मूत्रपुरीषं प्रावृतशिराः सन् कुर्यादित्यर्थः । सोपानत्कश्चाशनाभिवादननमस्कारान् वर्जयेत् । उपानच्छब्दः पादुकाद्युपलक्षणमिति हरदत्तः । न पदासनमपकर्षेन्न शिश्नोदरपाणिवाक्चक्षूंषि चपलानि कुर्यात् । अपकर्षणमात्मसमीपप्रापणम् । पाणिचापलं शिल्पकर्मशिक्षा । चक्षुश्चापलं नृत्तादिदिदृक्षयेति हरदत्तः । न कुलङ्कुलः स्यात् । कुलमेव कुलं यस्य स कुलङ्कुलः । मुमागमश्छान्दसः । अन्यत्राध्ययनादौ लभ्यमाने स्वकुल एव न तिष्ठेदित्यर्थः । एते च स्नातकधर्मा अविरुद्धाः शूद्रेणाप्यनुष्ठेया इति केचित् । तथाच याज्ञल्क्यः—

शूद्रस्य द्विजशुश्रूषा तया जीवन् वणिग्भवेत् ।
शिल्पैर्वा विविधैर्जीवेद् द्विजातिहितमाचरन् ।
भार्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियारतः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेदिति ।

अत्र श्राद्धानि क्रियाश्चेति द्वन्द्वः । क्रियाः स्नातकव्रतानि इति विज्ञानेश्वरः । एतेन गौतमे दशमेऽध्याये शूद्रश्चतुर्थो वर्ण इत्युपक्रम्य श्राद्धकर्मभृत्यभरणं स्वदारतुष्टिरिति यदुक्तं तत्रत्यं श्राद्धकर्मपदमपि समाहारद्वन्द्वरूपं, कर्मपदं च स्नातकव्रतोपसंग्राहकमिति विज्ञानेश्वरेण ध्वनितम् । हरदत्तस्त्वाह—श्राद्धाक्रियेति श्राद्धकर्मेति च श्राद्धमेवोच्यते नतु द्वन्द्वः । स्नातकधर्माणामप्रकृतानां क्रियाशब्दमात्रेणालाभात् । प्रत्युत स्मृतिविरोधः

स्नातकव्रतलोपेषु प्रायश्चित्तं विधीयते ।
राजब्राह्मणयोरेव नेतरषां कथञ्चनेति ।

वचनात् । अतएव वैश्यस्यापि नैते धर्माः । किंतु ये वैश्यं प्रति विशिष्य स्मृतिषूक्तास्तावन्त एवेति । गौतमीयनवमाध्याये मिताक्षरायां स्फुटतरमिदम् । युक्तं चैतत् । शूद्रधर्मताभ्युपगमे संकीर्णेष्वपि 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृता' इत्यपि देशात्तत्प्राप्तौ उदाहृतस्मृतेर्निर्विषयतापत्तेः । यानि तु व्रतेषु पठितान्यपि पुनरन्यत्र पठ्यन्ते तेषां यथायथं शूद्रादिषु प्राप्तिरिष्टैव । "यथा नाहितं नानृतं चैवे" ति व्रतेषु पठितम् । "सत्यं दया दमः शौच"मिति च साधारणधर्मेषु । अनृतप्रतिपक्षभूतं सत्यमुच्यमानं शूद्रादीनां भवत्येव । यथा शूद्रेषु दासगोपालादीनामभोज्यान्नता मन्वादिभिर्व्रतेषु पठिता गौतमेन तु नवमे व्रतान्यभिधाय सप्तदशे भक्ष्याभक्ष्यप्रकरणे पठिता वैश्यस्यापि भवत्येव । एवं तत्रैवान्येपि व्रतान्तरगताः पठ्यन्ते । अत एकव्रतव्याख्यानशेषे नारायणः-अन्यत्रोक्तानामपीह पुनरभिधानं संकल्पप्राप्त्यर्थं व्रतलोपनिमित्तकृच्छ्राभोजनादिप्रायश्चित्तप्राप्त्यर्थं चेति । अत्र चाश्वलायनोक्तानि न नक्तं स्नायादित्यादीनि समावर्त्तनप्रकरणपाठात्तदङ्गानि तत्प्रयोगमध्य एवानुष्ठेयानीत्युक्तम् । यानि तु नेक्षेतोद्यन्तमित्यादिना मन्वादिभिरुक्तानि तानि पुरुषार्थानि । तथाच प्रयोजकलक्षणे प्रथमचरणे जैमिनिसूत्रम् 'तद्युत्सर्गे कर्माणि पुरुषार्थाये' त्यादि ।

उपक्रमे शृतं ब्रह्मचारिव्रतपदं यतः ।
तदन्वयबलात्कर्मविशेषोऽतोऽत्र चोद्यते ॥
तेन लक्षणयाप्यत्र पर्युदासः सच क्रतोः ।
बहिःश्रुतफलाकाङ्क्षी पुरुषार्थत्वमृच्छति ॥
श्रुत्यादिक्रतुसंबन्धे प्रमाणं नात्र विद्यते ।
पुरुषापेक्षितार्थत्वं विधिना चावबोधितम् ॥
साक्षादपेक्षितं तस्य फलमेव नतु क्रतुः ।
अतः फलार्थता तच्च वाक्यशेषादघक्षयः ॥

इति पार्थसारथिश्च । वाक्यदोषादिति । "एतावताहैनसाऽयुक्तो भवती" त्येवंरूपादित्यर्थः । यद्यप्यस्मिन्नाधिकरणे ब्रह्मचारिधर्मभूतप्रजापतिव्रतान्तर्गतं नेक्षेतोद्यन्तमित्येतदुदाहृत्य विचारितं तथापि समानन्यायत्वात् स्नातकव्रतान्तर्गतेप्येतत्सिद्धान्तप्रवृत्तिरित्याशयेनेदमुच्यते । एवञ्च ब्रह्मचारिणं प्रत्यविशेषेण सूर्यदर्शनं निषिध्यत इति हरदत्तोक्तिः पार्थसारथिप्रभृतिग्रन्थैर्विरुध्यत इति चिन्त्यम् । एवंस्थिते कदा संकल्प इत्याकाङ्क्षायां नोद्यन्तमिति शतृप्रत्ययेनादित्योदयस्य निमित्तत्वप्रतिपादनात्तत्तदवस्थे आदित्ये सति तद्दीक्षणाभावः संकल्पयितव्यः । नोद्यन्तमीक्षेतास्तं यन्तमित्यादि तन्त्ररत्ने स्थितम् । तत्र प्राचां श्लोकोप्युदाहृतः

त्रिसंध्यं जपतानेन सावित्रीं नेक्षइत्ययम् ।
आदित्यं ध्यायता कार्यः संकल्पः पापनाशन इति ॥

अत्र वदन्ति । शतृप्रत्ययो लटः शतृशानचावित्यनेन लक्षणहेत्वोरित्यादिना च विहितः । तत्रायं हेतावेवेत्यत्र प्रमाणाभावः । किंच हेतुः फलमिति व्याख्यायामर्जयन् वसतीति वैयाकरणैरुदाहृतत्वादर्जनफलकवासवानिति च विवरणात्प्रकृते तदन्वयः । अर्थलक्षणपरिचायकमिति व्याख्याय शयाना भुञ्जते यवना इति चोदाहृत्य शयनोपलक्षितभोजनकर्त्तार इति विवरणात् तद्वदिहापीत्यभिमतम् । तर्हि उदयपरिचायितं

यद्दीक्षणं तद्भावसंकल्पस्य व्रतान्तरसंकल्पकाले सकृदेव चानुष्ठाने को विरोधः । नाप्यत्र शतृबलाद्वर्त्तमानताप्रतीतिः । अर्जयन्नवात्सीद्वत्स्यति चेत्यादिवत् । तथाच पाणिनिः—"धातुसंबन्धे प्रत्ययाः" इति असूत्रयत् तदा उत्पत्स्यमानेपि सोमयाजी पुत्रो भवितेत्यादि च भाष्यादावुदाहृतम् । वसन् ददर्शेत्यादि प्रयोगाश्चैवं सङ्गच्छन्ते । किंच,

नाश्नीयाद्भार्यया सार्द्धं नैनामीक्षेत चाश्नतीम् ।
क्षुवतीं जृम्भमाणां च नचासीनां यथासुखम् ।
नाञ्जयन्तीं स्वके नेत्रे—

इत्यादावपि तथात्वापत्तौ बहु व्याकुलीस्यात् । तस्मात्समावर्त्तनप्रयोगं समाप्य पुरुषार्थानीमान्यपि व्रतानि संकल्पयेदित्येव युक्तम् । नच प्रत्यहं संकल्प इत्यंशे तदुत्सर्गइत्याद्यधिकरणस्य कश्चिद्व्यापारोस्ति क्रत्वर्थत्वं पूर्वपक्षीकृत्य पुरुषार्थतासमर्थनमात्रेणाधिकरणपर्यवसानात् । व्याख्यातृवचसश्च प्रासङ्गिकस्य व्याकरणादिविरोधे उपेक्षणीयत्वादिति दिक् । इति स्नातकव्रतनिरूपणम् ।

## अथ क्रमप्राप्तो विवाहः ।

सच त्रिविधेनापि वेदव्रतोभयस्नातकेन समावर्त्तनादविलम्बेन कर्त्तव्यः

अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।

इति दक्षवचनात् । तत्र मूलम्—

समावर्त्य सवर्णां तु लक्षण्यां स्त्रियमुद्वहेदिति ।

लक्षण्यां बाह्याभ्यन्तरलक्षणान्विताम् ।

तत्र बाह्यानि लक्षणान्याह मनुः—

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियमिति ॥

यस्याअङ्गस्याङ्गेषु अङ्गुल्यादिष्वपि वैगुण्यं नास्ति सा अव्यङ्गाङ्गी। वर्ज्यान्याह सएव—

नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोहिणीम् ।
नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम् ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं नच भीषणनामिकामिति ॥

कपिला रक्ततण्डुलवर्णा । पिङ्गला अग्निवर्णा । अन्त्यनाम्नी म्लेच्छनाम्नीति माधवः। अन्त्यनाम्नी चाण्डालीत्यादिनाम्नी । पर्वतनामिका विन्ध्येत्यादिनामिका । प्रेष्यनाम्ना दासीत्यादिनाम्नी । भीषणनामिका चामुण्डेत्यादिरिति नारायणः । विष्णुपुराणे—

न श्मश्रुव्यञ्जनवतीं नचैव पुरुषाकृतिम् ।
न घर्घरस्वरां क्षामां तथा काकस्वरां नच ॥
यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ ।
गण्डयोः कूपकौ यस्या हसन्त्यास्तां च नोद्वहेदित्यादि ॥

आन्तराणि तु लक्षणानि आश्वलायनगृह्ये उक्तानि। दुर्विज्ञेयानि लक्षणान्यष्टौ पिण्डान कृत्वा " ऋतुमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यता " मिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति। क्षेत्राच्चेदुभयतः सस्यात् गृह्णीयादन्नवत्यस्याःप्रजा भविष्यतीति विद्याद् ,गोष्ठात्पशुमती, वेदिपुरीषाद्ब्रह्मवर्चस्विनी,अविदासिनो ह्रदात्सर्वसम्पन्ना,देवनात्कितवी,चतुष्पथाद्विप्रव्राजिनी,इरिणादधन्या,श्मशानात्पतीघ्नीति । अस्य वृत्तिकृदुक्तोर्थः । लक्षणानि दुर्विज्ञेयानीति कृत्वा एवं परीक्षते । क्षेत्रादिभ्योऽष्टभ्यो मृदमाहृत्याष्टौ पिण्डान् कृत्वा ऋतमित्यनेन मृत्पिण्डानभिमन्त्र्य कुमारीं ब्रूयात । यदेकस्मिन् वत्सरे द्विः फलति तदुभयतः सस्यं क्षेत्रम् । अपवृत्ते कर्मणि या वेदिः सा वेदिपुरीषम्। अविदासी ह्रदः, न विदस्यति इति व्युत्पत्त्या अशोष्यो ह्रदः । तमुदस्युउपक्षये णिनिः । देवनं द्यूतस्थानम् । द्वौ प्रव्रजतीति द्विप्रवाजिनी । माधवस्तु—विविधं प्रकर्षेण व्रजतीति विप्रव्राजिनी स्वैरिणीत्यर्थ इत्याह । यत्रोप्तं न प्ररोहति तदी-

रिणम्। इयं च लक्षणपरीक्षा कुलपरीक्षानन्तरं बोध्या। तथाचाऽऽश्वलायनः—कुलमग्रे परीक्षेतेति। कुलपरीक्षा च सदाचारादिगुणवत्तया हीनक्रियत्वादिदोषहीनतया च। तत्र दोषानाह मनुः—

स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत्।
हीनक्रियं निष्पुरुषं निश्च्छन्दो लोमशार्शसम् ॥
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि चेति ॥

हीनक्रियं योगादिक्रियारहितम्। निष्पुरुषं स्त्रीमात्रशेषम्। निश्च्छन्दोऽध्ययनवर्जितमिति माधवः। याज्ञवल्क्यः—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजामिति ॥

अविप्लुतं ब्रह्मचर्यं यस्य सः। विप्लवे सति तु कृतप्रायश्चित्त इति बोध्यम्। अनन्येति। या दानेनोपभोगेन वा पुरुषान्तरपूर्विका न भवति ताम्। अनेन सप्त पुनर्भुवो व्यावर्त्यन्ते। तथाचाह बोधायनः—वाग्दत्ता मनोदत्ता अग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां न धर्मं विन्देदिति। अत्र वाग्दत्तामनोदत्तयोर्निषेधः पूर्वस्य निर्दोषत्वे बोध्यम्। अतएव नारदः—

दत्तां न्यायेन यः कन्यां वराय न ददाति ताम्।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवदिति ॥

तत्रैव दण्डं विधत्ते। दुष्टे तु पूर्ववरे वाग्दत्तापि वरान्तराय देया। तथाच पराशरः—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयत इति ॥

अस्यार्थः, वाग्दानानन्तरं पाणिग्रहणात्प्राक् पतौ सम्भावितोत्पत्तिकपतित्वे पूर्वस्मिन् वरे नष्टे सति लक्षणया दूरदेशगमनेनाऽपरिज्ञा-

तद्वृत्तान्ते सति । तथाच नारदः—

परिगृह्य तु यः कन्यां नरो देशान्तरं व्रजेत् ।
त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम् ॥
स्त्रीपुंसयोस्तु सम्बन्धाद्वरणं प्राग्विधीयते ।
वरणाद् ग्रहणम्पाणेः संस्कारोऽपि विचक्षणैः ॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनादिति ॥

परिगृह्य वाचा दत्तां स्वीकृत्य । त्रीनृतूनिति । इदं च कन्याया अधार्यत्वे बोध्यम् । धार्यत्वे तु

प्रदाय शुल्कं कन्याया गच्छेद्यः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानत इति ॥

नारदेनैव वर्षप्रतीक्षाया अभिधानात् । स्त्रीपुंसयोरित्यादेरयमर्थः । स्त्रीपुंसयोः संसर्गात्प्राक् त्रितयं क्रियते । वरणम्, पाणिग्रहणम्, सप्तपदीप्रक्रमश्चेति । तत्र वरणं नाम वरस्य सम्प्रदानत्वाय कन्यायाः दात्रा प्रार्थनम् । तदेव च वाग्दानम् । एवंस्थिते तयोः पाणिग्रहणसप्तपदप्रक्रमणयोः पूर्वभावि यद्वरणं तदनियतम् अनियामकमित्यर्थः । तयोरेव भार्यात्वोत्पादकत्वादिति भावः । तथाच मनुः—

पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे इति ॥

दोषदर्शनादिति वाक्यशेषस्यायमर्थः । वरणस्यानियामकत्वमपि पूर्ववरस्य दोषे सत्येवेति । यदि तु अन्यस्मै दत्तायां पूर्ववरोऽप्यायाति तदाऽनूढां तां लभते । ऊढायां तु स्वदत्तं द्रव्यमेव लभते नतु कन्याम् । तदाह कात्यायनः—

अनेकेभ्योऽपि दत्तायामनूढायां तु तत्र वै ।
पुरागतश्च सर्वेषां लभते तदिमां सुताम् ॥
अथाऽऽगच्छेत वोढायां दत्तं पूर्ववरो हरेदिति ।

तदेवं नष्टे इति व्याख्यातम् । एवं मृतेऽपि । तथाच वसिष्ठः—

अद्भिर्वाचा च दत्ताया म्रियेतादौ वरो यदि ।
नच मन्त्रोपनीता स्यात्कुमारी पितुरेव सेति ॥

मन्त्रोपनयनं पाणिग्रहणादिकं विना वाचा दानमिवाद्भिरपि दानं न भार्यात्वोत्पादकमित्यर्थः । अत एव यमः—

नोदकेन नवा वाचा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे इति ॥

तथा प्रव्रजिते कृतसंन्यासे । क्लीबे चेति । चकारादन्त्यजातीयादेर्ग्रहणम् । तथाच कात्यायनः—

स तु यद्यन्यजातीयः पतितः क्लीब एव वा ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोपि वा ॥
ऊढापि देया साऽन्यस्मै सहावरणभूषणेति ॥

अत्रोढापीत्यपिशब्दः कैमुतिकन्यायेन वाग्दत्ताया एवाऽन्यस्मै दानमाचष्टे नतूढायाः । अन्यथा सगोत्रोढाया अपि पुनर्विवाहप्रसक्तौ मातृवत्परिपालयेदिति शास्त्रं विरुध्यते । यत्तु—

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन द्विजो विन्देत देवर इति ।

मनुनोक्तम् ॥ यच्च—

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ।
आगर्भसम्भवाद्गच्छेदन्यथा पतितो भवेद् ।

इति याज्ञवल्क्येनोक्तम् । तद्देवराच्च सुतोत्पत्तिरिति कलिनिषिद्धेषु प्रागेव गणितम् । यदपि—

उद्वाहितापि सा कन्या नचेत्सम्प्राप्तमैथुना ।
पुनः संस्कारमर्हेत यथा कन्या तथैव सेति ।

नारदेनोक्तम् । तदपि कलौ निषिद्धम् । ऊढायाः पुनरुद्वाह इति । नच कलिनिषिद्धस्यापि युगान्तरीयधर्मस्यैव नष्टे मृत इत्यादिपराशर-

वाक्यं प्रतिपादकमस्त्विति वाच्यम्। कलावनुष्ठेयान् धर्मानेव वक्ष्यामीति प्रतिज्ञाय तद्ग्रन्थप्रणयनादिति दिक्। तदेवमनन्यपूर्विकामिति पदं व्याख्यातम्। कान्तां कमनीयाम्, उद्वोढुर्मनोनयनानन्दकारिणीम्। अत एवापस्तम्बः—यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिरिति। असपिण्डामिति। सपिण्डता च सप्तपुरुषपर्यवसायिनी। तत्रैकः पिण्डदाता। त्रयः पिण्डभाजः पितृपितामहप्रपितामहाः। त्रयो लेपभाजः वृद्धप्रपितामहाद्याः। तथाच मत्स्यपुराणम्—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति॥

अयं भावः, सप्तानां पुरुषाणामेकपिण्डक्रियानुप्रवेशः सापिण्ड्यम्। तथाच देवदत्तस्यैकस्य स्वकीयपित्रादिभिः षड्भिः सह सापिण्ड्यम्। तथा पुत्रादिभिः षड्भिरिति। नन्वेवं भ्रातृपितृव्यादावसापिण्ड्यापत्तिरिति चेत्, अत्राह माधवः—

उद्देश्यदेवतैक्येन क्रियैकत्वं विवक्षितम्।

देवदत्तकर्तृकक्रियायां ये देवतात्वेनानुप्रविशन्ति तेषां मध्ये यः कश्चिद्भ्रातृपितृव्यकर्तृकक्रियायामप्यनुप्रविशत्येवेति सापिण्ड्यसम्भवः। एवञ्च भार्याणामपि भर्तृकर्तृकपिण्डदानक्रियायां सहकर्तृत्वात्साापिण्ड्यमिति। सोयं निर्वाप्यसापिण्ड्यपक्षः। नन्वस्मिन्पक्षे गुरुशिष्यादिरपि सापिण्डः स्यात् पिण्डनिर्वपणे उद्देश्यत्वादिति चेद्। अत्र केचित्—

गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः।
गुरोश्च कन्यां शिष्यो वा तत्सन्तत्यापि नेष्यते॥
पुरुषत्रयपर्यन्तं भ्रात्रादेर्नैतदिष्यते।

इति वचनमुदाहृत्य त्रिपुरुषसापिण्ड्यमिष्टमेवेत्याहुः। वस्तुतस्तु अवयवान्वयपक्षेपि अतिप्रसङ्गस्य तौल्याद्योगरूढिबलेनैव च परिहर्त्तव्यत्वान्नायं दोष उपन्यासार्ह इति दिक्। अपरे त्ववयवान्वयसापिण्ड्यमाहुः। तद्यथा, अवयवानां शरीरसम्बन्धिनां रक्तमज्जादीनां यः शरी-

रान्तरे प्रवेशः स एव सापिण्ड्यम् । पुत्रे पितुरवयवानां साक्षात्प्रवेशः, पितामहाद्यवयवानां तु पितृद्वारा । अतः सापिण्ड्यम् । पितृपितृष्वस्रादिभिरपि पितामहावयवान्वयात्सापिण्ड्यम् । पत्न्या सह एकशरीरारम्भकत्वात् । यात्रोरपि एकशरीरारब्धैः स्वस्वपतिभिः सह एकशरीरारम्भकत्वेन । तदेवम् आधारतयाऽऽधेयतया वा एकशरीरावयवो यत्र न प्रविष्टः सोऽसपिण्ड इति फलितम् । नन्वेवमष्टमादावतिप्रसङ्गः किम्बहुना विधातृशरीरान्वयो दुष्परिहर इत्याशङ्क्य सङ्कोचो मन्वादिभिः, तन्निष्कर्षश्चाभियुक्तैः कृतः ।

वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्त्तत इति ॥

कूटस्थो मूलपुरुषः, यतः सन्तानभेदः । एवं च मातृपितृद्वारकसापिण्ड्यवतीनां कन्यकानामियं सङ्ख्यासङ्कलना ।

उद्वोढुः पितरौ पितुश्च पितरौ तज्जन्मकृद्दम्पती
द्वन्द्वं तस्य चतुष्कमष्टकमतोऽप्यस्य क्रमात् षोडश ॥
वंशारम्भकदम्पतिप्रभृतिरित्यासप्तकक्ष्यन्तदा
एकैकान्वयकन्यकाः पितृकुले त्वासप्तकक्ष्यं ब्रुवे ॥ १ ॥
यद्यप्येकस्य बह्व्योपि सुताः स्युस्तदपीह तु ।
सम्बन्धसाम्यादेकैव गणितेत्यवधार्यताम् ॥ २ ॥
एकस्मान्मिथुनात्सुतोऽथ दुहितो द्वन्द्वद्वयं तद्द्वया-
त्तस्माद्द्वन्द्वचतुष्कमष्ट च ततोऽतः षोडशाऽतो रदाः ।
यावत्सप्तमकक्ष्यमग्निरुत वः कन्या इहैकान्वये
ता दन्तैर्गुणिता रसैकखदृशो वंशे सपिण्डाः पितुः ॥ ३ ॥
मातुर्जन्मददम्पती च मिथुनद्वन्द्वं तयोः सागरा-
स्तस्याः पञ्चमकक्ष्यमश्वमितिरित्येकान्वयः पुंसते ।
द्वन्द्वाद्द्वन्द्वयुगं ततोऽब्धय इतोऽष्टापञ्चकक्ष्यं शर-
क्षोण्यः सप्त गुणाः शराभ्रविधवो मातुः सपिण्डाः कुले ॥ ४ ॥

कुलद्वयस्य कन्यकायुता मिथः सपिण्डकाः ।
हिमांशुदुग्धराद्दशो विवाहकर्मवर्जिता इति ॥

अस्यार्थः, सप्तमपर्यन्तं पितृपक्षे वंशारम्भकाणां द्वन्द्वानां सङ्ख्या द्वात्रिंशत् । तथाहि । वरः प्रथमः । तन्मातापितृरूपं द्वितीयकक्ष्यानिविष्टं द्वन्द्वमेकम् । पितुर्मातापितरौ तृतीयकक्ष्यानिविष्टमेकं द्वन्द्वम् । पितामह्याः पितामहस्य च जनकं चतुर्थकक्ष्यानिविष्टं द्वन्द्वद्वयम् । तद्घटकस्य व्यक्तिचतुष्कस्य जनकं पञ्चमकक्ष्याप्रविष्टं द्वन्द्वं चतुष्कम् । तद्घटकस्य व्यक्त्यष्टकस्य जनकं षष्ठकक्ष्यानिविष्टं द्वन्द्वाष्टमम् । तद्घटकस्य व्यक्तिषोडशकस्य जनकं सप्तमकक्ष्याप्रविष्टं द्वन्द्वषोडशकमिति । तदेवमुक्तद्वात्रिंशन्मध्ये एकैकस्य द्वन्द्वस्यान्वये सपिण्डाः कन्याः त्रिषष्टिः । तथाहि उक्तेष्वन्यतममेकं द्वन्द्वं कूटस्थभूते प्रथमकक्ष्यानिविष्टं तत्सुतो दुहिता च द्वितीयकक्ष्यायाम् । ताभ्यामुत्पन्नं द्वन्द्वद्वयं तृतीयकक्ष्यायाम् । तद्घटकीभूतव्यक्तिचतुष्टयादुत्पन्नं द्वन्द्वचतुष्कं चतुर्थकक्ष्यायाम् । तद्घटकव्यक्त्यष्टकादुत्पन्नं द्वन्द्वाष्टकं पञ्चमकक्ष्यान्तर्गतम् । तद्घटकव्यक्तिषोडशकादुत्पन्नं द्वन्द्वषोडशकं षष्ठकक्ष्यान्तर्गतम् । तद्घटकद्वात्रिंशद्व्यक्तिजनितं द्वात्रिंशद्द्वन्द्वात्मकं सप्तमकक्ष्यायाम् । तदेवमुक्तायास्त्रिषष्टेः पूर्वोक्तद्वात्रिंशता गणनायां षोडशभिरधिका द्विसहस्री पितृवंशे फलिता भवति । मातृवंशे तु आरम्भकद्वन्द्वानि सप्त । तथाहि, मातुः पितृरूपमेकं द्वन्द्वम्, वरात्तृतीयकक्ष्यानिविष्टम् । तद्घटकव्यक्तिचतुष्टयस्य जनकं द्वन्द्वद्वयं चतुर्थकक्ष्यानिविष्टम् । तद्घटकव्यक्तिचतुष्टयस्य जनकं द्वन्द्वचतुष्टयं पञ्चमकक्ष्यायामिति । उक्तस्य द्वन्द्वसप्तकस्य मध्ये एकैकस्य द्वन्द्वस्यान्वये सपिण्डाः कन्याः पञ्चदश । तथाहि, उक्तेषु सप्तस्वन्यतमद्वन्द्वकूटस्थभूतं प्रथमकक्ष्यायाम् । तस्मात्पुत्रो दुहिता चेति द्वितीयकक्ष्यायाम् । तज्जन्यं द्वन्द्वयुगं तृतीयं तज्जन्यं चतुष्टयं चतुर्थकक्ष्यायाम् । तज्जन्यमष्टकं पञ्चमकक्ष्यायामिति । तदा सा पञ्चदशानां पूर्वोक्तसप्तभिः गुणनिकायां पञ्चोत्तरं शतं फलितम् । तदेव पितृकुलान्तर्गतायाः षोडशाधिकाद्विसहस्याः मातृकुलान्तर्गतपञ्चाधिकशतेन

सङ्कलनायाम् २१२१ हिमांशुदग्धरादशः एकविंशतिसहितशताधिका-द्विसहस्री फलिता भवतीति । सेयं विवाहकर्मणि वर्जनीया । तथाच नारदः-

मातृतः पञ्चमादूर्ध्वं पितृतः सप्तमात्तथा ।
गृहस्थ उद्वहेत्कन्यामन्यथा गुरुतल्पग इति ॥

यत्तु विष्णुपुराणवचनम्-

पञ्चमीं मातृपक्षात्तु पितृपक्षात्तु सप्तमाम् ।
गृहस्थ उद्वहेत्कन्यां न्यायेन विधिना नृपेति ॥

तत्र सप्तमीं पञ्चमीमतीत्येत्यध्याहार्यम् । अन्यथा पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथेति याज्ञवल्क्यवचनविरोधात् ॥

सप्तमे पञ्चमे चैव येषां वैवाहिकी क्रिया ।
क्रियापरा अपि हि ते सर्वेऽत्राऽशुद्धतां गताः ॥

इति मरीचिवचनविरोधाच्च । यत्तु पैठीनसिनोक्तम्-पञ्चमीं मातृतः परिहरेत्सप्तमीं पितृतः त्रीन् मातृतः पञ्च पितृतो वेति। तत्राद्यः पक्षस्तावदविरुद्ध एव, त्रीन् मातृत इत्यादिर्द्वितीयपक्षस्तु अर्वाङ्निषेधपर इति विज्ञानेश्वरः । माधवस्त्वाह-अनुकल्पोयमिति । युक्तं चैतत् । चतुर्विंशतिमतस्वरसात् । तथा मूलम्-

समावर्त्य सवर्णां तु लक्षण्यां स्त्रियमुद्वहेत ।
कुले महति सम्भूतां लक्षणैश्च समन्विताम् ॥
ब्राह्मेण तु विवाहेन शीलरूपसमन्विताम् ।
पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ॥
दशभिः पुरुषैः ख्यातां श्रोत्रियाणां महाकुलात् ।
उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ॥
पञ्चमीं तदभावे तु पितृपक्षेप्ययं विधिः ।
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च ।

एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ।
तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ॥
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ।
असपिण्डा च या मातुरसगोत्रा च या पितुः ॥
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ।
यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ॥
नित्यं संव्यवहार्यः स्याद्वेदाच्चैतत्प्रदृश्यत इति ।

स्मृतिचन्द्रिकायां प्रयोगपारिजाते च । षट्त्रिंशन्मते—

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यम इति ॥

अत्र हि तदभावे त्वित्युक्त्या अनुकल्पत्वं स्फुटीकृतम् । असपिण्डा-चेति श्लोके पितुरसगोत्रा चेति चकारेणाऽसपिण्डेत्यनुकृष्यते । सा प्रशस्तेत्यनेन च पूर्वोक्तानामनुकल्पत्वमेव स्फुटीक्रियते । यस्त्वित्या-दिश्लोकेन तु तृतीयादिविवाहो देशाचारकुलाचाराभ्यां व्यवस्थित इति प्रतिपाद्यते । वेदाच्चैतदिति वाक्यशेषस्यायमर्थः । उक्तव्यवस्था, तृतीयादीनां परिणेयता च वेदे प्रसिद्धेति । तथाच व्यवस्थापरा श्रुतिः—"तेन स्राध्वन्तेवततरुनो अधिवोचत । मा नः पथः पित्र्यान्मान-वादधिदूरं नैष्टपरावत" इति । पित्र्यात्पितुरागतात् पथो दूरं नोस्मान्मा नै-ष्ट मा नयेति देवान् प्रति प्रार्थना । वेदाच्चेति चकारेण स्मृतिस्थां व्यवस्थां समुच्चिनोति । तथाच मनुः—

येनास्य पितरो याता इत्यादि ।

शातातपोपि—

मातृष्वसृसुतां केचित्पितृष्वसृसुतां तथा ।
विवहन्ति क्वचिद्देशे संकोच्यापि सपिण्डतामिति ।

बृहस्पतिश्च—

उद्वह्यते दाक्षिणात्यैर्मातुलस्य च सुता द्विजैरिति ।

तृतीयादिविवाहः शतपथे दर्शपूर्णमासप्रकरणे प्रतीते । तस्माद् "समानादेव पुरुषादत्ता चाद्यश्च जायेतामुत तृतीये संगच्छावहै चतुर्थे संगच्छावहै" इति । समानादेकस्मात्पुरुषादत्ता भोक्ता आद्यः संभोग्यः द्वावुत्पन्नौ, तौ च मिथः संकल्पयतः कूटस्थमारभ्य तृतीये चतुर्थे वा संगच्छावहै विवहावहा इत्यर्थः। अत्र हि प्रमाणान्तराविरोधादर्थवादाद्विधिः कल्प्यते इति माधवादयः। मन्त्रवर्णाश्च "आयाहीन्द्रपथिभिरीळितेभिर्यज्ञमिन्द्रस्तुत्यमागैर्नोस्माकमिमं यज्ञमायाहि आगत्य च भागधेयं भागं अस्माभिः दीयमानं जुषस्व। तृप्ताम् आज्यादिना संस्कृतां वपां त्वामुद्दिश्य जहुः त्यक्तवन्तः। अत्र दृष्टान्तद्वयम्। यथा मातुलस्य योषा दुहिता योषिति स्त्रचपत्यानामिति वेदनिघण्टावभिधानात् दौहित्रस्य भागः, यथा पैतृष्वस्रेयी पौत्रस्य भागः, परिणेया तथेति। यत्तु शातातपेनोक्तम्—

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैवच ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेदिति ॥

यच्च। पैठीनसिना—पितृमातृष्वसृदुहितरः मातुलसुता धर्मतः भगिन्यस्ता वर्जयेदिति विज्ञायते इति ॥ यच्च व्यासेन—

मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिरिति ।
तदेतत्सर्वं गान्धर्वादिविवाहोढाविषयम् ।

तथा च मनुः—

पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च ।
मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् ॥
एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमानिति ॥

अत्र हि भगिनीपदं पैतृष्वसेयादेः विशेषणम्। आप्तस्येति मातुर्भ्रातुर्विशेषणम्। आप्तस्य संनिकृष्टस्य सापिण्डस्य गान्धर्वादिना ऊढाया मातुर्भ्रातुरित्यर्थः। तथाच मार्कण्डेयपुराणम्—

ब्राह्मादिषु विवाहेषु ऊढा या कन्यका भवेत् ।

भर्तृगोत्रेण कर्त्तव्या तस्या पिण्डोदकक्रिया ॥

गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मविदिति ॥

एवं च भगिनीति विशेषणमपि गान्धर्वादिना ऊढायाः अनिवृत्तिसापिण्ड्याया लाभार्थम्। एवं च ब्राह्मादिविवाहेषु मातुलसुताया इव मातृष्वसृसुताया अपि विवाहो यद्यपि प्राप्नोति तथापि अस्यां लोकविद्विष्टमिति निषेधान्न कार्यः। मातुलकन्यापरिणयस्तु प्रागुक्तश्रुतिस्मृत्युपदिष्टत्वाद्दाक्षिणात्यशिष्टाचारात्कर्त्तव्य इति माधवाचार्याः ॥ सोऽप्ययं कलौ निषिद्धः ॥

गोत्रान्मातृसपिण्डात्तु विवाहो गोवधस्तथेति।

प्राङ्माधवोदाहृतब्रह्मपुराणवचनादिति केचित्। अतएव बोधायनेन पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः यानितु दक्षिणतस्तान्यनुव्याख्यास्यामः। यथैतत् अनुपतनं, सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसुर्दुहितृगमनमिति॥ तथोत्तरत ऊर्णा विक्रयः, सीधुपानम्, उभयतोदद्भिर्व्यवहारः, आयुधीयकं, समुद्रयानमिति। तत्रेतरदितरस्मिन् कुर्वन् दुष्यतीतरादितरस्मिन् तत्तद्देशप्रामाण्यात् मिथ्यैतदिति तु गौतमः। उभयमेव नाद्रियेत शिष्टस्मृतिविरोधदर्शनादिति ग्रन्थेनाऽनाचारत्वमेव प्रतिपादितम्। बृहस्पतिरपि —

उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।

मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ॥

उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः।

सजाताश्चापि गृह्णन्ति भ्रातृभार्यां सभर्तृकाम् ॥

सर्वदेशेष्वनाचारो रथ्याताम्बूलचर्वणमिति ॥

तस्मात्कलौ पितृतः सप्तमात् मातृतः पञ्चमाच्चोर्ध्वं विवाहः प्रशस्त इति स्थितम् ॥ सपत्नमातामहकुलेऽप्यातिदेशिकात्सापिण्ड्यादविवाहः। तथाच सुमन्तुः—पितृपत्न्यः सर्वा मातरः तद्भ्रातरो मातुलाः। तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि।

| | | |
|---|---|---|
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |
| पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽख्यवृत्ति ख० | १ | ० |
| व्याकरणमिताक्षरा । श्रीमदन्नंभट्टप्रणीता खण्डानि १० | १० | ० |
| रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रमपराक्रमसहितः खण्डे २ | २ | ० |
| बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० | १० | ० |
| ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्विरचिता खण्डे २ | २ | ० |
| दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डानि ३ | ३ | ० |
| श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-व्याख्या समेतम् खण्डानि १५ | १५ | ० |
| तत्त्वशेखरः । श्रीभगवल्लोकाचार्यप्रणीतः । तथा—तत्त्वत्रयचुलुकसंग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । | १ | ० |
| श्रीभाष्यवार्तिकम् । श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्रतिपादनपरम् । यतीन्द्रमतदीपिका च । श्रीगोविन्दाचार्यसूनुश्रीनिवासाचार्यकृता । सकलाचार्यमतसंग्रहश्च । खण्डे २ | २ | ० |
| गूढार्थदीपिका । श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायीव्याख्या । | १ | ० |
| आश्वलायनसूत्रप्रयोगदीपिका । श्रीविद्वद्वरमंचनाचार्यभट्टविरचिता । | १ | ० |
| काव्यालंकारसूत्राणि । पण्डितवरवामनविरचितवृत्तिसमेतानि कामधेनुसमाख्यव्याख्यासहितानि । | १ | ० |
| श्रुत्यन्तसुरद्रुमः । श्रीपुरुषोत्तमप्रसादविरचितः । | २ | ० |
| चतुर्विंशतिमतसंग्रहः । श्रीमद्भट्टोजिदीक्षितसंकलितः । | १ | ० |

व्रजभूषण दास और कम्पनी
चांदनीचौक के उत्तर नई सड़क बनारस सिटी

BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
G. THIBAUT, PH. D.
*No 139.*

---

# चतुर्विंशतिमतसंग्रहः ।

श्रीभट्टोजिदीक्षितसंकलितः ।

साहित्योपाध्यायेन नेपालदेशीयदेवीदत्तपराजुलिना संशोधितः ।

# CHATURVINŚATIMATASANGRAHA,

BY PANDIT BHATTOJI DÍKSHITA.

EDITED BY
SÂHITYOPÂDHYÂYA NEPALI PANDIT DEVIDATTA PARÂJULI.

*Fasciculus II.*

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press,
BENARES.
1908.

## सूचीपत्रम् ।

| | रु० | आ० | पा० |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ० |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला ~) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ७ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णु सहस्रनाम | ० | १ | ० |
| व्याकरणकौमुदी (उपक्रमणिका का दूसरा भाग ) | १ | ० | ० |
| शब्दरूपावली | ० | १ | ० |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| सिद्धान्तकौमुदी ( पं० वामनाचार्येण संशोधिता ) | २ | ८ | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | २ | ८ | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | २ | ० | ० |

अन्यथा संकरकारिण्यः स्युरिति । अत्र च यावद्वचनं वाचनिकमिति न्यायेन परिगणितेष्वेवातिदेशिकं सापिण्ड्यं नतु सप्तमपञ्चमपर्यन्तमिति केचित् । यवीयसीमिति । वयसा कायपरिमाणेन च न्यूनाम् । तत्र वयोन्यूनताय । इयत्तामाह मनुः—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वर इति

बृहस्पतिस्तु—

त्रिंशद्वर्षो दशाब्दान्तु भार्यां विन्देत नग्निकाम्
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयादिति ।

विष्णुपुराणे—

वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयमिति ॥

अरोगिणीमिति, राजयक्ष्मादिरोगरहिताम् । भ्रातृमतीमिति, पुत्रिकाकरणशङ्काव्युदासार्थम् । अतएव मनुः—

यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कयेति ॥

यस्याः पिता पुत्रिकाकरणाभिप्रायवान्नवेति न ज्ञायेत तां नोपयच्छेदित्यर्थ इति माधवः । अनेनापरिभाषितापि पितुरभिप्रायमात्रेण पुत्रिका भवतीति गम्यते । तथाच गौतमः— अभिसन्धिमात्रात्पुत्रिकेत्येकेषां तत्संशयान्नोपयच्छेदभ्रातृकामिति । अभिसंधेराकारमाह मनुः—

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरमिति ॥

यत्र तु नैषा शङ्का तामभ्रातृकामप्युपयच्छेतेति माधवादयः । वरेण सह संप्रतिपत्तौ तु पुत्रिकाकरणं स्पष्टमेव विज्ञायते । सा च संप्रतिपत्तिर्द्विधा । केवलमातामहसंबंधित्वेनोभयसंबन्धित्वेन चेति । आद्ये दानमन्त्रमाह वासिष्ठः—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।

अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यतीति ।

द्वितीये त्वाह कात्यायनः—

अपुत्रोऽहं प्रदास्यामि तुभ्यं कन्यां भवानपि ।
पुत्रार्थी चेदिहोत्पन्नः स नौ पुत्रो भवेदिति ॥

असमानार्षगोत्रजामिति । ऋषेरिदमार्षम् प्रवरः गोत्रप्रवर्त्तकस्य मुनेर्व्यावर्त्तको मुनिगण इत्यर्थः । तद्यथा । गोत्रप्रवर्त्तकस्य भरद्वाजस्य व्यावर्त्तकावाङ्गिरोबृहस्पती । अतएवाङ्गिरसबार्हस्पत्यभारद्वाजगोत्रोद्दमिति प्रयुञ्जते । गोत्रं तु वंशपरम्पराप्रसिद्धम् । स्वसमाने आर्षगोत्रे यस्य तस्माज्जाता या न भवति तामित्यर्थः । यास्कवाधूलमौनमौकानां भिन्नगोत्राणामपि भार्गववैतहव्यसावेतसेति प्रवरैक्यान्न विवाह इति माधवादयः । वस्तुतस्तु वत्सार्ष्टिषेणयोः प्रवरैक्यान्न विवाहः । द्व्यामुष्यायणांसङ्कृतीनां वसिष्ठैः सगोत्रत्वादविवाह इत्यसंकीर्णोदाहरणं बोध्यम् । एवं कपीनां गर्गादिभिरपि । मातृगोत्रापि केषां चिन्निषिद्धा । तथाच सत्याषाढवचनम् । मातृगोत्रं माध्यन्दिनीयानामिति ।

गोत्ररिक्थे जनयितुर्न भजेद्दात्रिमः सुत—

इति वचनाद्दत्तकस्य यद्यपि पितृगोत्रा माप्ता तथापि नोद्वाह्या असगोत्रा च या पितुरिति मनुना पितृशब्दोपादानादिति स्मृतिचन्द्रिका । प्रवरैक्ये विशेषमाह बोधायनः—

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोपि वारयेदिति ॥

नच गोत्रप्रवरयोर्मिलितयोः पर्युदासनिमित्तत्वं शङ्क्यम् । प्रत्येकं दोषाभिधानात् । तदाह बोधायनः— सगोत्रां चेत् प्रत्योपयच्छेत् मातृवदेनां विभृयादिति । गौतमश्च— असमानप्रवरैर्विवाह इति । शातातपोपि—

परिणीय सगोत्रां तु समानप्रवरां तथा ।
कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रं विशोधनमिति ॥

**आपस्तम्बः**—

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते ॥

**संग्रहे**— सगोत्रां समानप्रवरां कामतः परिणीय प्रजामुत्पाद्य गुरुतल्पगव्रतं चरेत् । प्रजां चण्डालेषु निक्षिपेत् । अकामतस्तप्तकृच्छ्रं प्रजाया भरद्वाजगोत्रान्तर्भावः । प्रजानुत्पादने चान्द्रायणम् । विवाहमात्रे कृच्छ्रम् । सर्वत्र व्रतान्तेऽष्टोत्तरशतं होमः । परित्यक्तां तां जननीवद्रक्षेत् ।

**स्मृत्यर्थसारेपि**—

इत्थं सगोत्रसंबन्धविवाहविषये स्थिते ।
यदि कश्चिदज्ञानतस्तां कन्यामूढ्वोपगच्छति ॥
गुरुतल्पव्रताच्छुध्येद्गर्भस्तज्जोऽन्त्यतां व्रजेत् ।
भोगतस्तां परित्यज्य पालयेज्जननीमिव ॥
अज्ञानाच्चेदैन्दवैस्तु शुध्येद्गर्भस्तु कश्यप इति ॥

अथ प्रसंगाद्गोत्रप्रवरनिर्णयः कथ्यते ॥

सप्तर्षीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमिति बोधायनादयः । एवं च यद्यपि गोत्रप्रवर्त्तकं जमदग्निं प्रति मूलपुरुषं सप्तर्षिबहिर्भूतं भृगुमधिकृत्याम्नातानां केवलभार्गवानामार्ष्टिषेणादीनां स्वस्वगणेपि सगोत्रता न सिध्यति तथा केवलाङ्गिरसानां विष्णुवृद्धादीनां सङ्कृत्यादीनां च । गौतमभरद्वाजौ प्रति मूलभूतमङ्गिरोमात्रमधिकृत्याम्नानात् । तथाप्यत्रेष्टापत्तिरेव । तथाच न स्तएवैषां गोत्रसगोत्रते इति प्रवरमञ्जरीकृतोक्तम् । अतएव स्मृत्यर्थसारेपि केवलभृग्वङ्गिरोगणेषु प्रवरैक्यमात्रनिबन्धनोऽविवाह इत्युक्तम् । प्रवरैक्यतः स्वं स्वं हित्वा गणमिति । अन्येतु यमधिकृत्य प्रवराम्नानं तद्गोत्रम्, ततश्चार्ष्टिषेणादीनधिकृत्य प्रवराम्नानात् सप्तर्षिबाह्यत्वेपि गोत्रत्वमस्त्येव । तथाच सत्याषाढसूत्रे प्रवरान् व्याख्यास्याम इत्युक्त्वा तैर्गोत्राणीत्युक्तम् । नचैवं भृग्वङ्गिरसो रित्यनुवृत्त्या जामदग्न्ययोर्वत्सविदयोः परस्परमिवार्ष्टि-

षेणादिभिरपि सगोत्रतापत्तिः । तत्र पर्युदासात् । तथाच बोधायनः—एकएव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणादिति । भृग्वङ्गिरोभिन्नस्यैकस्य ऋषेरनुवृत्तिः सगोत्रता प्रयोजिकेत्यर्थः । एवं च समानगोत्रत्वमित्यस्य समानप्रवरत्वमित्यर्थोपि मदनपारिजातोक्तोऽस्मिन्पक्षेऽनादरणीयः । यत्त्वेवं सति सगोत्रत्वेनैव निषेधसिद्धौ समानप्रवरत्वस्यासङ्कीर्णोदाहरणं दुर्लभमिति, तन्न, वत्सार्ष्टिषेणयोर्विदार्ष्टिषेणयोः पृषदश्वरथीतरयोश्च भिन्नगोत्रयोः समानप्रवरत्वात् । तस्माद्धरितादीनामपि गोत्रत्वमित्याहुः । यद्यपि गोत्राणामवान्तरभेदाः सहस्रशस्तथापि तद्गणा एकोनपञ्चाशत् । तथाच बोधायनः—

गोत्राणां च सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेतेषां प्रवरा ऋषिदर्शनादिति ॥
सप्तेह भृगवः सप्त दशाङ्गिरस एव च ।
ततोऽत्रयश्च चत्वारो बोद्धव्याः कश्यपास्त्रयः ।
चत्वारोत्र वसिष्ठाः स्युर्विश्वामित्रास्ततो दश ।
अगस्तयस्तु चत्वार इति सङ्ग्रहकृद्वचः ॥

तत्र भृगूणां सप्त अन्तर्गणाः तत्र द्वौ जामदग्न्यौ । वत्सा विदाश्चेति । तत्र वत्सानां पञ्च प्रवराः । भार्गव, च्यवन, आप्नवान, और्व,जामदग्न्येति । भार्गवौ,र्व,जामदग्न्येति त्रयो वा ॥ १ ॥ विदानां पञ्च प्रवराः । भार्गव,च्यवन,आप्नवान, और्व, विदेति । त्रयो वा, भार्गव, और्व, जामदग्न्येति ॥ २ ॥ इमौ द्वौ सगोत्रौ । जमदग्नेः सप्तर्षिषु पाठात् । इतरे पञ्च, केवलभार्गवाः । आर्ष्टिषेणाः, यस्काः, मित्रयवः, वैन्याः, शुनका इति । तत्र आर्ष्टिषेणानां पञ्च प्रवराः । भार्गव, च्यवन, आप्नवान, आर्ष्टिषेण, अनूपेति । भार्गवा, र्ष्टिषेण, अनूपेतिवा । एषां त्रयाणां परस्परमविवाहः । तदुक्तम्

जामदग्न्यौ वत्सविदौ आर्ष्टिषेणाः परस्परम् ।

नान्वियुः प्रवरैक्येन सगोत्रत्वेन चादिमात्रिति ॥ ३ ॥

यास्कानां त्रयः प्रवराः । भार्गव, वैतव्य, सावनसेति ॥ ४ ॥ मित्रयूणां त्रयः । भार्गव, दैवोदास, वाध्र्यश्वेति । एको वा । वाध्र्यश्वेति ॥ ५ ॥ वैन्यानां त्रयः । भार्गव, वैन्य, पार्थेति ॥ ६ ॥ शुनकानामेकार्षेयः प्रवरः शौनकेति । गार्त्समदो वा । भृगुगृत्समदौ द्वौ वा । भार्गव, शौनहोत्र, गार्त्समदास्त्रयो वा । भार्गव, शौनक, गार्त्समदास्त्रयो वेति ॥ ७ ॥ एषां चतुर्णां परस्परं विवाहोऽस्ति । पूर्वोक्तैस्त्रिभिश्च वक्ष्यमाणैश्च । तदुक्तम्—

यास्का मित्रयवो वैन्याः शुनकाः प्रवरैक्यतः ।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैरिति ॥

भृगोः सप्त वंशा निर्णीताः ।

कचित्तु अधिकं गणद्वयमुक्तम् । वेदविश्वज्योतिषाम् । आर्षेयः प्रवरः । भार्गव,वैद,वैश्वज्योतिषेति । शाठरमाठराणां भार्गव,शाठर,माठरेतित्रयः । अङ्गिरसां षोडशान्तर्गणाः । तत्र गौतमाङ्गिरसां सप्त । आयास्याः, शरद्वन्तः, कौमण्डाः, दीर्घतमसः, कारेणुपालयः, वामदेवाः, औशनसाश्चेति । तत्र आयास्यानां त्रयः प्रवराः । आङ्गिरस, आयास्य, गौतमेति ॥ ८ ॥ शरद्वतां च त्रयः । आङ्गिरस, गौतम, शारद्वतेति ॥ ९ ॥ कौमण्डानानां पञ्च । आङ्गिरस, औचथ्य, काक्षीवत, गौतम, कौमण्डेति ॥ १० ॥ दीर्घतमसां पञ्च । आङ्गिरस, औचथ्य, काक्षीवत, गौतम, दैर्घतमसेति । त्रयो वा । आङ्गिरसौ, तथ्य, दैर्घतमसेति ॥ ११ ॥ कारेणुपालीनां त्रयः । आङ्गिरस गौतम, कारेणुपालेति ॥ १२ ॥ वामदेवानां त्रयः । आङ्गिरस, गौतम, वामदेवेति ॥ १३ ॥ औशनसानां त्रयः । आङ्गिरस, औशनस, गौतमेति ॥ १४ ॥ एते सप्त गोत्राः वामदेवा, गौतमा इत्यापस्तम्बः । तेषां आगिरस वामदेव्य, बार्हदुक्थ्येति । त्रय, औतथ्या गौतमा इति केचित् । तेषाम् आङ्गिरसौ, तथ्य, गौतमेति । औशिजा इत्यपि केचित् । तेषाम् आङ्गिरसौ, शिज, काक्षीवतेति ।

भरद्वाजाङ्गिरसश्चत्वारः । भरद्वाजाः, रौक्षायणाः, गर्गाः, कपय इति । तत्र भरद्वाजानां त्रयः प्रवराः । आङ्गिरस बार्हस्पत्य, भारद्वाजेति ॥ १५ ॥ रौक्षायणानां पञ्च प्रवराः । आङ्गिरस, बार्हस्पत्य, भारद्वाज, वान्दन, मातवसेति ॥ १६ ॥ गर्गाणां पञ्च । आंगिरस, बार्हस्पत्य, भारद्वाज, गार्ग्य, शैन्येति । त्रयो वा । आङ्गिरस, शैन्य, गार्ग्येति । भरद्वाज, शैन्य, गार्ग्येति वा ॥ १७ ॥ कपीनां त्रयः प्रवराः । आङ्गिरस, आमहीयव औरुक्षयसेति । पञ्चप्रवरस्तु कपिगर्गान्तर्भूतः । अनेन सगोत्रश्च बोध्यः । अतएवाष्टादशधा गणान्विभजद्भिः संग्रहकारैः कपेः कपिना समं विवाहो निषिद्धः ।

भरद्वाजगणस्यापि तथा कपिगणस्य च ।
विवाहो न विधेयः स्यादन्योन्यं तु कदाचनेति ॥ १८ ॥

एतेषां चतुर्णां परस्परं विवाहो नास्ति । तदुक्तम्—

भरद्वाजाः, सकपयो, गर्गा, रौक्षायणा इति ।
चत्वारोपि भरद्वाजाः गोत्रैक्यान्नान्वियुर्मिथ इति ।

केवलाङ्गिरसः पञ्च। विष्णुवृद्धा, कण्वा, हरिता, रथीतरामुद्गलाश्चेति। तत्र विष्णुवृद्धानां त्रयः प्रवराः । आङ्गिरस, पौरुकुत्स, त्रासदस्यवेति । एषामन्यैः सह विवाहोस्ति । १९ ॥ कण्वानां त्रयः प्रवराः । आङ्गिरस, आजमीढ, कण्वेति । आङ्गिरस, घोर, कण्वेति वा ॥ २० ॥ हरितानां त्रयः प्रवराः । आङ्गिरसा, म्बरीष, यौवनाश्वेति। मान्धात्रा, म्बरीष, यौवनाश्वेति वा ॥ २१ ॥ रथीतराणां त्रयः प्रवराः । आङ्गिरस, वैरूप, रथीतरेति । आङ्गिरस, वैरूप, पार्षदश्वेति वा ॥ २२ ॥ मुद्गलानां त्रयः प्रवराः । आङ्गिस, भार्म्यश्व, मौद्गल्येति । यद्वा तार्क्ष्य, भार्म्यश्व, मौद्गल्येति ॥ २३ ॥ विष्णुवृद्धानां पञ्चानामपि केवलाङ्गिरसां स्वस्वगणं हित्वाऽन्यैः सह विवाहोस्ति । तदुक्तम्—

केवलाङ्गिरसश्चैके विष्णुवृद्धाः सकण्वजाः ।
हरिता रथीतराश्च मुद्गलाः प्रवरैक्यतः ॥

स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैरिति ।

तदेवमाङ्गिरसां षोडश वंशा निर्णीताः ।

द्व्यामुष्यायणवर्गे वक्ष्यमाणाः संकृतयस्त्वङ्गिरसस्तु सप्तदशः । क्वचित्तु अन्येपि केवलाङ्गिरसः पठ्यन्ते । यथा कुत्सानां त्रयः । आङ्गिरस, मान्धातृ, कौत्सेति । एषां हरितैराविवाहः । आर्षेयाणां द्व्यार्षेयसंनिपातात् । हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामित्याश्वलायनेन सर्वप्रवरसाम्योक्तेश्च इति पुरुषोत्तमः।। पृषदश्वानाम् आङ्गिरस, पार्षदश्व, वैरूप्येति । अष्टादंष्ट्र, पार्षदश्व, वैरूपेति वा । एषां रथीतरैराविवाहः । प्रवरद्वयसाम्यात् । अत्रेश्चत्वारो भेदाः । आद्यात्रयः, गविष्ठिराः, वाद्भूतकाः, मुद्गलाश्चेति । तत्राद्यात्रीणां त्रयः प्रवराः । आत्रेया, र्चनानस, श्यावाश्वेति ॥ २४ ॥ गविष्ठिराणां त्रयः प्रवराः । आत्रेया, र्चनानस, गाविष्ठिरेति ।।२५।। वाद्भूतकानां त्रयः । आत्रेया, र्चनानस, वाद्भूतकेति । मुद्गलानां त्रयः प्रवराः । आत्रेया, र्चनानस, पौर्वातिथेति । एतेषां चतुर्णां न विवाहः । तदुक्तम् —

चत्वारोत्रयः आद्यात्रिवाद्भूतिकगविष्ठिराः ।

मुद्गलाश्चेति गोत्रैक्यात्प्रवरैक्याच्च नान्वियुरिति ॥ २७ ॥

अत्रेश्चत्वारो वंशा निर्णीताः ।

कश्यपानां त्रयो भेदाः । निध्रुव, रेभ, शण्डिलेति । तत्र निध्रुवाणां त्रयः प्रवराः । काश्यप, वत्सार, नैध्रुवेति ॥ २८ ॥ रैभ्याणां त्रयः प्रवराः । काश्यप, वत्सार, रैभ्येति ॥२९॥ शाण्डिलानां त्रयः । काश्यप, वत्सार, शाण्डिल्येति । काश्यप, वत्सार, दैवलेति वा । काश्यप,वत्सारा, सितेति वा । शाण्डिल, आसित, देवलेति वा, ॥३०॥ निध्रुवादीनां त्रयाणां कश्यपानां परस्परं नोद्वाहः । गोत्रप्रवरयोरैक्यात् । वसिष्ठाश्चत्वारः । वसिष्ठाः, कुण्डिनाः, उपमन्यवः, पराशरा इति । तत्र वासिष्ठानामेकः प्रवरः, वासिष्ठेति ॥ ३१ ॥ कुण्डिनानां त्रयः । वासिष्ठ, मैत्रावरुण,कौण्डिन्येति ॥३२॥ उपमन्यूनां त्रयः । वासिष्ठ, द्रप्रमदा, भरद्वस्विति॥३३॥

पराशराणां त्रयः । वसिष्ठ, शक्ति, पराशरेति ॥ ३४ ॥ एषां परस्परमविवाहः । तदुक्तम् —

वासिष्ठाः, कुण्डिना, श्चैवमुपमन्यु, पराशराः ।
वासिष्ठा इति चत्वारो गोत्रैक्यान्नान्वियुर्मिथ इति ॥

इति वासिष्ठवंशनिर्णयः ।

अथ विश्वामित्राः । ते च दश । कुशिकाः, रोहिताः, रौक्षकाः, कामकायनाः, कताः, धनञ्जयाः, अजाः, अघमर्षणाः, पूरणाः, इन्द्रकौशिकाः, इति । तत्र कुशिकानां त्रयः प्रवराः । विश्वामित्र, देवरात, औदलेति ॥ ३५ ॥ रोहितानां त्रयः । विश्वामित्र, ष्टका, रोहेति ॥ ३६ ॥ रौक्षकाणां त्रयः । विश्वामित्र, रौक्षक, रैवणेति ॥ ३७ ॥ कामकायनानां त्रयः । वैश्वामित्र, देवश्रवस, दैवतरसेति ॥ ३८ ॥ धनञ्जयानां त्रयः । वैश्वामित्र माधुच्छन्दस, धनञ्जयेति ॥३९॥ कतानां त्रयः । विश्वामित्र,-कात्या, त्कीलेति ॥४०॥ अजानां त्रयः । विश्वामित्र, माधुच्छन्दसा, जेति ॥ ४१ ॥ अघमर्षणानां त्रयः । वैश्वामित्रा,घमर्षण, कौशिकेति ॥४२॥ पूरणानां द्वौ । वैश्वामित्र,पौरणेति ॥ ४३ ॥ इन्द्रकौशिकानां त्रयः प्रवराः । विश्वामित्रे,न्द्र,कौशिकेति ॥ ४४ ॥ एतेषां दशानां परस्परं न विवाहः ।

इति विश्वामित्रवंशनिर्णयः ।

अथागस्तयः । ते च चत्वारः । इध्मवाहाः, सांभवाहाः, सोमवाहाः, यज्ञवाहा इति । तत्रेध्मवाहानां त्रयः प्रवराः । आगस्त्य,दार्ढ्यच्युत, साम्भवाहेति॥ ४५ ॥ सांभवाहानां त्रयः । आगस्त्य,दार्ढ्यच्युत,साम्भवाहेति ॥ ४६ ॥ सोमवाहानां त्रयः प्रवराः । आगस्त्य,दार्ढ्यच्युत,सोमवाहेति ॥४७॥ साम्भवाहानां त्रयः । आगस्त्य,दार्ढ्यच्युत, सांभवाहेति॥४८॥ यज्ञवाहानां त्रयः । आगस्त्य,दार्ढ्यच्यु,तयज्ञवाहेति ॥ ४८ ॥ एतेषां चतुर्णां गोत्रैक्यात्परस्परमविवाहः । तदेवं भृगवः सप्त । आङ्गिरसः सप्तदश । अत्रयश्चत्वारः । कश्यपास्त्रयः । वसिष्ठाश्चत्वारः । विश्वामित्रा

दश । अगस्तयश्चत्वारः ॥ ॥ इत्थमेकोनपञ्चाशद्गणा निर्णीताः ।

क्षत्रियाणां त्रयः प्रवराः । मान, वैल, पौरूरवसेति । वैश्यानां च त्रयः । भालन्दन, वात्स, प्रमङ्गालिकेति बोधायनः । नचैवं क्षत्रियवैश्ययोः सजातीयैर्विवाह एव न स्यादिति वाच्यम् । एतेषां प्रवराणां विवाहनिषेधाप्रयोजकत्वात् । तदुक्तम् ।

गुरोः सगोत्रप्रवरा नोद्वाह्याः क्षत्रविड्जनैरिति ।

समानप्रवरोद्वाहनिषेधः क्षत्रवैश्ययोः ।

प्रवरान्मानवेत्यस्मात्प्रवराच्चान्यगोचर इति च ।

मानवेत्यादिप्रवराद् अस्माच्च भालन्दनेत्यादिप्रवराच्चान्यगोचरो निषेध इत्यन्वयः ।

अथ द्व्यामुष्यायणाः ।

तत्राङ्गिरससङ्कृतीनां वसिष्ठैः सह विवाहो नास्ति । क्रियमाणतयाऽनुवृत्त्यभावेपि उत्पादकतया वसिष्ठस्यानुवृत्तेः । उक्तञ्च—

सङ्कृतीनां द्विवंश्यत्वाद्वसिष्ठैश्च चतुर्विधैः ॥

स्ववर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वय इति ॥

लौगाक्षीणां त्रयः प्रवराः । काश्यपा, वत्सार, वासिष्ठेति । ते चाहर्वसिष्ठाः, नक्तं कश्यपाः, वसिष्ठकश्यपाभ्यां सह लौगाक्षीणां विवाहो नास्ति । तदुक्तम्—

वासिष्ठैः काश्यपैर्नित्यं लौगाक्षीणामनन्वयः ।

अहर्वसिष्ठतोक्तिस्तु प्रयाजाग्र्यादिगोचरेति ॥

किञ्च

विश्वामित्रात्रिगोत्रेण नोद्वहेयुर्धनञ्जयाः ।

अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा ॥

तथैव जातूकर्ण्याश्च वसिष्ठैरात्रिभिः सहेति ॥

धनञ्जया वामरथ्याश्चात्रिविश्वामित्राभ्यां न विवहेयुरित्यर्थः । तथा जातूकर्ण्याश्चात्रिवसिष्ठाभ्यां न विवहेयुः ।

भरद्वाजेन शुङ्गेन विश्वामित्रस्य शैशिरेः ।
क्षेत्रे जातो द्विगोत्रर्षिः प्रोच्यते शौङ्गशैशिरेः ॥
विश्वामित्रभरद्वाजैस्तज्जानां तेन नान्वयः ।

अयमेव कतशैशिरिशौङ्ग इत्यप्युच्यते । तस्य पञ्च प्रवराः । आङ्गिरस, वार्हस्पत्य, भारद्वाज, कात्या, त्कीला इति । कपिलानां भरद्वाजै, विंश्वामित्रैश्च नान्वयः । अन्यत्रापि ।

काश्यपेयगणस्यापि वसिष्ठस्य गणस्य च ।
सङ्कृतिपूतिमापाभ्यां विवाहो न परस्परम् ॥
आत्रेयस्य गणस्यापि विश्वामित्रगणस्य च ।
धनञ्जयाख्यगोत्रेण नान्योन्यं पाणिपीडनम् ॥
जमदग्निगणस्यापि विश्वामित्रगणस्य च ।
न देवरातगोत्रेण विवाहः स्यात्परस्परम् ॥

इति द्व्यामुष्यायणप्रकरणम् ।

क्वचिन्नामसाम्येपि गोत्रप्रवरयोर्भेदाद्विवाहो भवति । यथाङ्गिरसामत्रीणां च चरमपठितानां मुद्गलानाम् इत्यादि ज्ञेयम् ॥

इति प्रवरनिर्णयः ॥

---

असमानार्षेत्यादिवचनेन वरः स्वसमानगोत्रां नोद्वहेदित्युक्तम् ॥ मनुरपि—

असपिण्डा च या मातुरसगोत्रा च या पितुरिति ।

यत्त शातातपवचनम्—

मातुलस्य सुतामद्वा मातृगोत्रां तथैव च ॥
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेदिति ॥

तदपि मन्वादिभिः समानार्थम् । तथाहि । मातुर्गोत्रं नाम पितृगोत्रमेव, नतु मातामहगोत्रम् ।

स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ।

इति मनुवचनात् । अयन्तु विशेषोनुसन्धेयः । या ब्राह्मादि

विवाहचतुष्टयेनोढा तस्या एव वरगोत्रापत्तिः, पितृगोत्रभ्रंशश्च । या तु गान्धर्वादिचतुष्टयोढा तस्या न वरगोत्रापत्तिः, नापि पितृगोत्रभ्रंशः । दानाभावात् । तथाच मार्कण्डेयः—

ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्त्तव्यास्तस्याः पिण्डोदकक्रियाः ॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मत इति ॥

अत एव स्वगोत्राद्भ्रश्यत इति मनुवचनमपि ब्राह्मादिविषयमेव । तस्माद्ब्राह्मादिविवाहोढासुतः पितृगोत्रां नोद्वहेत् । मातामहगोत्रं तूद्वहेत् अनिषेधात् । गान्धर्वादिविवाहोढासुतस्तु मातामहगोत्रां पितृगोत्रां च नोद्वहेत् । मातृगोत्रां तथैव चेति शातातपवचनात्, असगोत्रा च या पितुरिति मनुवचनाच्च । नच मातृगोत्रामित्यस्य मातुरुत्पत्तिकाले यद्गोत्रं तत्परतैवास्त्विति वाच्यम् । तथासति मातुलस्य सुतामिति वाक्यशेषवैयर्थ्यापत्तेः । नच प्रायश्चित्ताधिक्यार्थं तत् । त्यक्त्वा चान्द्रायणं चरेदिति वाक्यशेषे प्रायश्चित्तस्यैकरूप्यश्रवणात् । यथाश्रुतवादिनां मते इममेवाऽपरितोषमाविष्कुर्वता विज्ञानेश्वरेणाप्युक्तम् । मातृगोत्रामप्यपरिणेयां केचिदिच्छन्तीति । एवं च मातुलस्य सुतामूढ्वेत्येतद्ब्राह्मादिविवाहोढाविषयकत्वेनैव पर्यवस्यति । तस्मान्मातुलसुतामित्येतद्गान्धर्वादिविवाहोढासुतविषयमिति पूर्वोदाहृतं माधवाचार्यादिमतमपि कथङ्कारं सङ्गच्छत इति परिभावनीयं सूरिभिः । नारायणस्त्वाह—मातृगोत्रां कन्यात्वसमये यन्मातुर्गोत्रं न तु मातृत्वसमये तदुत्पन्नामित्यर्थः । अयं च निषेधो यावदस्मान्मातृकुलजादेतन्नाम्नोऽस्याजन्मेति विशिष्य ज्ञायते तावत्पर्यन्तमेव । तदूर्ध्वं तु न दोषः । तथाच स्मर्यते—

मातुः सगोत्रामप्येके नेच्छन्त्युद्वाहकर्मणि ।
जन्मनाम्नोरविज्ञाने तूद्वहेदविशङ्कित इति ।

अत्र पूर्वार्द्धेन सामान्यतो मातुः सगोत्रायाः अविवाह्यत्वं मतान्तरत्वेनोट्टङ्क्य उत्तरार्द्धेन विषयनिष्कर्षः क्रियते । यत्तु—

सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।
तद्गोत्रे तत्कुले वापि विवाहो नैव दोषकृदिति ॥

तत्स्वगोत्राज्ञातविषयमित्याहुः । तत्रापि गायत्रीमात्रदातुः कन्या त्याज्या न तु गोत्रं कुलं वेत्युक्तम् । आचार्यस्य तु शेषः स्मर्यते ।

गुरोः सगोत्रप्रवरा नोद्वाह्या क्षत्रवैश्ययोः ।
स्वगोत्राद्यनभिज्ञैश्च विप्रैराचार्यगोत्रजा इति ॥
असंप्रज्ञातबन्धूनामाचार्यप्रवराः स्मृताः ।
पक्षे चास्मिन् विवाहोपि तद्गोत्रैः सह नेष्यत इति च ।

अत्र चासपिण्डामिति निषेधः सार्ववर्णिकः, असमानार्षेति तु त्रैवर्णिकविषयम् । तत्र क्षत्रवैश्ययोराचार्यगोत्रप्रवरपुरस्कारेण निषेध इति स्थितम् । इह सपिण्डासमानगोत्रासमानप्रवरासु भार्यात्वमेव नोत्पद्यते, रोगिण्यादिषु तु दिष्टविरोधवतीषु भार्यात्वमुत्पद्यत एवेति विज्ञानेश्वरः । नारायणस्त्वाह– एवं सति ऋक्षवृक्षनदीनाम्निषु भार्यात्वानुत्पत्तौ तु प्रमाणं न पश्याम इति । क्वचित्तु वचनादेव विवाहनिषेधः । यथा गृह्यपरिशिष्टे विरुद्धसम्बन्धामुपयच्छेतेत्युक्त्वा दम्पत्योर्मिथः पितृमातृसाम्ये विरुद्धसंबन्धः । यथा भार्या स्वसुर्दुहिता पितृव्यपत्नी स्वसा चेति स्वयमेव विवृते विरुद्धसम्बन्धे तथा नारदः—

प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् ।
नैवैकजन्ययोः पुंसोरेकजन्ये च कन्यके इति ॥
एकमातृजातानामेकस्मिन् वत्सरे विवाहो न कार्यः ।

तदुक्तं सारावल्याम् —

एकमातृप्रसूतानामेकस्मिन् वत्सरे खलु ।
विवाहं नैव कुर्वीत कृते त्वेको विनश्यतीति ॥
यमलयोस्तु न दोषः ।

न समानक्रियां कुर्याद्विना यमलजातयोरिति वचनात् । अत्र विशेषमाह वासिष्ठः–

एकोदरीकरतलग्रहणं यदि स्या-
देकोदरस्थवरयोश्च कुलक्षयः स्यात् ।
एकाब्दके तु विधवा भवतीह कन्या
नद्यन्तरे तु शुभदं पृथुशैलरोधे ।

यत्तु गर्गवचनम्—
भ्रात्रोर्युगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
न जातु मण्डनं कुर्यादेकस्मिन् मण्डपेऽहनि ।
पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् ।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति निश्चयइति ।

तदेतद्भिन्नमातृकविषयकमिति केचित् । ऐकमातृक्येप्यनुकल्पाय-मित्यन्ये । तथा ।

कुले ऋतुत्रयादर्वाग् मण्डनान्नतु मण्डनम् ।
पुत्रोद्वाहान्नैव पुत्रीविवाहोपि ऋतुत्रये इति ॥

तथा—
अब्दान्तरान्मुण्डनञ्च नैकदा मुण्डनद्वयमिति ।

अब्दभेदे तु न दोषः । तदुक्तं सारावल्याम्—
फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्वीत नर्तुत्रयविलम्बनमिति ।

तथा ज्येष्ठे मासे ज्येष्ठगर्भस्य जन्मभादौ च सर्वेषां मङ्गलकार्यं निषिद्धं रत्नकोशे—

जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् ।
ज्येष्ठमासाद्यगर्भस्य शुभवर्ज्यं स्त्रिया अपीति ।

## अथ वरगुणः ।

तत्र बुद्धिमते कन्यां प्रयच्छेदिति गृह्यम् । याज्ञवल्क्यः—
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रिय इति ।
एतैः कन्यकायामुक्तेषु अन्वययोग्यैस्तत्र भ्रातृमत्त्वं वरे नापेक्षितम् ।

पुत्रिकाकरणशङ्कानिवृत्तिरूपफलाभावात् । असपिण्डत्वं त्वंपेक्षितम् । तेन कूटस्थमारभ्य पञ्चम्याः पुत्री यद्यप्यसपिण्डा तथापि पञ्चमस्य पुत्रेण सापिण्डेन नोद्वाह्या । यत्नादिति । परीक्षोपायमाह नारदः—

यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेभिर्विपरीतस्तु षण्ढक इति ।

ह्लादि ध्वनिमत् । वर्ज्यानाह कात्यायनः—

दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम् ।
शूराणां निर्धनानां च न देया कन्यका बुधैरिति ।

## अथ कन्यादातारः ।

तत्र नारदः—

पितादद्यात्स्वयं कन्यां भ्राता वानुमते पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ।
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते ।
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ।
यदा तु नैव कश्चित् स्यात्कन्या राजानमाव्रजेत् ॥

याज्ञवल्क्योपि—

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम् ॥

सकुल्यः प्रत्यासत्तिक्रमेणादौ पितृकुलस्थः तदभावे मातामहकुलस्थः सर्वाभावे जननी । प्रकृतिस्थ उन्मादादिदोषहीनः । गम्यं गमनार्हम् । सावर्ण्यादिगुणयुक्तमित्यर्थः । अप्रयच्छन् भ्रूणहत्यां प्राप्नोतीति वचनात् । गुणाढ्यवरालाभे निर्गुणायापि देया । तदाह बोधायनः—

दद्याद् गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुध्याद्रजस्वलामिति ।

नग्निका नववार्षिकी रोहिण्यपरपर्याया ।

मनुरपि—

उत्कृष्टायाभिरूपाय वराय सदृशाय च ।

अप्राप्तामपि तां तस्मै कन्यां दद्याद्विचक्षण इति ॥

अप्राप्ताम् अप्राप्तविवाहसमयाम् । बालिकामपीत्यर्थः । कालान्तरे दुर्गुणायापि देयत्वापत्तेरिति भावः । यत्तु यमेनोक्तम्—

काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि ।

न त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचिदिति ॥

तद्गुणवल्लाभे निर्गुणाय न देयेत्येवं परम्, नतु ऋतुमत्यपि तिष्ठेदित्यस्मिन् स्वार्थे तात्पर्यम् । अपित्रा गुणहीनायेति बोधायनोक्तानुकल्पस्य निर्विषयतापत्तेः । वयोविशेषेण दातुः फलविशेषमाह मरीचिः—

गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।

कन्यां ददद् ब्रह्मलोकं रौरवं तु रजस्वलामिति ।

गौर्यादिलक्षणमाह यमः—

अष्टवर्षा भवेत् गौरी नववर्षा तु रोहिणी ।

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वलेति ॥

संवर्त्तोऽपि—

अष्टमे तु भवेद् गौरी नवमे नग्निका भवेत् ।

दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृतेति ॥

दृष्टे तु रजसि पित्रादिषु सत्स्वपि कञ्चित्कालं पित्रादिकं प्रतीक्ष्य तदुपेक्षणे स्वयमेव वरं वरयेत् । तदाह बोधायनः—

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।

ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥

अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम् ।

नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥

सा यं भर्त्तारमधिगच्छति सोपि नैनोऽधिगच्छतीत्यर्थः ।

यत्तु विष्णुवचनम्—

ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरमिति ।

तद्गुणवद्वरलाभविषयं बोध्यम् । यद्यपि यमेन दशवर्षीयां कन्याशब्दः परिभाषितः तथापीह विवाहरहितस्त्रीमात्रपरो बोध्यः । तथा चोमामहेश्वरसंवादे—

ऋतुस्नाता तु या शुद्धा सा कन्येत्यभिधीयते इति ।

अष्टावक्रोपाख्याने च वृद्धस्त्रियां प्रयुक्तः ।

कौमारं ब्रह्मचर्यं मे कन्यैवास्मिन्नसंशय इति ।

स्मृत्यर्थसारे—

विवाहे वितते तन्त्रे होमकाले उपस्थिते ।

कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥

स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।

युञ्जानमाहुतिं हुत्वा ततः कर्म प्रवर्तते ।

यद्वा—

विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला ।

त्रिरात्रं दम्पती स्यातां पृथक्शय्याशनासनौ ।

चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि ।

विवाहहोमं कुर्यातामित्यादिस्मृतिसंग्रह इति ।

स्कान्दे—

आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।

धर्मेण विधिना दातुमसगोत्रोऽपि युज्यते ।

आत्मीकृत्य स्वकीयां कृत्वेत्यर्थः । तत्फलं चोक्तं विष्णुधर्मोत्तरे-

अनाथां कन्यकां दत्त्वा सदृशाभ्यधिके वरे ।

द्विगुणं फलमाप्नोति कन्यादानं यदीरितमिति ।

स्त्रीणां च विवाह उपनयनस्थानापन्नः ।

तदाह मनुः—

वैवाहिको विधिः स्त्रीणामौपनायनिको मत इति ।

यत्तु हारीतेनोक्तम्—द्विविधाः स्त्रियः। ब्राह्मणवादिन्यः, सद्यो वध्वश्च । तत्र ब्रह्मवादिनीनामुपनयन, मग्नीन्धनं, वेदाध्ययनं, स्वगृहे च भैक्षचर्येति ॥ सद्यो वधूनां तूपस्थिते विवाहे कथञ्चिदुपनयनमात्रं कृत्वा विवाहः कार्य इति । तदेतत्कल्पान्तरविषये । तथाच यमः—

पुरा कल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥
पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः ।
स्वगृहे चैव कन्याया भैक्षचर्या विधीयते ॥
वर्जयेदजिनं चीरं जटाधारणमेव चेति ॥

अथ विवाहभेदाः ।

मनुः—

ब्राह्मो, दैव, स्तथा चार्षः, प्राजापत्य, स्तथासुरः ।
गान्धर्वो, राक्षसश्चैव, पैशाचस्त्वष्टमो मत इति ॥
एतेषां लक्षणं फलं चालङ्कृत्य कन्यामिति गृह्यखण्डे स्फुटम् ।

याज्ञवल्क्योऽपि—

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
यज्ञस्थ ऋत्विजे दैव, आदायार्षस्तु गोद्वयम् ।

मनुः—

सहोभौ चरतां धर्ममिति वाचानुभाष्य तु ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥

यद्यप्यन्येष्वपि विवाहेषु सहधर्मचरणमस्ति तथाप्यत्र यावज्जीवं सहधर्ममेव । नतु मध्ये आश्रमान्तरपरिग्रहः। स्त्र्यन्तरपरिग्रहो वेति विशेष इति प्रयोगरत्ने नृसिंहः, हरदत्तश्च ॥

याज्ञवल्क्यः—

आसुरो द्रविणादानात्, गान्धर्वः समयान्मिथः, ।

राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलादिति ॥

एषां व्यवस्थामाह मनुः—

षडानुपूर्व्याद्विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्मान्न राक्षसमिति ॥

आदितः षड्विवाहा विप्रस्य धर्म्याः । आसुरादयश्चत्वारः क्षत्रियाणां धर्म्या इति माधवः । नारायणस्तु-पैशाचस्य शूद्रेष्वपि निन्दितत्वात्प्राजापत्यादयश्चत्वारो ग्राह्याः तानेव चतुरः तेष्वपि अराक्षसमिति व्युदासात्त्रयः प्राजापत्यासुरगान्धर्वाः शिष्यन्ते इति व्याचख्यौ । एतेषां मध्ये प्रशस्तान् मनुरेवाह—

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं शूद्रवैश्ययोरिति ॥

स्मृत्यन्तरे—

चत्वारो ब्राह्मणस्याद्याः शस्ता, गान्धर्वराक्षसौ ।
राज्ञ, स्तथाऽऽसुरो वैश्ये, शूद्रे चान्त्यस्तु गर्हित इति ॥

गर्हितो न कस्यापि प्रशस्त इत्यर्थः । अन्यविवाहासम्भवे ब्राह्मणादीनां सर्वेषां पैशाचमप्यनुजानाति वत्सः—

सर्वोपायैरसाध्या स्यात् सुकन्या पुरुषस्य या ।
चौरेणापि विवाहेन सा विवाह्या रहःस्थितेति ॥

गान्धर्वादिष्वपि भार्यापतिभावाय पश्चाद्धोमादिसप्तपद्यन्तं कार्यम् ।

गान्धर्वासुरपैशाचा विवाहो राक्षसश्च यः ।
पूर्वं परिग्रहस्तेषु पश्चाद्धोमो विधीयते ।

इति परिशिष्टात् । होमाद्यभावे वरान्तराय देया । सति नेति विशेषः । तदुक्तं वसिष्ठबौधायनाभ्याम्—

बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सेति ॥

बलादिति च्छलादेरप्युपलक्षणम् । स्मृत्यर्थसारे—

आसुरेषूपवासः स्याद् गान्धर्वेषु त्रिरात्रकम् ।
राक्षसे चैव पैशाचे कुर्याच्चान्द्रायणं तथेति ॥

द्वितीयपरिणयने हेतूनाह याज्ञवल्क्यः—

सुरापी व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी च येति ॥

अधिवेदनं भार्यान्तरपरिग्रहः । उक्तहेत्वभावेप्यधिवेत्तारं प्रत्याह स एव—

आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रिय इति ॥

त्यजन् अधिविन्दन्निति विज्ञानेश्वरः । द्विविधं ह्यधिवेदनम् । धर्मार्थं कामार्थं च । तत्र पुत्रोत्पत्त्यादिधर्मार्थे प्रागुक्तानि मद्यपत्वादीनि निमित्तानि । कामार्थे न तान्यपेक्षितानि, किंतु पूर्वोढा तोषणीया ।

एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थस्तोषयित्वार्थैः पूर्वोढा, मपरां वहेदिति ।

स्मृतेः । यद्यप्यसौ स्वयं न तोषयेत्तदा तत्तोषणाय पूर्वोढायै अधिवेत्तुर्धनस्य तृतीयांशं राज्ञा अधिवेत्ता दाप्य इति फलितार्थः । यद्यपि ब्राह्मणस्य क्षत्रियादिकन्याविवाहोपि शास्त्रसंमतस्तथापि

असवर्णासु कन्यासु विवाहश्च द्विजातिषु ।

इति कलिनिषिद्धेषु परिगणितत्वेन सांप्रतमनुपयोगात्तत्प्रपञ्चो न क्रियते । बह्वीनां पत्नीनामृतुयौगपद्ये गमनक्रममाह देवलः—

यौगपद्ये तु तीर्थानां विवाहक्रमशो व्रजेत् ।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोपि वेति ॥

तीर्थमृतुः ।

तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ।
योनौ जलावतारे चेति—

निघण्टुबलेन योनिवाचकस्य तद्धर्मलक्षकत्वात् । तत्त्यौगपद्ये सत्य-

सवर्णासु वर्णक्रमेण, सवर्णासु विवाहक्रमेण गच्छेत् । यदा तु काचि-दपुत्रा पुत्रवत्य इतराः तदा अपुत्रामग्नौ गच्छेदित्यर्थ इति माधवः । बह्वी, पत्नीषु सहधर्मचारिणीं निर्द्धारयति याज्ञवल्क्यः—

सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।
सवर्णासु विधौ धर्मे ज्येष्ठाया न विनेतरा इति ।

सवर्णायां सत्यामित्युक्त्या तदभावे त्वसवर्णाप्यभ्यनुज्ञाता । तत्रापि शूद्रां निषेधति वसिष्ठः—कृष्णवर्णा या वै रमणायैव न धर्माय इति सवर्णानेकत्वे तु ज्येष्ठाया विना इतरा न किंतु तया सहैव कनीयस्यो नियोक्तव्या इत्यर्थः । तथाच बौधायनः—एकैकां गार्हपत्यमीक्षयेत् एकैकामाज्यमवेक्षयेदिति । कात्यायनोपि—

नैकयापि विना कार्यमाधानं भार्यया द्विजैः ।
अकृतं तद्विजानीयात्सर्वा नाऽन्वारभन्ति चेदिति ।

यत्तु विष्णुवचनम्—

सवर्णासु विधौ धर्मे ज्येष्ठाया न विनेतरा इति ।
अग्निहोत्रादियज्ञेषु द्वितीया न सहाऽऽचरेत् ।
अन्यथा निष्फलं तस्य स्विष्टैः क्रतुशतैरपि ॥

तदसवर्णाविषयं सत्स्वग्निषु या परिणीता तद्विषयं चेति माधवः । तृतीया तु मानुषी नोद्वाह्या । तदुक्तं मात्स्ये—

तृतीयां मानुषीं नैव चतुर्थीं तु समुद्वहेदिति ॥

तृतीयां त्वर्ककन्यामुद्वहेत् तद्विधानं शौनकादिग्रन्थाद्बोध्यम् । तत्र पञ्चमदिवसे कर्त्तव्यमुक्तं ब्रह्मपुराणे—

चतुर्थदिवसेऽतीते पूर्ववत्संप्रपूज्य च ।
विसृज्य होममग्निं च मानुषीमुद्वहेत्ततइति ॥

अथोपासनारम्भसमयनिर्णयः ।

तत्र गृह्यम्—पाणिग्रहणादिगृह्यं परिचरेदिति ॥

शौनकः—

यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति।
उपक्रम्योत्तरस्याह्नः सायं परिचरेदमुमिति ॥

यदि रात्रौ नवनाड्यनन्तरमग्न्युत्पत्तिस्तदोत्तरादिने सायंहोमारम्भः। तत्पूर्वमग्न्युत्पत्तौ तु तस्यां रात्रावेवारम्भ इति सुदर्शनभाष्यकारः॥ इत्थं षोडशसंस्कारा व्याख्याताः।

गौतमस्त्वाह—गर्भाधान, पुंसवन, सीमन्तोन्नयन, जातकर्म, नामकरणा, न्नप्राशन, चौलोपनयनम्, चत्वारि वेदव्रतानि, स्नानं, सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानम्, देवपितृमनुष्यभूतब्राह्मणानामेतेषाञ्च, अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्री आश्वयुजीति सप्तपाकयज्ञसंस्थाः। अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रहायणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः। अग्निष्टोमात्याग्निष्टोमउक्थःषोडशी वाजपेयोतिरात्राप्तोर्याम इति सप्तसोमसंस्थाः। इत्येते चत्वारिंशत्संस्काराः। अष्टावात्मगुणाः। दया सर्वभूतेषु, क्षान्ति, रनसूया, शौच, मनायासो, माङ्गल्य, मकार्पण्य, मस्पृहेति यस्यैते चत्वारिंशत्संस्काराः न चाष्टावात्मगुणाः न स ब्रह्मणः सायुज्यं सालोक्यं गच्छति। यस्य तु खलु संस्काराणामेकदेशोप्यष्टावात्मगुणाः अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति गच्छतीति।

अस्यार्थः। उपनयनान्तानामष्टानां समाहारद्वन्द्वः, चत्वारि वेदव्रतानि प्रतिशाखं गृह्येपूक्तानि। स्नानम् समावर्त्तनम्। सहधर्मचारिणीसंयोगो विवाहः। पञ्चमहायज्ञाः। पृथक् पञ्चसंस्कारा नतु समुदायः। एतेषां चेति। वक्ष्यमाणानामनुष्ठानमित्यर्थः। पर्वणि भवः पार्वणः स्थालीपाकः। श्राद्धममावास्यादि। श्रावणी तत्र कर्त्तव्यं श्रवणाकर्म। आग्रहायणी तत्र कर्त्तव्यं प्रत्यवरोहणम्। चैत्री तत्र कर्त्तव्यः शूलगवः। आश्वयुजी तत्र कर्त्तव्यमाश्वयुजीकर्म। अनाहिताग्नेराग्रहायणं चेति द्वयम् आश्वयुजीशब्दग्राह्यमिति

हरदत्तः । पाकयज्ञाः अल्पयज्ञाः प्रशस्तयज्ञा वा । 'तं पाकेन मनमनसा योमापाकेन मनसे, त्यादौ पाकशब्दप्रयोगस्य प्रशंसायां दर्शनादिति वृत्तिकृन्नारायणः । आख्या चेयं गार्ग्याणामिति हरदत्तः । तथाचाऽऽपस्तम्बः—लौकिकानां पाकयज्ञशब्द इति । संस्था विधा । पाकयज्ञविधाः सप्तेत्यर्थ इति हरदत्तः । अग्न्याधेयादयः श्रुतिप्रसिद्धाः । दर्शपौर्णमासाविति समुदाय एकः संस्कारः । समग्रहणात् । सोमसम्बन्धाभावादेते हविर्यज्ञाः । अग्निष्टोमे राजन्यस्य षोडशिग्रहो गृह्यते सोत्यग्निष्टोमः । ब्राह्मणस्य कथमयं संस्कार इति चिन्त्यमिति हरदत्तः । गच्छति गच्छतीति द्विरुक्तिरष्टमाध्यायसमाप्त्यर्था । अत्राधानादयो गृहस्थस्य नित्याः । तथाच वसिष्ठः— अवश्यं ब्राह्मणोग्नीनादधीत । दर्शपूर्णमासाग्रहायणेष्टिचातुर्मास्यपशुसोमांश्च यजेतेति ॥ हारीतोपि—

पाकयज्ञान् यजेन्नित्यं हविर्यज्ञांस्तु नित्यशः ।
सौम्यांस्तु विधिपूर्वेण य इच्छेद्ब्रह्म चाव्ययमिति ॥

एवं च यथाशक्तयङ्गोपसंहारेणाप्यनुष्ठेयानि । नित्येषु यथाशक्तिन्यायस्य षष्ठे स्थितत्वात् ॥ बौधायनोपि—

यस्य नित्यानि लुप्तानि तथैवागन्तुकानि च ।
विपन्नपि न स स्वर्गं गच्छेत्तु पतितो हि स इति ॥
तस्मात् कन्दैः फलैर्मूलैर्मधुनाज्यरसेन वा ।
नित्यं नित्यानि कुर्वीत नतु नित्यानि लोपयेदिति च ॥

ननु संपूर्णद्रव्यसंपत्तावेव सोमयागः कार्यः । तदाह मनुः—

यस्य त्रैवार्षिकं वित्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हतीति ।
अल्पवित्तस्य यज्ञं निषेधति स एव
पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
न त्वल्पदक्षिणैर्यज्ञैर्यजेताथ कथंचनेति ॥

मत्स्यपुराणेऽपि—

अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तथर्त्विजम् ।

आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुरिति ॥

तथा चैतानि वचनानि कन्दमूलैरित्यादिबोधायनादिवचनै-र्विरुध्येरन्निति चेत् मैवम्, एषां वचनानां काम्ययागविषयत्वात् । काम्येषु सर्वाङ्गोपसंहारेणाधिकारस्य पूर्वतन्त्रे सिद्धान्तितत्वादिति दिक् ।

मूलम्—

जीवत्पितरि नादध्यान्नाहिताग्निः स वै यदि ।

तथैव भ्रातरि ज्येष्ठे न यजेन्न विवाहयेत् ॥

अनाहिताग्नौ पितरि ह्याधानं तु करोति यः ।

अरण्योरग्निमारोप्य तमादध्याद् द्विजोत्तमः ॥

ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्यादग्निपरिग्रहम् ।

अनुज्ञातोऽपि सन् पित्रा नादध्यान्मनुरब्रवीदिति ।

क्वचित्परिविन्दतोऽप्यदोष इत्याह कात्यायनः—

देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।

वेश्याभिसक्तपतितशूद्रकल्पातिरोगिणः ॥

जडमूकान्धबधिरकुब्जवामनकुण्ठकान् ।

अतिवृद्धानभार्यांश्च कृषिसक्तान् नृपस्य च ॥

धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।

कुहकोन्मत्तचौरांश्च परिविन्दन्न दुष्यति ॥

धनवार्द्धुषिकं राजसेवकं कर्षकं तथा ।

प्रोषितं च प्रतीक्षेत वर्षत्रयमपि त्वरन्निति ।

अत्रापिशब्दसूचितं कालान्तरमाह वसिष्ठः—अष्टौ द्वादश वा वर्षाणि ज्येष्ठभ्रातरमनिर्विष्टमप्रतीक्षमाणः प्रायश्चित्ती भवतीति । आ-धानानधिकारिणि पितरि सत्यपि पुत्र आदधीतेत्याह सुमन्तुः—

पितुर्यस्य तु नाधानं कथं पुत्रस्तु कारयेत् ।

अग्निहोत्राधिकारोस्ति शङ्खस्य वचनं यथेति ।

एतेन

पिता पितामहो यस्य अग्रजो वाथ कस्य चित् ।
तपोग्निहोत्रमन्त्रेषु न दोषः परिवेदन इति ।

माधवोदाहृतमौशनसं वाक्यमपि व्याख्यातम् । तदेवं भ्रातरि पितरि चानधिकारिणि न दोषः । अधिकारिणि तु ज्येष्ठ तदनुज्ञया । पितरि तु अधिकारिणि सति अनुज्ञयापि नाधानमिति विवेकः । प्रागुक्तप्रतीक्षाकालानां व्यवस्थामाह माधवः—धर्ममर्थं चोद्दिश्य देशान्तरं गते द्वादशवर्षं प्रतीक्षा इतरत्र तु पक्षान्तराणि शक्त्येति । तथाच तदुदाहृता स्मृतिः—

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः ।
न्याय्यः प्रतीक्षितुं भ्रात्रा श्रूयमाणः पुनः पुनरिति ॥

वृद्धवसिष्ठः—

अग्रजस्तु यदाऽनग्निराधद्व्यादनुजः कथम् ।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

अत्राज्ञातविषयत्वेनाधानस्यैव विशिष्य निर्देशाद्विवाहे ऽनुज्ञायामपि दोषो भवत्येवेति गम्यते । एतदेवाभिमेत्याह हारीतः—

सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत् ।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्ययेति ॥

हेमाद्रिः ।

इति पदवाक्यप्रमाणज्ञश्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन रचितायां श्रीचतुर्विंशतिमतव्याख्यायां संस्कारकाण्डं सम्पूर्णम् ।

शुभमस्तु ।

# अथ श्राद्धकाण्डम्

तत्र मृतोद्देशेन श्रद्धया द्रव्यत्यागविशेषः श्राद्धम्। तदाहुर्मूले-
मृतानां तु भवेच्छ्राद्धं ब्राह्मणैर्वेदपारगैरिति।
तथाच ब्रह्माण्डपुराणम्—
देशे काले च पात्रे च श्रद्धया विधिना च यत्।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतमिति ॥

तद्द्विविधं पार्वण, मेकोद्दिष्टं चेति। त्र्युद्देशेन पार्वणम्, एकोद्देशेन एकोद्दिष्टम्। पुनस्त्रिविधम्। नित्यं, नैमित्तिकं, काम्यं, चेति। तत्र नित्यम् अहरहरमावास्याष्टकादिषु। नैमित्तिकं पुत्रजन्मादिषु। काम्यं फलार्थिनां तिथिनक्षत्रविशेषेषु।

तत्र श्राद्धे देशविशेषः स्मर्यते विष्णुधर्मोत्तरे—
दक्षिणप्रवणे देशे तीर्थादौ वा गृहेपि वा।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्याद्विचक्षणइति ॥
दक्षिणप्रवणे दक्षिणावनते। भूसंस्कारो गोमयेनोपलेपः।
तथा च शङ्खः—
गोगजाश्वादिपृष्ठेषु कृत्रिमायां तथा भुवि।
न कुर्यात् श्राद्धमेतेषु पारक्याशुचिभूमिषु ॥

कृत्रिमायां वेदिकादौ। पारक्यामपरपरिगृहीतायाम्। ताश्च गोष्ठारामादयो न पुनस्तीर्थादिस्थानानि। तथा चादित्यपुराणम्—
अटवी पर्वताः पुण्या नदीतीराणि यानि च।
सर्वाण्यस्वामिकान्याहुर्नहि तेषु परिग्रह इति ॥
देवलः—

श्राद्धस्य पूजितो देशो गया, गङ्गा, सरस्वती, ।
कुरुक्षेत्रं, प्रयागश्च, नैमिषं, पुष्कराणि च, इति ॥

व्यासः—
पुस्करेष्वक्षयश्राद्धं जपहोमतपांसि च ।
महोदधौ प्रयागे च काश्यां च कुरुजाङ्गले ॥

श्राद्धकालानाह याज्ञवल्क्यः ।

अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ।
तत्रामावास्याश्राद्धं नित्यम् ।
श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः ।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च

इति वचनात् । अष्टकाश्चतस्रः, हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति शौनकस्मरणात् । एवं भाद्रपदबहुलाष्टम्यप्यष्टका बोध्याः । तथाच पद्मपुराणे—अग्निष्वात्तपितृकन्याया वसुनाम्ना पित्रा शप्तायाः पुनरनुगृहीतायाः भाद्रपदापरपक्षाष्टकाकालेनोत्पात्तिदर्शिना ।

प्रौष्ठपदाष्टका भूयः पितृलोके भविष्यति ।
आयुरारोग्यदा नित्यं सर्वकामफलप्रदेति ॥
तदेवं पञ्चाष्टका हेमाद्र्यादिग्रन्थे स्थिताः । तत्रापि श्राद्धं नित्यम् ।
अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु स इति ।

पितामहस्मरणात् । वृद्धिः पुत्रजन्मादिः, तेन तद्विशिष्टः कालो लक्ष्यते । अयनद्वयं दक्षिणोत्तररूपं, सूर्यसंक्रम इत्यनेनैव सिद्धे पृथगुपादानं फलातिशयार्थम् । एवं विषुवतोरपि । तुलामेषयोः संक्रमणं विषुवत् । द्रव्यस्य खड्गमांसादे, ब्राह्मणानां श्रुताध्ययनसंपन्नानां संपत्तिर्लाभो

यस्मिन् काले इति बहुव्रीहिरिति माधवस्मृतिचन्द्रिकाकारादयः। विज्ञानेश्वरस्तु—द्रव्यमित्यसमस्तं पपाठ । व्यतीपातो योगविशेषः, तिथिनक्षत्रप्रयुक्तो वा, तल्लक्षणं तु स्मृतिचन्द्रिकाकृद्धृतो मनुः स्मरति—

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते इति ॥

नागदैवतमाश्लेषा, मस्तकं मृगशिरः । तथा च यद्यमावास्या रविवारेण श्रवणादिषडन्यतमनक्षत्रेण च युक्ता स व्यतीपात इत्यर्थः । अर्थद्वयमप्येतन्माधवादिग्रन्थे स्थितम् । गजच्छायालक्षणं तु स्मृत्यन्तरे—

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्तितेति ॥

पितृदैवत्यं मघा । हंसः सूर्यः । करो हस्तनक्षत्रम् । याम्या त्रयोदशी । पुराणे—

हंसे हस्तस्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैवश्वती नाम सा च्छाया कुञ्जरस्य तु इति ॥

तथा

हंसे हंसस्थिते या तु अमावास्या कारान्विता ।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ।

हंसः सूर्यस्तद्दैवतकत्वाद्धस्तनक्षत्रमपि । चन्द्रसूर्ययोर्हस्तस्थयोरिति फलितोऽर्थ इति हेमाद्रौ । स्मृतिचन्द्रिकाकारस्तु—गजच्छाया हस्तिनश्छाया । तथा च पाठकश्रुतिः—“ एतद्ध्येव पितॄणामयनं यद्धस्तिश्राद्धं तच्छायायां श्राद्धं दद्यादिति । ” एवं च—

गजच्छायासु कुर्वीत कर्णव्यजनवीजित इति—

भारते लिङ्गदर्शनमप्युपपद्यते । नच श्राद्धकालाः प्रकीर्तिता इति याज्ञवल्क्यवचनविरोधः । विज्ञानेश्वरोक्तपाठे द्रव्यशब्देन च पाठान्तरेपि वृद्ध्यादिशब्दैरिव स्वोपलक्षितकालग्रहणादित्याहुः । ग्रहणमुप-

रागः, तत्रापि स्पर्शकालो ग्राह्यः ।

त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसा इति ।

वृद्धवशिष्ठस्मरणात् । श्राद्धं प्रति रुचिरिच्छा । चकारः स्मृत्यन्तरोक्तानां संग्रहार्थः । तथाच चन्द्रिकायां जातूकर्ण्यः—

ग्रहोपरागे च सुते च जाते-पित्र्ये मघायामयनद्वये च ।
नित्यं च शङ्खे च तथैव पद्मे दत्तं भवेन्निष्पसहस्रतुल्यमिति ।

नित्यं दत्तमित्यन्वयः । तेन नित्यतालाभः । चन्द्रिकायाम्—पित्र्ये नभस्यापरपक्षे या मघा तस्यामित्यर्थः । शङ्खोऽमावास्या । पद्मोऽष्टका ।

शङ्खं प्राहुरमावास्यां क्षीणसोमां द्विजोत्तमाः ।
अष्टकासु भवेत्पद्मं तत्र दत्तं तथाक्षयमिति—
तेनैवोक्तत्वात् । यद्वा शङ्खेनोक्तं पद्मं ग्राह्यम् ।
यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च ।
पद्मकं नाम तत् प्रोक्तमयनात्तु चतुर्गुणमिति ॥

देवलः—

इन्दुक्षयो गजच्छाया मन्वादिषु युगादिषु ।
एते कालाः समुद्दिष्टाः पितॄणां प्रीतिवर्द्धना इति ।

मन्वादयो युगादयश्चापरकाण्डे प्रपञ्चितास्तत एव बोध्याः । आदित्यादिसकलवासराः काम्यश्राद्धकालाः ।

तथाच विष्णुधर्मोत्तरे—

अथ काम्यानि वक्ष्यामि श्राद्धानि नव पार्थिव ! ।
आरोग्यमथ सौभाग्यं समरे विजयस्तथा ॥
क्रमेणैतान्यवाप्नोति नात्र कार्या विचारणेति ।

तथा नक्षत्रेषु काम्यश्राद्धान्याह मार्कण्डेयः—

कृत्तिकासु पितॄनर्च्य स्वर्गमाप्नोति मानवः ।
अपत्यकामो रोहिण्यां सौम्ये त्वोजस्वितां लभेत् ॥

आर्द्रायां शौर्यमाप्नोति क्षेत्रलाभः पुनर्वसौ ।
पुष्टिः पुष्ये पितॄनर्च्य आश्लेशासु वरान् सुतान् ॥
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फल्गुनीषु च ।
प्रदानशीलो भवति सापत्यस्तूत्तरासु च ॥
प्राप्नोति श्रेष्ठतां सत्सु हस्ते श्राद्धप्रदो नरः ।
रूपवन्तीनि चित्रासु तथापत्यान्यवाप्नुयात् ॥
वाणिज्यलाभदाः स्वात्यो विशाखाः पुत्रकामदाः ।
कुर्वतामनुराधासु दद्युश्चक्रप्रवर्त्तनम् ।
ज्येष्ठास्वर्थाधिपत्यं च मूले चारोग्यमुत्तमम् ।
अषाढासु यशःप्राप्तिरुत्तरासु विशोकता ॥
श्रवणे च शुभान् लोकान् धनिष्ठासु धनं महत् ।
वेदविद्याऽभिजिति तु भिषक्सिद्धिस्तु वारुणे ॥
अजाविकं प्रौष्ठपदे विन्देद्भार्यां तथोत्तरे ।
रेवतीषु तथा रौप्यमश्विनीषु तुरङ्गमान् ॥
श्राद्धं कुर्वंस्तथाप्नोति भरणीष्वायुरुत्तमम् ।
तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु तत्त्वविदिति ॥

चक्रप्रवर्त्तनं सर्वत्राज्ञायाः प्रतिघाताभावः । तथा प्रतिमासं कृष्णपक्षेषु प्रतिपदादितिथयोपि काम्यश्राद्धकालाः । तथा च याज्ञवल्क्यः—

कन्यां कन्यावेदिनश्च पशून् क्षुद्रान् सुतानपि ।
द्यूतं कृषिं च वाणिज्यं तथैकद्विशफानपि ॥
ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके ।
जातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा त्रयोदशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयत इति ॥

कन्यावेदिनो जामातरः । क्षुद्रपशवोऽजादयः । द्यूतं द्यूते विजयः एकशफा अश्वादयः । कृष्णप्रतिपत्प्रभृतिषु अमावास्यासु चतुर्दशीभि

न्तासु तिथिषु कन्याप्रभृतीनि चतुर्दशफलानि क्रमेण प्राप्नोति इत्यर्थः। अयं च विधिः सर्वेषु नतु केवलं भाद्रपदे। तथाच शौनकः—

प्रौष्ठपद्या अपरपक्षे मासि मासि चैवमिति।

वृद्धमनुः—

नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः।

स महालयसंज्ञः स्याद्गजच्छायाह्वयस्तथेति।

यद्यपि दर्शान्तः पौर्णमास्यन्तो वा मास इति चान्द्रमासे पक्षद्वयमस्ति तथापि दर्शान्ताभिप्रायेणैवेदं बोध्यम्।

तथाच वृहन्मनुः—

आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः।

काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम्॥

आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत्।

तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा इति

आदित्यपुराणम्—

पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते।

कन्यागते पञ्चमे तु विशेषेणैव कारयेदिति॥

श्लोकगौतमः—

कन्यागते सवितरि यान्यहानि तु षोडश।

क्रतुभिस्तानि तुल्यानि संपूर्णवरदक्षिणैरिति।

कार्ष्णाजिनिः—

आदौ मध्येऽवसाने च यत्र कन्यां व्रजेद्रविः।

स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति इति॥

गौतमः—अपरपक्षे श्राद्धं पितृभ्यो दद्यात् पञ्चम्यादिदर्शान्तम्, अष्टम्यादि सर्वस्मिन् वेति। ब्रह्माण्डपुराणे—

नभस्यकृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने।

त्रिभागहीनपक्षं वा त्रिभागं त्वर्द्धमेव वा इति।

एते च पक्षं, पञ्चम्यादि, अष्टम्यादि, दशम्यादि, चेति चत्वारः पक्षाः शक्तितो व्यवस्थाप्याः। अत्यसमर्थं प्रति तु सकृन्महालयो बोध्यः। तत्र प्रतिपदादिदर्शान्तमित्यस्मिन् पक्षे नन्दादिकं न वर्ज्यम्।

तदाह कार्ष्णाजिनिः—

नभस्यापरपक्षे तु श्राद्धं कार्यं दिने दिने।

नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी इति॥

नन्वेतत्पूर्वोदाहृतेन वर्जयित्वा चतुर्दशीमिति याज्ञवल्क्यवचनेन निरुद्धमिति चेन्न, तस्य पञ्चम्यादिपक्षेषु सावकाशतया निरवकाशेन कार्ष्णाजिनिवचनेन बाधादिति। माधवः—

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।

इति मनुवचनमप्यत्रानुकूलमेव।

कन्यागते सवितरि दिनानि दश पञ्च चेति।

यान्यहानि तु षोडशेत्याद्यपि चतुर्दशीश्राद्धाभ्युपगम एव शोभत इति माधवः। पञ्चदशत्वषोडशत्वयोर्द्वेधा विषयविभागमाह माधवः-तिथिवृद्धौ षोडश, साम्ये पञ्चदशेत्येकः पक्षः। आश्वयुक्शुक्लप्रतिपदा सह षोडशेति कल्पान्तरम्। तथाच देवलः—

अहःषोडशकं यत्तु शुक्लप्रतिपदा सह।

चन्द्रक्षयाविशेषेण सापि दर्शात्मिका स्मृतेति।

हेमाद्रौ तु—प्रौष्ठपद्या सह षोडशेति तृतीयकल्पः स्थितः। ननु चरमपक्षद्वये दिनानि दश पञ्च चेति वचनस्य का गतिरिति चेत्, अत्र माधवादयः—द्वादशकपालेऽष्टाकपालवत् षोडशसु पञ्चदशेत्यवयुत्यानुवादः। अथवा पञ्चदशदिवसषोडशदिवसविध्योर्व्रीहियववत् विकल्प एवेत्याहुः। अत्र चापरपक्षश्राद्धे पक्षद्वयं हेमाद्रौ स्थितम्। तत्रोदाहृतकार्ष्णाजिनिवचने श्राद्धषोडशकं प्रतीति संख्यया कर्मभेदः प्रतीयते, प्रतिपद्धनलाभेत्यादिभिश्च प्रत्येकं फलसम्बन्धः, ततो भिन्नानां श्राद्धानामेते प्रयोगा इत्येकः पक्षः।

नभस्यस्यापरे पक्षे तिथिषोडशकं तु यत् ।

कन्यास्थार्कान्वितः श्रेयान् स कालः श्राद्धकर्मणि इति ॥

कार्ष्णाजिनिवाक्ये तु संख्यायुक्तेषु समुच्चयः स्यादिति न्यायेन तिथीनां श्राद्धसमुच्चयोऽवगम्यते । न चावृत्तिं विना तदुपपद्यत इति तदेव श्राद्धं प्रतिदिनमावर्त्ततइति अन्यः पक्षः ।

तत्राद्ये पक्षे प्रतिदिनं दक्षिणा देया । उत्तरस्मिन् पक्षे समाप्तिदिने दक्षिणा देया दक्षिणायाः प्रयोगाङ्गत्वात् । ब्राह्मणा अपि प्रतिदिनं त एव नतु भिद्यन्ते । देशो ऽपि स एवेत्यादि विवेचनीयम् । अत्यन्तदरिद्रस्तु एकस्मिन् दिवसे कुर्यात् । तदुक्तं नागरखण्डे—

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।

यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे ।

तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवमिति ।

तथा च तत्रैव—

आषाढ्याः पञ्चमे पक्षे यः श्राद्धं न करिष्यति ।

शाकेनापि दरिद्रो वा सोन्त्यजत्वमुपेष्यतीति—

अकरणे दोषश्रवणाद्दरिद्रेणापि यथासंभवं कार्यम् । तच्च आषाढ्याः पञ्चमपक्षस्य पञ्चमीमारभ्यानन्तरपक्षपञ्चमीपर्यन्तासु तिथिषु मध्येऽनिषिद्धायां कस्यांचित्कर्तव्यम् ।

तदाह यमः—

हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।

पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोरिति ॥

अशक्त्यादिना तत्रापि श्राद्धाकरणे तु यावत्कन्यागतः सूर्यस्तावन्मध्ये देयं तत्राप्यकरणे तु यावद्वृश्चिकदर्शनं श्राद्धं कुर्यात् ।

तदाह सुमन्तुः—

कन्याराशौ महाराज यावत्तिष्ठेद्दिभावसुः ।

तस्मात्कालाद्भवेद्देयं वृश्चिकं यावदागत इति ।

तत्र सकृन्महालयपक्षे वर्ज्यानाह गर्गः—
नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयादिति ॥
त्रिजन्मनि आत्मनो भार्यायाः पुत्रस्य च जन्मनक्षत्र इत्यर्थः ।
कर्तुश्च पुत्रदाराणां त्रिजन्मर्क्षाणि वर्जयेत् ।
इति स्मृत्यन्तरात् । वृद्धगर्गः—
प्राजापत्ये च पौंस्ने च पित्र्यर्क्षे भार्गवे तथा ।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यतीति ॥

प्राजापत्यं रोहिणी, पौंस्नं रेवती, पित्र्यं मघा । नारदस्तु—
कृत्तिकायां च नन्दायां भृगुवारे त्रिजन्मसु ।
पिण्डदानं न कर्त्तव्यं कुलक्षयकरं यतः ॥
त्रिजन्मसु त्रिपादेषु नन्दायां भृगुवासरे ।
धातृपौंस्नभयोः श्राद्धं न कर्तव्यं कुलक्षयात् ॥
सकृन्महालये काम्ये पुनःश्राद्धेऽखिलेषु च ।
अतीतविषये चैवमेतत्सर्वं विचिन्तयेदिति ॥

अस्यापवादः स्मर्यते हेमाद्रौ—
अमापाते भरण्यां च द्वादश्यां पक्षमध्यके ।
तस्यां तिथिं च नक्षत्रं वारं च न विचारयेत् इति ॥
एतन्महालयश्राद्धं मलमासे न कर्तव्यम् । तथाच भृगुः—
एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् ।
हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः ।
वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यं च न कुर्याद्भानुलङ्घित इति ।
ननूदाहृतगर्गवचनेन त्रयोदशीश्राद्धं निषिद्धम् । अङ्गिरसापि—
त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितमिति ॥

मनुना तु त्रयोदश्यां श्राद्धं विहितम् ।

यत्किंचिन्मधुना मिश्रं मदद्यात्तु त्रयोदशीम् ।

तदप्यक्षयमेव स्याद्वर्षासु च मघासु चेति ॥

तदनयोर्विप्रतिषेधयोः कीदृशो विषयविभाग इति चेत्, अत्र हेमाद्रिकाराः–निषेधवाक्यानि एकवर्गोद्देश्यकविषयाणि । अत एव कार्ष्णाजिनिः—

श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।

न तृप्तास्तत्र ये यस्य प्रजां हिंसन्ति तस्य ते ॥ इति

यद्यपि

पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।

इति धौम्यवचनादेव मातामहवर्गोऽपि प्राप्तस्तथापि व्यामोहमात्रस्यै-कवर्गश्राद्धस्यायं निषेधः उदाहृतकार्ष्णाजिनिवचनस्यैवमेव व्याख्येय-त्वात् । यद्वा सपिण्डश्राद्धविषयको निषेधः ।

अयनद्वितये श्राद्धं विषुवद्द्वितये तथा ।

युगादिषु च सर्वासु पिण्डनिर्वपनादृते ॥

इति पुलस्त्यवचनात् । भाद्रपदापरपक्षत्रयोदश्याश्च युगादित्वाद् मघान्वितत्वेनापि पिण्डदाननिषेधः स्मर्यते आदित्यपुराणे—

संक्रान्तावुपवासेन पारणेन च भारत ।

मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यतीति ॥

चतुर्दशीश्राद्धनिषेधास्तु अपमृत्युहतेतरविषयाः । तथाच मरीचिः-

विषशस्त्रश्वापदादितिर्यग्ब्राह्मणघातिनाम् ।

चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हितेति ॥

विषप्रभृतिभिर्घातोऽस्त्येषामिति तृतीयातत्पुरुषान्मत्वर्थे इति । प्रचेता अपि–

नखिदंष्ट्रिविपन्नानामेव शस्ता चतुर्दशीति ।

यत्पुनः शाकटायनेनोक्तम्

जलाग्निभ्यां विपन्नानां संन्यासे वा गृहे पथि।
श्राद्धं कुर्वन्ति तेषां वै वर्जयित्वा चतुर्दशीमिति–

तत्प्रायश्चित्तं वैधमरणविषयकम्। अत एव सहगमनादिस्थले चतुर्दशीश्राद्धं नेति हेमाद्रिः। युद्धे प्रायोपवेशे च वैधत्वेपि वचनात् चतुर्दशीश्राद्धं भवत्येव। तथाच मनुः–

जातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः।
प्रीयन्ते पितरश्चास्य ये वै शस्त्रहता रणे इति।

तथाच ब्राह्मे–

प्रायोनाशकशस्त्राग्निविषोद्धन्धनिनां तथा।
चतुर्दश्यां तु कर्त्तव्यं तृप्त्यर्थमिति निश्चय इति।

चतुर्दश्यामेषामेवेत्यर्थः। अन्येषां तु विगर्हितेति प्रागुक्तमरीचिवचनात्, अत एव

शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयत इति।

याज्ञवल्क्यीयमपि चतुर्दश्यां शस्त्रहतानामेवेति नियमपरं नतु शस्त्रादिहतानां चतुर्दश्यामेवेत्येवंपरम्। एवं च दिनान्तरेऽपि पितामहादितृप्त्यर्थं श्राद्धं कर्त्तव्यमेव। नच चतुर्दशीश्राद्धेनैव पितामहादीनामपि तृप्तिरस्त्विति वाच्यं; तस्यैकोद्दिष्टरूपत्वात्। तथा च सुमन्तुः—

समत्वमागतस्यापि पितुः शस्त्रहतस्य च।
एकोद्दिष्टं सुतैः कार्यं न तु तस्यां महालय इति॥

समत्वमागतस्य सपिण्डीकृतस्येत्यर्थः। यस्य पितृपितामहप्रपितामहेषु मध्ये कौ चिद् द्वौ शस्त्रादिना हतौ तद्द्वयोरपि चतुर्दश्यामेकोद्दिष्टं कार्यम्। तथाच स्मृतिः–एकस्मिन् द्वयोर्वैकोद्दिष्टविधिरिति। यस्य तु पित्रादयस्त्रयोपि शस्त्रादिना हतास्तेन पार्वणं कर्त्तव्यम्। एकस्मिन् द्वयोर्वेति विशेषोपादानात्। इदं च चन्द्रिकाकारापरार्कहेमाद्रीणां मतम्। माधवाचार्यस्तु–त्रिषु शस्त्रादिहतेषु त्रयाणां पृथगेकोद्दिष्टमेव कार्यमिति देवस्वामिमतमेव प्रतिपेदे पार्वणश्राद्धस्य साक्षाद्विधायकव-

चनाभावात्, एकस्मिन् द्वयोर्वेत्यस्योपलक्षणार्थत्वात् । अन्यथा वाक्यभेदापत्तेरिति तदाशयः । एकं वृणीते द्वौ वृणीते इति नित्यमाप्तत्वादनुवादः । इह वैकल्पिकमाप्तिमतो वाशब्दपूर्वकं तथैवानुवाद इति न नित्यवदनुवादविरोधोपि । त्रीन् वृणीत इतिवच्छस्त्रहते एकोद्दिष्टमित्येव विधिशरीरमिति दिक् । शस्त्रादिहतानामपि दिनान्तरे पार्वणमेव । अत एव प्रजापतिः-

संक्रान्तावुपरागे च वर्षोत्तरमहालये ।
निर्वपेदत्र पिण्डाँस्त्रीनिति प्राह प्रजापतिरिति ॥

भ्रात्रादीनां तु महालये एकोद्दिष्टमेव । तथाच सुमन्तुः—

सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥
पित्र्याय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् इति

हेमाद्रौ पुराणवचनम् ।

उपाध्यायगुरुश्वश्रूपितृव्याचार्यमातुलाः ।
श्वशुरभ्रातृतत्पुत्रर्त्विक्शिष्यपोष्यपोपकाः ॥
भगिनीस्वामिदुहितृजामातृभगिनीसुताः

इत्युपक्रम्य

सखिद्रव्यदशिष्याद्यास्तीर्थे चैव महालये ।
एकोद्दिष्टविधानेन पूजनीयाः प्रयत्नत इति ॥

एवंस्थिते

प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् ।
तत्र पार्वणवत्कुर्यादेकोद्दिष्टं त्यजेद्बुधः

इत्यादिवचनानि प्रतिपदोक्तैकोद्दिष्टविध्यभावे द्रष्टव्यानीति सर्वं सुस्थम् ।

अथ क्षयाहोपि श्राद्धकालः । तल्लक्षणमाह व्यासः-

क्षयमासतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तद्विदुरिति ।

तत्र संन्यासिनां क्षयाहे सुतैः पार्वणमेव कर्त्तव्यम् ।

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।

सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदेति—

प्रचेतःस्मरणात् । अमावास्याक्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव ।

अमावास्या क्षयो यस्य प्रेतपक्षेपि वा पुनः ।

पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदाचन इति—

स्मरणात् । अन्यत्र क्षयाहे पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्प एव, उभयविधायकवचनसत्वात् । तथाच यमः—

सपिण्डीकरणादूर्द्ध्वं प्रतिसंवत्सरं सुतैः ।

मातापित्रोः पृथक्कार्यमेकोद्दिष्टं क्षयाहनि इति ॥

शातातपस्तु—

सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।

प्रतिसंवत्सरं श्राद्धं छागलेयोदितो विधिरिति ॥

वंशसमाचाराद्व्यवस्थायां सत्यां व्यवस्थितोयं विकल्पइति विज्ञानेश्वरः । इति श्राद्धकालाः ।

## अथ क्षयाहाज्ञाने निर्णयः ।

मासपक्षयोर्ज्ञाने दिवसस्याज्ञाने तत्पक्षस्यैकादशी ग्राह्या । पक्षाज्ञाने कृष्णैकादशी । अमावास्या मुख्यः पक्षः । तदसंभवे तु शुक्लैकादशी ग्राह्या । तथाच बृहस्पतिः—

न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति ।

मासश्चेत्प्रतिविज्ञातस्तदर्शे स्यान्मृताहनि ॥

मृताहनि यत्कर्त्तव्यन्तदिति शेषः । मरीचिः—

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेहनि

एकादश्यां न कर्त्तव्यं कृष्णपक्षे विशेषत इति ॥

विशेषतइत्युक्त्या शुक्लपक्षेऽनुकल्पतयाभ्यनुज्ञात इति हेमाद्रिः ।

भविष्यत्पुराणे—

दिनमेव विजानाति मासं नैव तु यो नरः ।
मार्गशीर्षे थवा भाद्रे माघे वाथ समाचरेदिति ।
दिनमासयोरुभयोरप्यज्ञाने तु प्रभासखण्डे स्मर्यते
मृताहं यो न जानाति मासं वापि कदाचन ।
तेन कार्यममावास्याश्राद्धं माघेऽथ मार्गके । इति

प्रस्थिते मृते तु विशेषमाह बृहस्पतिः—

दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशेति ॥
प्रास्थानिकयोस्तयोरस्मरणेतु भविष्योत्तरे उक्तम् ।
मृतवार्ताश्रुतेर्ग्राह्यौ तौ पूर्वोक्तक्रमेण त्विति ।

मरणवार्त्ताश्रवणे दिनमासौ ग्राह्यावित्यर्थः । वार्त्ताया अप्यश्रवणे तु जातूकर्ण्यः—

पितरि प्रोषिते यस्य न वार्त्ता नैव चागतिः ।
ऊर्द्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ।
तदादीन्येव सर्वाणि संचरेदिति ॥

पितरीत्यविवक्षितं ग्रहैकत्ववत् । तदादीनिति । तथाच प्रतिकृतिदाहदिवस एव क्षयाहतया ग्राह्यइति भावः ।

अथाशौचादिनिमित्तकप्रतिबन्धे सति श्राद्धकालाः ।

तत्र मासिकश्राद्धे आशौचमासौ आशौचापगमे सति तत्कार्यमिति मुख्यः कल्पः । मुख्यकालप्रत्यासन्नत्वात्तस्य तदुत्तरो दर्शः, कृष्णैकादशी, उत्तरमासान्तर्गततिथिर्वेति त्रयोनुकल्पाः । शुक्लैकादश्यपि मतभेदेन ग्राह्या । तथाच षट्त्रिंशन्मते

मासिकाब्दे तु संप्राप्ते अन्तरा मृतसूतके ।
कार्यं वदन्ति शुद्ध्यन्ते दर्शे चापि विशेषत इति ।

मासिकं चाब्दं चेति समाहारद्वन्द्वः। मरीचिः—

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यां तु कर्त्तव्यं कृष्णपक्षे विशेषत इति ।

विशेषतइत्युक्त्या शुक्लपक्षोपि अनुज्ञातो भवतीति हेमाद्रिः ।

अत्रिः—

तदहश्चेत्प्रदुष्येत केन चित्सूतकादिना ।
सूतकानन्तरं कुर्यात्पुरस्तदहरेव वेति ।

पुरः उत्तरमासे इति तस्मिन्नेवदिने इत्यर्थः । इदं हेमाद्रिमतम् । देवस्वामिमाधवपारिजातकारप्रभृतयस्तु मासिके आशौचेनोपहते सूतकानन्तरम् शुद्धिदिन एव कर्त्तव्यं, पुरस्तदहरेव वेति द्वितीयपक्षस्तु सूतकाद्यतिरिक्तनिमित्तान्तरेण विहते मासिके द्रष्टव्यः, मासिकाब्दे त्विति षट्त्रिंशन्मतवचनं तु अनुमासिकाविषयम्, तस्मादनुमासिके वार्षिके चाशौचोपहते शुद्धिकालप्रभृतयः उत्तरमासस्थतत्तिथिभिन्नाश्चत्वार एव पक्षा मासिके त्वाशौचोपहते शुद्ध्यनन्तरपक्षः, एवं निमित्तान्तरोपहते तु मासिके उत्तरमासस्थतत्तिथिरेवेति व्यवस्थामाहुः । तेषामयमाशयः ।

दैवात्पितॄणां श्राद्धे तु आशौचं जायते यदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयेत

इति ऋष्यशृङ्गवचनम् आशौचमात्रविषयत्वाद्विघ्नान्तरपरतयापि सम्भवतोऽभ्युक्तस्य द्वितीयपक्षस्य स्वविषये बाधकम् । अभ्युक्तद्वितीयपक्षस्तु मासिकपरो न त्वनुमासिकपरोपि ।

एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते ।
अन्यस्मिंस्तत्तिथौ तस्मिन् श्राद्धं कुर्यात् प्रयत्नतः ।

इति देवलवचनेनैकोद्दिष्टपरतानिर्णयात् । अन्यस्मिन् मासान्तरे, तत्तिथौ मृततिथौ, तस्मिन् शुक्ले कृष्णे वा पक्षे इत्यर्थः । मासिकमेकोद्दिष्टम्, अनुमासिकेषु तु पार्वणमिति वक्ष्यते । आशौचान्तराविघ्निते तु मृततिथौ शुक्लकृष्णैकादशीरूपं पक्षत्रयं, मासिके तु तथाभूते उत्तर-

मासस्य तत्तिथिरेवेति उभयमिदं निर्विवादमेव। हारीतः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम्।
अमावास्यादि नियतं माससम्वत्सरादृत इति।

मासः मासिकः, सम्वत्सरः साम्वत्सरिकः, एतदुभयभिन्नं नियतं नित्यम्। अमावास्यादि आमश्राद्धं कर्त्तव्यमित्यर्थः। एतद्भार्यारजोदर्शनकृतविघ्नविषयकम्। तथा चोशनसोक्तम्—

अपत्नीकः प्रवासी च यस्य भार्या रजस्वला।
सिद्धान्नेन न कुर्वीत आमं तस्य विधीयत इति॥

आमश्राद्धासंभवे तु व्यासः—

द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं प्रकुर्वीत यस्य भार्यारजस्वलेति।

मृताहश्राद्धे तु विवदन्ते तत्र।

मृतेऽहनि तु सम्प्राप्ते यस्य भार्या रजस्वला।
श्राद्धं तदा न कर्त्तव्यं कर्त्तव्यं पञ्चमेऽहनि।

इति श्लोकगौतमवचनात्। तथा श्राद्धादौ कर्मणि भार्यया सहाधिकारश्रवणात्तस्यां रजोदर्शनदूषितायामधिकारनिवृत्ते पञ्चमेऽहनि मृताहश्राद्धं कर्त्तव्यम्। भार्यान्तरयुतेन त्वधिकारानपायान्मुख्यकाल एव कर्त्तव्यमिति हेमाद्रिमतम्। अन्ये तु अपुत्रायाः पत्न्या एव पत्युर्मृताहश्राद्धे अधिकाराद्यदा सा रजस्वला स्यात्तदा पञ्चमेऽहनि श्राद्धं कुर्यान्नतु मृतेऽहनीति उदाहृतश्लोकार्थः। तथाच यस्येत्यनेन श्राद्धकर्त्ता न निर्दिश्यते किंतु संप्रदानं यस्य मृतस्य भार्या तदीयं श्राद्धमित्यर्थः। अत्र गौतमश्लोके सांप्रदायिकानामित्थं पाठः।

अपुत्रा तु यदा भार्या संप्राप्ते भर्त्तुराब्दिके।
रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनीति॥

कर्त्तुस्तु पत्न्यां रजस्वलायाम् अमावास्यादिकमामेन हेम्ना वेत्युक्तमेव। मृताहश्राद्धं तु तस्मिन्नेवाह्नि पक्वान्नेन कार्यम्। तथाच लौगाक्षिः—

पुष्पवत्स्वपि दारेषु विदेशस्थोप्यनग्निकः ।
अन्नेनैवाब्दिकं कुर्याद्धेम्ना चामेन वा क्वचित् इति ।
क्वचिदमावास्यादौ । संग्रहकारोप्याह—
विदेशगो वा विगताग्निको वा रजस्वलायामपि धर्मपत्न्याम् ।
श्राद्धं मृताहे विदधीत पाकैर्नामेन हेम्ना नच पञ्चमेऽह्नि इति ॥

तस्मादपुत्रकस्त्रीकर्तृकश्राद्धम्पञ्चमेऽह्नि, अन्यत्र मृताह एवेति सिद्धान्तयन्ति । मतद्वयमप्येतन्माधवनिबन्धे स्थितम् । इह पक्षद्वयेन श्राद्धं तदा न कर्त्तव्यम् इत्यनुवादमात्रं कर्त्तव्यं पञ्चमेऽहनीति तु विधिः, सच श्राद्धविघ्ने सति विहितानाममावास्याकृष्णैकादश्यादिकालानां बाधनार्थः, तेन वचनवैयर्थ्यं न शङ्क्यम् । यत्तु पारिजातादौ—

मासिकानि सपिण्डानि अमावास्या तथाब्दिकम् ।
अन्नेनैव तु कर्त्तव्यं यस्य भार्या रजस्वला ।

इति वचनमुदाहृत्याऽऽमावास्यायामामश्राद्धविधायकवचनानि तु पाकयोग्यस्त्र्यन्तराभावे विषयाणीत्युक्तं त॒ चिन्त्यम् । अन्नाभावे द्विजाभावे इति पृथगुपादाय—

हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वलेति—

प्रघट्टकान्ते उदाहृतेन वचनेन सह विरोधात् । नहि तत्राप्यन्नाभावपरता पृथगुपादानवैयर्थ्यात् । उदाहृतस्मृतिस्तु भार्यान्तरसद्भावविषयकतया कथञ्चिन्नेतव्येति दिक् ।

## अथ श्राद्धनिषेधकालः ।

विष्णुः—
सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि न कर्त्तव्यं ह्यादित्यस्यानुदर्शनामिति ॥
सन्ध्यालक्षणमाह याज्ञवल्क्यः—
उदयात्प्राक्तनी सन्ध्या मुहूर्त्तद्वयमुच्यते ।
सायं त्रिघटिका ज्ञेया ह्यस्तादुपरि भास्वतः इति

स्कान्दे—
उपसंध्यं न कुर्वीत पितृपूजां कथञ्चनेति ।

अथ पिण्डदाननिषेधकालाः ।

बृहत्पराशरः—
युगादिषु मघायां च विषुवत्ययने तथा ।
भरणीषु च कुर्वीत पिण्डनिर्वपनं नहीति ॥

ब्राह्मे—
यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निचित् ।
तेनैकेन तु कर्त्तव्यं श्राद्धं हि विषुवच्च तत् ।
विषुवदिति अपिण्डकमित्यर्थः ।

पाद्मे—
अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
सङ्क्रान्तिषु च कर्त्तव्यं पिण्डनिर्वपनादृते इति ।

ज्योतिःपराशरः—
विवाहे विहिते मासान् त्यजेयुर्द्वादशैव हि ।
सपिण्डाः पिण्डनिर्वापं मौञ्जीबन्धे षडेव हीति ॥

अस्यापवादं स एवाह—
महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्यस्य सापिण्डीकरणे तथा ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपनं सदा इति ।

वृद्धशातातपः—
पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावाचनलोपोऽत्रेति ।
तेन पिण्डनिषेधे स्वधावाचनमपि लुप्यते ॥ इति पिण्डनिषेधकालाः ।
अथ प्रतिनिमित्तं श्राद्धभेदे प्राप्ते तन्त्रेण क्वचिदनुष्ठानं निरूप्यते ।
यत्र निमित्तानां यौगपद्यं संप्रतिपन्नदेवताकत्वं च तत्रासंगृह्णमा-

णविशेषत्वात् न्यायलभ्यमेव तन्त्रं यथा युगादिसंक्रान्त्योः तथाच संक्रान्तिनिमित्तक,ममावास्यानिमित्तकं, व्यतिपातनिमित्तकं चेत्येतानि श्राद्धानि तन्त्रेण करिष्ये इति संकल्प इति हेमाद्रिः। यद्यप्यमायां पिण्डाद्यङ्गं नतु संक्रात्यादौ। तथाच गृह्यमाणविशेषतया तन्त्रानुपपत्तिस्तथापि प्रसङ्गसिद्धिरेवेह बोध्या। पत्न्यर्थमनुष्ठितैः प्रयाजैरिव पुरोडाशे। उक्तं च कालादर्शे—

नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि।
दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः॥
दार्शिकस्य च मन्वादेः सम्पाते श्राद्धकर्मणः।
प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेदिति॥

अस्यार्थः, नित्यश्राद्धदार्शिकश्राद्धयोः संनिपाते दार्शश्राद्धेनैव नित्यश्राद्धसिद्धिः। नच विनिगमकाभावाद्वैपरीत्यमङ्गबहुलत्वेन दर्शस्यावश्यकत्वात्। तथाच मासिकेनैवोदकुम्भश्राद्धसिद्धिः, एवं माघाऽमायां युगादिश्राद्धेनैव दार्शिकसिद्धिः, तथा ग्रहणेऽर्द्धोदयाद्यलभ्ययोगश्राद्धेनैव दार्शिकसिद्धिः। एवं फाल्गुनामायां मन्वादित्वनिमित्तश्राद्धेनैव दार्शिकसिद्धिरिति। ननु दर्शे पिण्डदानमङ्गं युगादौ तदभावोऽङ्गं तथाच विरुद्धाङ्गयोः कथं प्रसङ्गोपीति चेत्, अत्रोच्यते शाबरभाष्यप्रसङ्गे न तौ पशौ करोमीति प्रकरणान्तरस्यापि पर्युदासाभ्युपगमात् प्राभाकरैश्च तथैव समर्थनात् तद्वदिहापि पिण्डेतरदङ्गं नतु पिण्डाभावः। महाभाष्येपि ल्युन्विधौ एवमेव स्थितम्। उक्तं च हरिणा—

भिन्नप्रकरणस्थं च वाक्यं न्याय्यापवादयोः।
एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम्।
द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुरिति।

न्याय्य उत्सर्गः, अलुकं चातुरर्थिकं पाठं चेत्यर्थ इति हेलाराजः। भट्टाचार्यमते तु न तौ पशावित्यादाविवेहापि विकल्पो दुर्वारः। नच दीक्षितो ददातीत्यादाविव विशेषवचनेन सामान्योक्तस्य बाधः,

निषेधेन विधायकमासेरभ्युपेततया तस्य च विषयान्तरालाभेन विकल्पस्य दुर्वारत्वात् । नह्येतदङ्गप्रापकत्वस्याङ्गान्तरं विषयः । अन्यथा न तावित्यत्रापि तथात्वापत्तेरिति । तथा भाष्यरीत्यापि दार्शिकेन युगादेः प्रसङ्गसिद्धिरस्तु नाम युगादिमन्वादिभ्यां त्वपिण्डकाभ्याममायाः प्रसङ्गासिद्धिरुपपद्येवेति कथं कालादर्शादिग्रन्थसामञ्जस्यमिति परिभाव्यतां सूरिभिरिति । प्रकृतमनुसरामः । देवताभेदे तु न तन्त्रम् । तथाच कालादर्शे—

नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि ।
दर्शस्य चोदकुम्भस्य दर्शमासिकयोरपि ॥
युगाद्याब्दिकयोश्चापि मन्वाद्याब्दिकयोरपि ।
मत्याब्दिकस्य चालभ्ययोगेषु विहितस्य च ॥
सम्पाते देवताभेदात् श्राद्धयुग्मं समाचरेदिति ॥

अत्र नित्यदार्शिकयोः षड्देवताकत्वान्मासिकोदकुम्भयोरेकोद्दिष्टत्वात् देवताभेदः । तथा नित्यदार्शिकयुगादिमन्वादिप्रभृतीनामलभ्ययोगनिमित्तानां च षड्देवतात्वात् मत्याब्दिकस्य तु त्रिदैवतात्त्वादेकोद्दिष्टत्वाद्वा देवताभेद इत्याहुः । वस्तुतस्तु एकादशप्रयाजैः पाशुकैः पौरोडाशिकानामिवेहापि अधिकदैवत्येन न्यूनदैवत्यस्य प्रसङ्गसिद्धिर्दुर्वारा, तस्मादुक्तसिद्धान्तस्थैर्यार्थं वचनमेवान्विष्य शरणीकरणीयम् । अतएव जीवन्मातामहवर्गस्यापि दर्शेनासमानदेवतेन मत्याब्दिकस्य तन्त्रप्रसङ्गौ नेत्यवधेयम् । अत्राप्यनियतनिमित्तं नित्यदार्शिकादि प्रथमं कुर्यात् । तथाच कात्यायनोप्याह—

द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात् इति ।

अथ श्राद्धे भोजयितव्या ब्राह्मणाः ।

तत्र पङ्क्तिपावनादयो मुख्या प्रसिद्धा एव । ननु
न सगोत्रे हविर्दद्यात्तथा कन्या तथा हविः ।

इत्यादिभिः सगोत्राणां हविर्दानं निषिद्धमिति चेत् न, अत्र हविः परस्परं पित्र्यद्रव्यपरत्वात्। शिष्यस्यापि वैश्वदेव एव निवेशः, सोदर्याभिहितस्यार्थस्य, एतेनान्तेवासिनोपि व्याख्याता इत्यापस्तम्बेन शिष्येऽतिदेशात्। एतेन शिष्यानपि गुणवतो भोजयेदिति वशिष्ठवचनं वैश्वदेवविषयं ज्ञेयम्। आपस्तम्बः—ब्राह्मणान् भोजयेद् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसंबन्धानिति। योनिसम्बन्धा मातुलादयः। गोत्रसंबन्धाः सगोत्राः। मन्त्रसंबन्धा गुरुशिष्यभूताः। अन्तेवासिनः शिल्पशास्त्राध्येतारः। एतान् विहाय भोजयेत्। अत्र सगोत्रविषये विशेषः अत्रिस्मृतौ—

षड्भ्यस्तु पुरुषेभ्योऽर्वाग्गश्राद्धेयास्तु गोत्रिणः।
षड्भ्यस्तु परतो भोज्याः श्राद्धे स्युर्गोत्रजा अपीति॥

अनुकल्पमाह मनुः—

अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः।
मातामहं मातुलं वा स्वस्त्रियं श्वशुरं गुरुम्।
दौहित्रं विट्पतिं वन्धुमृत्विक्याज्यौ च भोजयेत्।

विट्पतिर्जामाता अतिथिर्वेति माधवादयः। आपस्तम्बः—गुणवदलाभे सोदर्योपि भोजयितव्यः। एतेनान्तेवासिनोपि व्याख्याता इति बौधायनः। तस्मादेवंविधं सपिण्डमप्याशयेदिति। विष्णुपुराणेपि—

पितृव्यं गुरुदौहित्रावृत्विक्स्वस्त्रीयमातुलान्।
पूजयेद्धव्यकव्येन वृद्धानतिथिवान्धवान् इति।

अत्र ऋत्विक्सपिण्डसोदरपितृव्यादयो वैश्वदेवस्थाने नियोक्तव्याः नतु पित्रादिस्थाने। तथाच अत्रिः—

पिता पितामहो भ्राता पुत्रो वाथ सपिण्डकः।
न परस्परमर्च्याः स्युः श्राद्धादौ ऋत्विजस्तथा।
ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणा द्विजैः।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः इति।

कौर्म्मे—

श्वो भविष्यति हि श्राद्धं पूर्वेद्युरभिपूजयेत् ।
असम्भवे परेद्युर्वा यथोक्तैर्लक्षणैर्युतानिति ।

देवलः—

श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान् निमन्त्रयेत् ।
निरामिषं सकृद्भुक्त्वा सर्वभुक्तजने गृहे ।
असम्भवे परेद्युर्वा ब्राह्मणांस्तान् निमन्त्रयेत् इति ।

वशिष्ठः—

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत्तु समृद्धोपि विस्तरं तु विवर्जयेदिति ।

विस्तरं नवावरान्भोजयेदयुजो वा यथोत्साहमिति गौतमोक्तम् । तस्य त्वत्यन्तसमृद्धोधिकारीत्यर्थः ।

याज्ञवल्क्यः—

द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकमिति ।

यत्तु शङ्खवचनम्—

भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनम् इति ।

तत्तु ब्राह्मणान्तरालाभविषयकम् ।

तत्र विशेषमाह वशिष्ठः—

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ।
देवतायतने कृत्वा यथाविधि निवेदयेत् ।
प्राश्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे इति ।

तदेतदुक्तं मूले—

विप्राभावे वृथा न स्याद्दद्यादग्नौ जलेपि चेति ।

मात्स्ये—

पठन्निमन्त्र्यनियमान् श्रावयेत्पैतृकान् बुधान् ।
अक्रोधनैः शौचपरैः शततं ब्रह्मचारिभिः ।
भवितव्यं भवाद्भिश्च मया च श्राद्धकारिणेति ॥
प्रचेताः—
श्राद्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् ।
श्राद्धकर्त्ता न कुर्वीत दन्तप्रक्षालनं बुधः ।

## अथ श्राद्धीयद्रव्याणि ।

अत्रिः—
अगोधूमं च यच्छ्राद्धं कृतमप्यकृतं भवेदिति ।
वायवीये—
नागरं चात्र वै देयं दीर्घमूलकमेव चेति ।
हिङ्गुस्तु विहितप्रातिषिद्धत्वाद्वैकल्पिकः । तथाचादित्यपुराणे—
मधुकं रामठं चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथेति ।
त्रपुसम् अम्लं दधि ।
व्यासः—
अश्राद्धीयानि धान्यानि कोद्रवाः पुलकास्तथा ।
हिङ्गुद्रव्येषु शाकेषु कालानलशुभास्तथा इति ।
शुभाख्यः शाकविशेष इति माधवः ।
मूले—
कोद्रवान् राजमाषांश्च कुलत्थान् वरकाँस्तथा ।
निष्पावाँश्च विशेषेण पञ्चैतांस्तु विवर्जयेत् ।
यावनालानपि तथा वर्जयन्ति विपश्चित इति
वरकान् नवमुद्गान् इति माधवः ।
अत्र निष्पावशब्दः कृष्णनिष्पावपरः । निष्पावाश्चात्र शोभना इति ।
मार्कण्डेयपुराणे— कृष्णेतरनिष्पावपरः ॥

कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणि ।

इति वचनान्तरादिति भावः। चणका अपि विहितप्रतिषिद्धाः ।

तथाच मरीचिः—

कुलत्थाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवा इति ।

मार्कण्डेयः—

गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि ।

श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः ।

देवलः—

कण्डूरां श्वेतवृन्ताकं कूष्माण्डं च विवर्जयेदिति ।

वृन्ताकं नालिकापोतं कुसुम्भाश्मन्तकानि चेति पैठीनसीस्मृतौ। वृन्ताकसामान्यग्रहणमपि श्वेतवृन्ताकविषयकमिति माधवः । भविष्यपुराणम्—

लशुनं गृञ्जनं चैव पलाण्डुकवलानि च ।

वृन्ताकनालिकालावुजातीयाजातिदूषितमिति ।

श्वेतकन्दविशेषः गृञ्जनम्

लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम् ।

करण्यश्च पलाण्डुश्च लताकश्चापरारिका ।

गृञ्जनं यवनेष्टश्च पलाण्डोर्दशजातय इति ।

सुश्रुतेनोक्तत्वादिति श्राद्धप्रकरणे माधवः। प्रायश्चित्तप्रकरणे तु गृञ्जनं पत्रविशेषः। यदीयं चूर्णं गायकाः कण्ठशुद्ध्यर्थं भक्षयन्ति। विशेषश्च मदाद्यर्थो मूलविशेषो वा गाजरापरपर्याय इति द्वेधा माधवेनैव व्याख्यातम्। विनिगमकं त्विह परिभावनीयम्। हारीतः—न वटप्लक्षोदुम्बर दधित्थनीपमातुलिङ्गानि भक्षयेदिति । दधित्थः कपित्थः। निमन्त्रितेभ्यो ब्राह्मणेभ्योऽपरेऽहनि यद्देयं तदाह कात्यायनः—

तैलमुद्वर्तनं स्नानं दन्तधावनमेव च ।

कृत्तरोमनखेभ्यस्तु दद्यात्तेभ्योऽपरेऽहनीति ।

स्नानं स्नानसाधनम्। करणे ल्युट्। एवं दन्तधावनमित्यत्रापि। तैलमभ्यङ्गम्। निषेधतिथिषु तु आमलकोदकं देयम्। तथाच मार्कण्डेयः-

अह्नः षट्सु मुहूर्त्तेषु गतेष्वथ च तान् द्विजान्।
प्रत्येकं प्रेषयेत्प्रेष्यान् आदायामलकोदकमिति।

एतदमावास्यातिरिक्तविषयकम्। "धात्रीफलैरमायां न स्नाया" दिति स्मृतेः। यत्तु प्रचेतोवचनम्-

श्राद्धभुग्भ्यो नखश्मश्रुच्छेदनं नतु कारयेदिति-

तन्निषिद्धातिथिविषयकमिति माधवः। आपस्तम्बः-

अटव्यां ये समुत्पन्ना अकृष्टफलिनस्तथा।
ते वै श्राद्धे पवित्राः स्युस्तिला नतु सितास्तिलाः।

तथाच सत्यव्रतः-

जर्तिलास्तु तिलाः प्रोक्ताः कृष्णवर्णा वने भवाः इति।
जर्तिलानामलाभे तु ग्राम्यास्तिला ग्राह्याः॥

कुतपश्चासने दद्यादिति मनुः। कुतपो नेपालकम्बलः।

मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः।
रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः।
अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः।

इति स्मृतेः। भोजनपात्राणि तु पलाशपत्ररूपाण्येव प्रशस्तानि नत्वन्यपर्णरूपाणि। अर्घ्यपात्रे तु न नियमः। तथाचात्रिः-

पलाशेभ्यो विना न स्युः पर्णपात्राणि भोजने इति॥

कदलीपत्रन्तु विशिष्य निषेधत्यङ्गिराः-न जातीकुसुमानां न कदलीपत्राणामिति। अत्र जात्यो विहितनिषिद्धत्वाद्वैकल्पिक्यइति माधवः। तत्र निषेधः उक्त एव। विधिस्तु मार्कण्डेयपुराणे-

जात्यश्च सर्वा दातव्या मल्लिका श्वेतयूथिका।
जलोद्भवानि सर्वाणि कुसुमानि च चम्पकमिति॥...

ईदृग्विषये वाक्यद्वयवैकल्पोद्धारश्चिन्त्यः । देशाचाराद्यवस्थायां सत्यां तु साफल्यं सुलभम् । होलाधिकरणोल्लङ्घनं त्वस्त्येव । विहितोदासीनाभ्यां सह तुल्यकक्षतालाभः फलमित्येके । उभयालाभोऽभ्यनुज्ञातत्वात्फलमित्यन्ये ।

शङ्खः—

उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च ।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि चेति ॥

तथा ।

कौशेयं क्षौमकार्पासं दुकूलमहतं तथा ।
श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलान् ।

एवं दर्भादिमेक्षणान्तन्द्रव्यमुपकल्प्य स्नायात् । तथाच यमः—

ततः स्नात्वा निवृत्तो यः प्रत्युत्थाय कृताञ्जलिः ।
पाद्यमाचमनीयं च सम्प्रयच्छेद्यथाक्रममिति ॥

मात्स्ये—

भवनस्याग्रतो भुवि ।
गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले इति ।

गोमयसहितेन गोमूत्रेण मण्डले कार्ये इति शेषः ।

शम्भुः—

उदक्प्लवमुदीच्यं स्याद्दक्षिणं दक्षिणाप्लवमिति ।

उदीच्यं वैश्वदेविकं मण्डलम् उदक्प्रवणम् । दक्षिणं पित्र्यं मण्डलं दक्षिणाप्रवणं कुर्यात् । अत्र मण्डलकरणात्प्रभृति आश्राद्धसमाप्तेर्वैश्वदेविकं कर्म प्रदक्षिणं यज्ञोपवीतिना कार्यम् । पित्र्यम् अपसव्यं प्राचीनावीतिना । तथाच मनुः—

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात् कार्यं विधिवद्दर्भपाणिनेति ॥

आनिधनादासमाप्तेः । कात्यायनः—

दक्षिणं पातयेज्जानु देवान् परिचरन् सदा ।
पातयेदितरज्जानु पित्र्यं परिचरन् सदेति ।
शातातपः—
उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।
बौधायनः—
प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् ।
देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताइति ।
स्मृत्यर्थसारे—
अक्षय्यासनयोः षष्ठी द्वितीयाऽऽवाहने तथा ।
अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृता इति ।
यद्वा चतुर्थ्येव सर्वत्र प्रयोज्या आवाहनवर्जमिति ।
मण्डलकरणानन्तरं कर्त्तव्यमाह शंभुः—
उत्तरे ऽक्षतसंयुक्तान् पूर्वाग्रान् विन्यसेत्कुशान् ।
दक्षिणे दक्षिणाग्रांस्तु सतिलान् विन्यसेद् बुध इति ।
तथा ।
पाद्यं चैव तथा चाऽऽर्घ्यं देवमादौ प्रयोजयेत् ।
शन्नोदेवीतिमन्त्रेण पात्रं चैव प्रदापयेत् ।
मात्स्ये—
नामगोत्रं पितॄणां तु प्रापकं हव्यकव्ययोरिति ।
सुमन्तुः—
दर्भपाणिर्द्धिराचम्य लघुवासा जितेन्द्रियः ।
परिश्रिते शुचौ देशे गोमयेनोपलेपिते ॥
दक्षिणाप्रवणे सम्यगाचान्तान् प्रयतान् शुचीन् ।
आसनेषु सदर्भेषु विविक्तेषूपवेशयेद् इति ।
आदित्यपुराणे—
विप्रौ द्वौ प्राङ्मुखौ तेभ्यो द्वौ तु पूर्वं निवेशयेत् ।

उत्तराभिमुखान् विप्रांस्त्रीन् पितृभ्यश्च सर्वदेति ॥

मरीचिः—

तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।
कुर्वीत भक्तिसम्पन्नः तन्त्रं वा वैश्वदेविकमिति ॥

अत्र द्वयोरपि श्राद्धयोर्वैश्वदेवकर्मणस्तन्त्रावृत्तिविधानात् एकप्रयोगता, भिन्नप्रयोगता वातश्चैकाधिकारात् पूर्वसाधनता, भिन्नसाधनता वेति माधवः ।

तथा उपविष्टानां ब्राह्मणानां नियमाः स्मर्यन्ते ।
पवित्रपाणयः सर्वे ते च मौनव्रतान्विता इति ।

यमः—

ब्रह्मोद्याश्च कथाः कुर्युः पितृणामेतदीप्सितमिति ॥

स एव ।

भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेदिति ॥

ब्राह्मणोपवेशनानन्तरं कृत्यं पुराणेऽभिहितम् ।
श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
ताभ्यां चैव नमस्कृत्य ततः श्राद्धं प्रवर्त्तयेत् ।
उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरा स्थितौ
सप्रश्रयश्चोपविष्टान् सर्वान् पृच्छेद् द्विजोत्तमान् ॥

श्राद्धं करिष्ये इति पृच्छेदित्यर्थः । ततः कुरुष्वेत्यभ्यनुज्ञातो देवताभ्यश्चेति त्रिः पठेत् । उक्तञ्च ब्रह्माण्डे—

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥
आद्येऽवसाने श्राद्धस्य त्रिरावृत्तं जपेत्सदेति ।

ततः कर्त्तव्यमुक्तं निगमे—अपहता इति तिलान् विकिरेदिति । ततो ब्राह्मणहस्ते उदकं दत्वा आसनेषु दर्भासनं दद्यात् ।

तथाच याज्ञवल्क्यः—

पाणिप्रक्षालनं दत्वा विष्टरार्थं कुशानपि इति ।

पुराणे—

आसने चासनं दद्याद्वामे वा दक्षिणेपि वा ।

पितृकर्मणि वामे च दैवे कर्माणि दक्षिणे इति ।

दैवे आसनार्थं सयवा दर्भा इति विशेषः । उक्तं च काठके—देवानां सयवा दर्भा इति । अत्र संग्रहकारः—ततः पुनरपो दत्वा निमन्त्रयेत् दैवे क्षणः क्रियतां ततस्तथेति विप्रो ब्रूयात् प्राप्नोतु भवानिति कर्त्ता पुनर्ब्रूयात् प्राप्नवानीति विप्रः पुनर्ब्रूयात् इति । निमन्त्रणम् चाङ्गुष्ठव्यतिरिक्तं हस्तं गृहीत्वा कर्त्तव्यम् । तथाच पुराणे—

निरङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेत् इति ।

गृहीत्वा इत्यस्यानन्तरं निमन्त्र्येति शेष इति माधवः ।

आवाहनेतिकर्त्तव्यतामाह यमः—

यवहस्तस्ततो देवान् पृष्ट्वा चावाहनं प्रति ।

आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ।

विश्वेदेवाः शृणुतेति मन्त्रं जप्त्वा ततोऽक्षतान् ।

ओषधय इति मन्त्रेण विकिरेत्तु प्रदक्षिणम् ।

पादादिमस्तकान्तमक्षतानारोपयेदित्यर्थ इति माधवः । विश्वेदेवाश्च पार्वणे पुरूरवार्द्रवसंज्ञकाः । तथाच शङ्खः

इष्टिश्राद्धे क्रतुदक्षौ संकीर्त्यौ वैश्वदेविके ।

नान्दीमुखे सत्यवसू काम्ये तु धुरिलोचनौ ॥

पुरूरवार्द्रवा चैव पार्वणे समुदाहृतौ ।

नैमित्तिके कालकामावेवं सर्वत्र कीर्त्तयेदिति ॥

इष्टिश्राद्धं, कर्माङ्गश्राद्धं तच्च पारस्करेण दर्शितम्—

निषेककाले सोमे च सीमन्तोन्नयने तथा ।

ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतमिति ॥

वृद्धिवादित्यनेन वृद्धिश्राद्धात्कर्माङ्गश्राद्धमन्यदिति ज्ञायते नान्दीमुखं वृद्धिश्राद्धम्, तत्स्वरूपमाह वृद्धवसिष्ठः—

पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतमिति ॥

आदिशब्देनान्नप्राशनचूडाकरणादिसंस्कारा गृह्यन्ते नतु गर्भाधान, पुंसवन, सीमन्तोन्नयनानि तत्र क्रियमाणस्यकर्माङ्गश्राद्धत्वेन पृथगुदाहृतत्वात् । पार्वणममावास्याश्राद्धम् । नैमित्तिकं सपिण्डीकरणम् । यद्यपि—

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।

इति परिभाषितं तथापि तदप्यदैवं कर्त्तव्यमिति वाक्यशेषेण तत्र वैश्वदेवहीनतावगमादिह नैमित्तिकशब्देन एकोद्दिष्टयुक्तं सापिण्डीकरणं लक्ष्यते इति माधवादयः । विश्वेदेवानामन्त्र्य अर्घ्यपात्रद्वयासादनानि कुर्यात् । तथाच याज्ञवल्क्यः—

यवैरन्ववकीर्याथ भाजने सपवित्रके ।

शन्नोदेव्या पयः क्षिप्त्वा यवोसीति यवाँस्तथेति ॥

मात्स्ये—

विश्वान् देवान् यवैः पुष्पैरभ्यर्च्यासनपूर्वकैः ।

पूरयेत्पात्रयुग्मन्तु स्थाप्य दर्भपवित्रकइति ॥

कात्यायनः—सौवर्णराजतौदुम्बरखड्गमाणिमयानां पात्राणामन्यतमेषु यानि वा विद्यन्ते पत्रपुटके वेति निषेवति कांस्यादीनि इत्यर्थः । राजतं तु पितृपात्रविषयकम् । तदुक्तं रजतमधिकृत्य

शिवनेत्रोद्भवं यस्मादतस्तत्पितृवल्लभम् ।

अमङ्गलं तद्यत्नेन देवकार्येषु वर्जितमिति ।

अर्घ्यपवित्रं च प्रतिपात्रं भेदेन कार्यमित्याहुर्मूले—

द्वे द्वे शलाके देवानां पात्रे कृत्वा पयः क्षिपेत् ।

पवित्रकरणे कर्त्तव्यतामाह याज्ञवल्क्यः—

पवित्रेस्थ इतिमन्त्रेण द्वे पवित्रे च कारयेत् ।

अन्तर्गर्भे कुशच्छिन्ने कोशे प्रादेशसंमिते इति ।

कुशमन्तरीकृत्य छिन्ने नतु काष्ठेन लोहेन वा । अनन्तरम् स्वाहार्घ्या इति मन्त्रेण देवतार्थे ब्राह्मणसमीपेऽर्घ्यपात्रं स्थापयेत् । तथा च गार्ग्यः—स्वाहेति चैव देवानामिति । अर्घ्यपात्रस्थापनेऽयं मन्त्रो नत्वर्घ्यदाने इति माधवादयः ।

याज्ञवल्क्यः—

यादिव्या इति मन्त्रेण हस्ते अर्घ्यं विनिक्षिपेत् इति ।

गार्ग्यः—

दत्वा हस्ते पवित्रं तु सम्पूज्यार्घ्यं विनिक्षिपेत् इति ।

तत उदकपूर्वकं गन्धादि दद्यात् । तथाच याज्ञवल्क्यः—

दत्वोदकं गन्धमाल्यं धूपदामं सदीपकमिति ॥

अत्र गन्धादिकमाच्छादनस्याप्युपलक्षणमिति माधवादयः । तदेवमासनप्रभृत्याच्छादनपर्यन्तं वैश्वदेविकार्चनं काण्डानुसमयेन कृत्वा आसनाद्याच्छादनपर्यन्तं पित्रर्चनं प्राचीनावीत्यप्रदक्षिणं दक्षिणामुखः कुर्यात् । तथाच याज्ञवल्क्यः—

अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणामिति ।

अत्र हि अपसव्यं ततः कृत्वेति वैश्वदेविकासनादिपदार्थकाण्डादूर्द्ध्वं पित्रर्चनविधानात् काण्डानुसमयो लभ्यत इति विज्ञानेश्वरमाधवादयः । आसनादौ विशेषमाह—

द्विगुणान् तु कुशान् दत्वा ह्युशन्तस्त्वेत्यृचा पितॄन् ।
आवाह्य तदनुज्ञातो जपेदायन्तुनस्ततः ॥
यवार्थस्तु तिलैः कार्यः कुर्यादर्घ्यादि पूर्ववत् ।
दत्वार्घ्यं संस्रवाँस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति न्युब्जपात्रं करोत्यध इति ।

द्विगुणान् द्विगुणभुग्नान् सतिलानासनार्थं दद्यात् । तदुक्तं काठके—पितॄणां द्विगुणैस्तु तैरिति । आसनदानात्पूर्वं पश्चाचोदकं दद्यात् । तथाचा

श्वलायनः—अपः प्रदाय दर्भान् द्विगुणभुग्नानासनं प्रदायाऽपः प्रदा-येति। ततः श्राद्धे क्षणः क्रियतामिति पूर्ववत्कुशं दत्वा पितॄनावाहयि-ष्ये इति ब्राह्मणान् पृष्ट्वा आवाहयेति तैरनुज्ञातः उशन्तस्त्वेति मन्त्रेण आवाह्य नमो वः पितर इति तिलान् मस्तकादिदक्षिणपादान्तम् अवकीर्य आयन्तु न इतिमन्त्रेणोपतिष्ठेत। तथाच प्रचेताः—

शिरःप्रभृतिपादान्तं नमोव इति पैतृके इति।

मूले च—

विश्वेदेवांस्तु पादादि शिरआदि पितामहान्।
अर्घ्यपात्रं विधायैव ब्राह्मणान् पूजयेत्ततइति।

उपस्थानानन्तरं कृत्यमुक्तं पुराणे—

जपेदायन्तुन इति मन्त्रं सम्यगशेपतः।
रक्षार्थं पितृसत्रस्य त्रिःकृत्वः सर्वतो दिशम्।
तिलांस्तु प्रक्षिपन्मन्त्रमुच्चार्यापहताइति।

ततोऽर्घ्याद्याच्छादनान्तं पूर्ववत् कुर्यात्। अत्रार्घ्यपात्रासादनादौ विशेपो विष्णुना दर्शितः। दक्षिणाग्रेषु दक्षिणापवर्गेषु चमसेषु च त्रिष्वप आसिञ्चेच्छन्नोदेवीरिति। अयमर्थः, दक्षिणाग्रेषु दर्भेषु दक्षिणाप-वर्गतयाऽऽसादितेषु पवित्रान्तर्हितेषु चमसेषु त्रिष्वर्घ्यपात्रेषु शन्नोदेवीर-भिष्टय इति मन्त्रेण प्रतिपात्रेण प्रतिपात्रमप आसिञ्चेदिति। शौनकः—पात्रेषु दर्भान्तर्हितेषु अपः प्रदाय शन्नोदेवीरभिष्टय इत्यनुमन्त्रितासु तिलानावपति तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄंल्लोकान्पृणाहि नः स्वधानम इति। अत्र च पित्रा-दीनां त्रयाणामेकैकस्थानेऽनेकब्राह्मणनिमन्त्रणेपि त्रीण्येवार्घ्यपात्राणि नतु ब्राह्मणसंख्यया। तथाच बैजवापः—

स्नात्वा पितॄणां त्रीण्येव कुर्यात्पात्राणि धर्मवित्।
एकस्मिन् वा बहुषु वा ब्राह्मणेषु यथाविधीति॥

तिलानर्घोदकेषु क्षिप्त्वेत्यर्थः। अर्घ्यपवित्रं तु अयुग्मसंख्यया

कार्यमित्याहुर्मूले—

तिस्रास्तिस्रश्शलाकाः स्युः पितृपात्रेषु पार्वणे इति ।

तिलप्रक्षेपानन्तरं गन्धं पुष्पादीनि प्रक्षिपेत् । तदुक्तं ब्रह्मपुराणे—

अर्घ्या गन्धैश्च पुष्पैश्च ताः प्रपूज्याश्च मन्त्रवत् इति ।

या अर्घार्हास्ता आपः पूज्या इत्यर्थः । अनन्तरं कर्त्तव्यमाह शौनकः— ताःप्रतिग्राहयिष्यन्स्वधार्घ्या इति । ता आपो ब्राह्मणैः प्रतिग्राहयिष्यन् स्वधार्घ्या इति मन्त्रेण स्थापयेदित्यर्थः । पैठीनसिः— ततो ब्राह्मणहस्तेषु उदकपूर्वकमर्घोदकं ददाति या दिव्या इत्युक्त्वाऽसावेतत्ते अर्घोदकमिति । अप उपस्पृश्यैवमेवेतरयोरिति । एवमर्घ्यं दत्त्वा तेषामर्घ्योदकानां संस्रावान् विप्रहस्तेभ्यः पात्रेषु गलितान् पितृपात्रे संगृह्य तत्पात्रं न्युब्जमधोमुखं पितृभ्यः स्थानमसीत्यधः कुर्याद् । भूमौ निदध्यादित्यर्थः । न्युब्जकरणानन्तरं कर्त्तव्यमाह बैजवापः—

तस्योपरि कुशान् दत्त्वा प्रदद्याद्दैवपूर्वकम् ।

गन्धपुष्पाणि धूपं च दीपवस्त्रोपवीतकम् ॥

दैवपूर्वकमित्यनेन पदार्थानुसमयो लभ्यते सच याज्ञवल्क्योक्तेन काण्डानुसमयेन सह विकल्प्यत इति माधवः । अत एव स्मृत्यर्थसारेपि—आसनादीनामाच्छादनान्तानां काण्डानुसमयः, पदार्थानुसमयो वेति पक्षद्वयमप्युक्तम् । ततोऽग्नौकरणं कुर्यात् ।

तदनुष्ठानप्रकारमाह याज्ञवल्क्यः—

अग्नौ करिष्यन्नादाय पृच्छेदन्नं घृतप्लुतम् ।

कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ॥

हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।

यथालाभोपपन्नेषु रौप्येषु तु विशेषत इति ॥

अग्नौकरिष्यन् घृतप्लुतमन्नमादायाग्नौ करिष्ये इति ब्राह्मणान् पृच्छेत् । घृतप्लुतेन शाकादेर्निरासः । ततः कुरुष्वेति तैरनुज्ञातः सन्निधावुपसमाधाय मेक्षणेनावदाय सोमाय पितृमते स्वाहा नमः, अग्नये काव्य-

वाहनाय स्वाहा नम इति पिण्डपितृयज्ञावथानेनाग्नौ जुहुयात्। ततो मेक्षणं हुत्वा हुतशेषं पितृभाजनेषु दद्यान्न तु वैश्वदेवभाजनेषु । रौप्येष्विति-लिङ्गात्, माधवाद्युदाहृतवचनाच्च । आहिताग्निः सर्वाधानी तु दक्षिणाग्नौ जुहुयात् । तथाच मार्कण्डेयः—

आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः ।

अनाहिताग्निस्त्वौपसदे, अग्न्यभावे द्विजे,ऽप्सु ॥वेति

अर्धाधानपक्षे तु औपासनाग्नावेवाग्नौकरणहोमः । अग्न्यभावे तु पाणावेव होमः पाणिहोमे इध्ममेक्षणविप्राभ्यनुज्ञा न सन्ति । पित्र्यविप्रपाणिं परिसमुह्य पर्युक्ष्य वामेनोपस्तीर्य दक्षिणेनावदाय जुहुयादिति स्मृत्यर्थसारे । स्मृतिचन्द्रिकाकारस्त्वाह—विप्राभ्यनुज्ञा नास्तीत्य शुद्धम्। अग्निश्चेदाज्यं गृहीत्वा भवत्स्वेवाग्नौकरणमिति पूर्ववत्तथास्त्विति शौनकगृह्यविरोधात् मेक्षणाभावोक्तिरपि मेक्षणकार्ये अन्यविध्यभावादयुक्ता परिसमूहनपर्युक्षणसद्भावोक्तिश्चायुक्ता पांसुनिरसनलक्षणस्य दृष्टकार्यस्य लोपाद् नियमादृष्टमात्रस्यात्राप्रयोजकत्वात् इति । हेमाद्रिस्तु उक्तस्मृत्यर्थसारसंग्रहे स्मृतिचान्द्रिकाकारोक्तं तत्खण्डनं चोपन्यस्य पर्युक्ष्य दर्भानास्तीर्येति यमवचनेन पर्युक्षणदर्भानास्तीर्येति पाठान्तरं परिस्तरणसमूहनादिपरिसंख्यापरं कर्कग्रन्थं चोपन्यस्य यदत्र युक्तं तद्ग्राह्यमित्युपसंजहार। पाणौ हुतस्य पृथग्ग्रासं प्रतिषेधति गृह्यकारः—

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः ।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥
यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यत इति ॥

स्मृत्यर्थसारे तु—सर्वाधानी दक्षिणाग्नौ जुहुयाद्विप्रपाणौ वेति विकल्पमभिधाय तेन पाणिहुतं तदैव प्राश्याऽऽचम्योपविशेत्। अथवा भाजने क्षिप्त्वाऽऽचम्योपविशेत् । विधुरादिभिरग्निहीनैर्हुतं तु पूर्वं नाश्नीयात् भोजनकाल एवाश्नीयात् । त्यक्ताग्निहुतं तु नैवाश्नीया-

दिति स्थितम् ।

अथ परिवेषणम् ।

याज्ञवल्क्यः—

दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमंत्रणम् ।
कृत्वेदंविष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥

मनुः—

विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति वै क्रमात् ।

अनन्तरं विश्वेभ्यो देवेभ्य इदमन्नं परिविष्टं परिवेष्यमाणं चातृप्तेरिति यवोदकेन निवेद्य तथा पित्र्येऽमुकगोत्रायामुकशर्मणे इदमन्नमिति तिलोदकमदानेन निवेद्य एवं पितामहाय प्रपितामहाय च निवेद्यापोशानं दत्त्वा सव्याहृतिकां गायत्रीं मधुवाताइति त्र्यृचं च मध्विति त्रिवारं जप्त्वा यथासुखं जुषध्वमिति ब्रूयात् । तथाच स्मर्यते—

संकल्प्य पितृदेवेभ्यः सावित्रीमधुमज्जपः ।
श्राद्धं निवेद्यापोशानं जुषध्वैपोथ भोजनम् ।

तथा

गायत्रीं त्रिः सकृद्वापि जपेद् व्याहृतिपूर्विकाम् ।
मधुवाताइति त्र्यृचं मध्वित्येतत्त्रिकं तथा इति ।

याज्ञवल्क्यः—

सव्याहृतिकगायत्रीं मधुवाता इति त्र्यृचम् ।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेपि वाग्यताः ॥
अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ।
आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं ततः ॥
अन्नमादाय तृप्ताः स्थः शेषं चैवानुमान्य च ।
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृदिति ॥

आतृप्तेरिति तृप्त्यनन्तरमपि किंचिद्देयम् । तथाच शौनकः— सृष्टं दत्तमृधुकमिति । सृष्टं प्रभुतं दत्तं ऋद्धिकरमिति वृत्तिकारः तच्च

दासवर्गतृप्त्यर्थम् । तथाच मनुः—

उच्छेपणं भूमिगतं जिह्मस्य च शठस्य च ।
दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षत इति ।

तथा आतृप्तेः पवित्राणि पुरुषसूक्तपवमानादीनि जप्त्वा तृप्तान् कृत्वा पूर्वोक्तं सव्याहृतिगायत्र्यादिकं जपेत् । अनन्तरं सर्ववर्णभक्तमादाय तृप्ताः स्थेति तान् पृष्ट्वा तृप्ताः स्म इति तैः प्रत्युक्तः शेषमन्नमस्ति किं क्रियतामिति पृष्ट्वा इष्टैः सह भुज्यतामिति अनुज्ञां प्राप्य तदन्नं पितृस्थानब्राह्मणस्य पुरस्तादुच्छिष्टसंनिधौ दक्षिणाग्रेषु दर्भेषु तिलोदकप्रक्षेपपूर्वकं ये अग्निदग्धाइत्यनयाऽवक्षिपेत् । पुनस्तिलोदकं निक्षिपेत् । ततो ब्राह्मणहस्ते गण्डूषार्थं सकृत्सकृदपो दद्यात् । तदनन्तरं कर्त्तव्यं सएवाह

सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान् दद्याद्वै पितृयज्ञवत् ॥
मातामहानामप्येवं दद्यादाचमनं ततः ।
स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव चेति ॥

पिण्डपितृयज्ञकल्पातिदेशेन चरुश्रपणसद्भावेऽग्नौकरणशिष्टचरुशेषेण सह सर्वमन्नमुपादायाग्निसन्निधौ पिण्डं दद्यात् तदभावे ब्राह्मणार्थं सार्ववर्णिकमन्नमुपादाय उच्छिष्टसंनिधौ पितृयज्ञकल्पेन पिण्डान् दद्यात् । मातामहानामप्येवमेव वैश्वदेवावाहनादिपिण्डप्रदानान्तं कर्म कृत्वा ब्राह्मणानामाचमनं दद्यात् ततः स्वस्तीति ब्रूतेति ब्राह्मणान् स्वस्ति वाचयेत् । तैश्च स्वस्तीत्युक्ते अक्षय्यमस्तु ब्रूतेति ब्राह्मणहस्तेपूदकं देयम् । अस्त्वक्षय्यमिति ते ब्रूयुः । ततः कर्त्तव्यं स एवाह—

दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥
ब्रूयुः अस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ।
विश्वेदेवाश्च प्रीयन्तां विप्रैः प्रोक्त इदं जपेत् ॥
दातारो नोभिवर्द्धन्तां वेदाः सन्ततिरेव च ।

श्रद्धा च नो मा व्यगमत् बहु देयं च नोऽस्त्विति ॥
इत्युक्त्वोक्त्वा प्रिया वाचः प्रणिपत्य विसर्जयेत् ।
वाजेवाजे इति प्रीतः पितृपूर्वं विसर्जयेदिति ।

दक्षिणायां विशेषमाह पारस्करः—हिरण्यं विश्वेभ्यो देवेभ्यो, रजतं पितृभ्य इति । तथा

एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि ।
भक्ष्यभोज्यं समं देयं दक्षिणां त्वनुसारत इति ॥

निमन्त्रितब्राह्मणानां विद्यादिगुणतारतम्येनेत्यर्थः । पित्र्ये दक्षिणादानं प्राचीनावीतिना कार्यम् । तथाच जमदग्निः—अपसव्यन्तु तत्रापीति । तत्रापि दक्षिणादानेपीत्यर्थः ।

यत्तु तेनैवोक्तम्—

अपसव्यं कर्म सर्वं दक्षिणादानवर्जितम् इति ।

तद्ब्राह्मणोद्देशेन दक्षिणादानविषयकम् । सच पक्षो देवलेन दर्शितः ।

आचान्तेभ्यो द्विजेभ्यस्तु प्रदद्यादथ दक्षिणामिति ।

तत्र क्रमं स एवाह—

दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोरिति ।

द्वयोर्द्वाभ्यां वैश्वदेविकब्राह्मणाभ्यामित्यर्थः । तदेवं यथा रजतहिरण्यादिदक्षिणां दत्त्वा स्वधां वाचयिष्ये इत्युक्त्वा तैर्ब्राह्मणैर्वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः पित्रादिभ्यो मातामहादिभ्यश्च स्वधोच्यतामिति स्वधाकारमुदाहरेत् । ततोऽस्तु स्वधेति ब्राह्मणा ब्रूयुः । ततो भूमावुदकं सिक्त्वा विश्वे देवाः प्रीयन्तामिति ब्रूयात् । ब्राह्मणैश्च प्रीयन्तां विश्वेदेवा इत्युक्ते दातार इति मन्त्रं जपेत् ततः पितॄणां न्युब्जं पात्रं उत्तानं कृत्वा वाजेवाजे इति मन्त्रेण पितृपूर्वं विसर्जयेत् । तथाच स एवाह—

यस्मिंस्ते संस्रवाः पूर्वं पितृपात्रे निवेशिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेद् इति

पिण्डप्रमाणं त्वाह संग्रहकारः ।

एकोद्दिष्टे सपिण्डे च कपित्थं तु विधीयते ।
नारिकेलप्रमाणं तु प्रत्यब्दे मासिके तथा ॥
तीर्थे च दर्शे संप्राप्ते कुक्कुटाण्डप्रमाणतः ।
महालये गयाश्राद्धे कुर्यादामलकोपममिति ॥

वायुपुराणे-

शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ।
उद्धरेत्सप्तगोत्राणि कुलमेकोत्तरं शतम् ॥

सप्तगोत्राणि तु स्मृत्यन्तरे-

पिता माता च भार्या च भगिनी दुहिता तथा
पितृमातृष्वसा चैषां सप्तगोत्राणि वै विदुरिति ॥

अत्र मातृशब्देन मातामहगोत्रं, भार्यागोत्रं श्वशुरगोत्रं, भगिनीगोत्रं दुहितृपितृष्वसॄणां गोत्राणि यत्कुले ता दत्तास्तदीयानि, एतेषामेव गोत्राणामेकोत्तरशतं कुलं लक्षणया तत्स्थाः पुरुषाः गृह्यन्ते । यथा

तत्वानि विंशतिनृपाद्वादशैकादशक्रमात्
दशाष्टाविति गोत्राणि कुलमेकोत्तरं शतमिति ॥

अस्यार्थः, पितृगोत्रे तत्वानि २४ पते च द्वादश परे, तावन्त एवावरे । मातृगोत्रे दश परे, दशावरे एवं विंशतिः २० । भार्यागोत्रे अष्टौ परे, अष्टौ अवरे १६ । भगिनीगोत्रे तत्रादयः षट् परे, भागिनेयादयः षड्अवरे १२ । दुहितृगोत्रे तच्छ्वशुरादयः पञ्च परे, दौहित्रादयः पञ्चावरे जामाता वेत्येकादश ११ । पितृष्वसृकुले तच्छ्वशुराद्याः पञ्च परे, तद्भर्त्राद्या अवरे पञ्चेत्येवं दश १० । मातृष्वसृकुले तच्छ्वशुराद्याश्चत्वारः परे, तद्भर्त्राद्याश्चत्वारोऽवरे इत्येवमष्टौ ८ । सर्वे समुदिता एकोत्तरं शतं भवति ।

अथ पिण्डानां प्रतिपत्तिः ।

तत्र पुत्रार्थी मध्यमं पिण्डं पत्न्यै दद्यात् । तथाच वायुपुराणम्-

पत्न्यै प्रजार्थी दद्यात्तु मध्यं तु मन्त्रपूर्वकमिति ।
मन्त्रस्तु मात्स्ये—
आधत्त पितरो गर्भं मन्त्रं सन्तानवर्द्धनम् इति ।
बृहस्पतिः—
अन्यदेशगता पत्नी गर्भिणी रोगिणी तथा ।
तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति इति ।
देवलः-
ततः कर्मणि निर्वृत्ते तान् पिण्डांस्तदनन्तरम् ।
ब्राह्मणोऽग्नि, रजो, गौर्वा भक्षयेदप्सु वा क्षिपेदिति ।

एतच्च पुत्रार्थित्वाभावविषयकं, मध्यपिण्डेतरविषयकं वा । तीर्थश्राद्धे तु अप्स्वेव पिण्डप्रक्षेपः । तदुक्तं विष्णुधर्मोत्तरे—

तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः
दक्षिणाभिमुखो भूत्वा, पित्र्यदिवसा प्रकीर्तितेति ।
अनन्तरमुच्छिष्टं संमार्जयेत् । अतएव याज्ञवल्क्यः—
सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेदिति ।
सत्सु विद्यमानेषु अविसृष्टेषु इति यावत् । यत्तु प्रचेतसो वचनम्—
भृत्यवर्गावृतो भुङ्क्ते कव्यशेषं स्वगोत्रजैः
आसायं श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेदिति ।
तत्तु गृहान्तरासंभवविषकम् । मात्स्ये—
ततश्च वैश्वदेवान्नं सभृत्यः सहबान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितमिति ।

श्राद्धशेषेणैव च वैश्वदेवः । नित्यं श्राद्धं तु श्राद्धान्तरे सति कृताकृतम् । यदा तु क्रियते तदा तु तदपि श्राद्धशेषेणैव । आहिताग्निना तु श्राद्धात्प्रागेव वैश्वदेवः सच पृथक्पाकेनैवेत्यादिग्रन्थान्तरे स्फुटम् । यदि पितृपाकशेषाद्वैश्वदेवः, यदि वा पाकान्तरादुभयथापि पितृपाकशेषादेव भोजनम् । तथाच याज्ञवल्क्यः—

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितमिति ।
असति तु पितृशेषे पाकान्तरं कृत्वापि भोक्तव्यमेव । तथाच देवलः
श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्तेऽथ कदाचन ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथेति ॥
एकादश्यादौ तु भोजनप्रत्याम्नायः स्मर्यते—
उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ॥
उपवासं तदा कुर्यादाघ्राय पितृसेवितमिति ॥
बृहस्पतिः—
तां निशां ब्रह्मचारी स्याच्छ्राद्धभुक् श्राद्धिकः सहेति ।
मात्स्ये—
पुनर्भोजनमध्वानं पानमायासमैथुनम् ।
श्राद्धभुक् श्राद्धकृच्चैव सर्वमेतद्विवर्जयेत् ॥
स्वाध्यायं कलहं चैव दिवास्वापं तथेच्छयेति ॥
यमः—
पुनर्भोजनमध्वानं भारमायासमैथुनम् ।
संध्यां प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेदिति ॥
अत्र संध्याहोमयोः प्रतिषेधो ऽकृतप्रायश्चित्तपरः । तथाच माधवीये पुराणवाक्यम्—
दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि ॥
असमर्थस्तु संकल्पश्राद्धं कुर्यात् सदा नरः ।
तथाच स्मर्यते—
अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ॥
संकल्पश्राद्धमेवासौ कुर्यादर्घ्यादि वर्जितमिति ।
तल्लक्षणं तु व्यास आह—
संकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।

नावाहनाग्नौकरणे पिण्डांश्चैव न दापयेदिति ॥

विकिरश्च न दातव्य इति माधवीये स्मृत्यन्तरे ।

पारिजाते वृद्धशातातपः—

पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ।

स्वधावाचनलोपोऽत्र विकिरश्च विलुप्यते ॥

अक्षय्यदक्षिणास्वस्तिसौमनस्यं यथास्थितमिति ॥

विसर्जनकाले ओं स्वधेति न वक्तव्यमित्यर्थः ।

स्मृतिसंग्रहे—

अग्नौकरणमर्घ्यं च विकिरावाहने स्वधाम् ।

पिण्डयुक्ते प्रकुर्वीत पिण्डहीने विवर्जयेदिति ॥

आवाहनस्य च समन्त्रकस्यैव निषेधः, अन्यथा देवतासान्निध्यप्रसङ्गः। तथाच आवाहनमन्त्रान् अपठित्वैव देवान् पितॄंश्च ब्राह्मणेषु ध्यायेदिति चन्द्रिकादौ स्थितम्। अन्नासंभवे आमश्राद्धम्, तस्याप्यसंभवे हेमश्राद्धं कार्यमित्युक्तम्। तत्र विशेषमाह व्यासः—

आमं ददातु कौन्तेय दद्यादन्नं चतुर्गुणम् ।

आवाहनादि सर्वं स्यात्पिण्डदानं च भारत ! ॥

दद्याद्यच्च द्विजातिभ्यः शृतं वाऽशृतमेव वा ।

तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेदिति ॥

हस्तेऽग्नौकरणं कुर्याद् ब्राह्मस्य विशेषतः ।

इति तेनैवोक्तत्वादिह पाणावेव होमः। तस्य कालमाह शातातपः—

आमश्राद्धं तु पूर्वाह्ण इति ।

यत्तु

मध्याह्नात्परतो यस्तु कुतपः स उदाहृतः ।

आममात्रेण तत्रैव पितॄणां दत्तमक्षयम् ॥

इति स्थितम्। तच्छूद्रकर्तृकश्राद्धविषयकमित्यपरार्के स्थितम्, हेमाद्रावप्येवम्। आमश्राद्धे हेमश्राद्धे च भोजनयुक्तानामपोशानकर्मा-

दीनां यथासुखं जुषध्वं तृप्ताः स्थेत्यादीनां च द्वारलोपान्निवृत्तिरिति पारिजाते । मरीचिः—

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने ।
अन्यकर्मण्यनूह्याः स्युरामश्राद्धे विधिः स्मृत इति ॥

अत्रामश्राद्ध इति हेमश्राद्धस्याप्युपलक्षणमिति पारिजाते ।

आवाहने यथा पितॄन् हविषे अत्तवे इत्यत्र अत्तवेपदस्थाने स्वीकर्त्तव्य इत्यूहः । स्वधाकारे नमो वः पितरइषे इत्यत्र इषेस्थाने आमद्र व्यायेत्यूहः, विसर्जने वाजेवाजइतिमन्त्रेण तृप्ता इति क्तप्रत्ययान्तमुपनीय-तर्प्स्यथेति लृडन्तमूह्यमिति पारिजाते स्थितम् । यद्यपि ऋग्व्यूहो निषिद्धस्तथापि विशेषवचनात्कार्यः । एवं "पूर्यातत्रा एतदृचोक्षरं यदेनदप्यूहृति तस्मादृचं नोहे" दिति यद्यपि श्रुतिस्तथापि विशेषविषयिण्या स्मृत्या बाध्यते । अग्निहोत्रादिस्मृतिरिव पतितेन कर्म न कर्त्तव्यमिति स्मृत्येत्यन्यत्र विस्तरः । हेम्नाद्यसंभवे स्मर्यते—

तृणानि वा गवे दद्यात्पिण्डान् वा विधिपूर्वकम् ।
तिलोदकैः पितॄन् वापि तर्पयेत् स्नानपूर्वकम् ॥
अग्निना वा दहेत्कक्षं श्राद्धकाले समागते ।
तस्मिंश्चोपवशेद्वह्नि जपेद्वा श्राद्धसंहितामिति ॥

## अथ पार्वणश्राद्धप्रपञ्चः ।

अथ तद्विकृतिभूतं प्रत्याब्दिकं निरूप्यते ।

तत्रेतिकर्त्तव्यमाह जातूकर्ण्यः—

पितुः पितृगणस्थस्य कुर्यात्पार्वणवत्सुतः ।
कुर्वीत दर्शवत् श्राद्धं मातापित्रोर्मृतेऽहनीति ॥

ननूक्तातिदेशेन

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ॥

इति वचनेन च प्रत्याब्दिकेपि मातामहानामपि श्राद्धं प्राप्नोतीति चेत् सत्यम् । अत एव निषिद्धं तत्कात्यायनेन—

कर्पूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
मत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिदिति स्थितिरिति ॥

कर्पूसमन्वितं सपिण्डीकरणम् । यद्यपि क्षयाहे पार्वणमेकोद्दिष्टं च प्रागुदाहृतैर्वचनैर्लभ्यते तथापि देशाचाराद्व्यवस्थितो विकल्प इत्युक्तं प्रागेव । तदेतदाहुर्मूले-

सपिण्डीकरणादूर्द्ध्वं कुर्यादेव हि पार्वणम् ।
एकोद्दिष्टं क्षये केचिदिच्छन्ति मुनिपुङ्गवा इति ॥

तत्राप्यमायां प्रेतपक्षे च मृतानां पार्वणमेव नियतमुक्तम् ।

अमायां तु क्षयो यस्य प्रेतपक्षेऽथवा पुनः ॥
पार्वणं तेन कर्त्तव्यं नैकोद्दिष्टं कदाचन ।

इति वचनात् । इदं च वचनमानिश्चितमूलमिति विज्ञानेश्वरः । शङ्खस्मृतावेतदुपलभ्यत इति माधवः ।

---

## अथान्वारूढायाः क्षयाहो निर्णीयते ।

अन्वारोहणं च द्विविधम् । सहगमन, मनुगमनं च । सहगमनं च भर्तृशरीरेण तदस्थिभिर्वा तत्प्रतिनिधिभूतपर्णशरेण वा सह एकचित्यारोहणम् एकनिर्णयभर्तृसंस्कारमुद्दिश्य क्रियमाणमिति । संस्कारश्च न दाहमात्रं येन शरीरस्यैव संस्कारो न भर्तुरित्युच्येत । अस्थिपालाशविध्यानर्थक्यापत्तेः किंतूत्तरश्राद्धादिकर्माहताप्रयोजको मन्त्रादिकरणको दाहपूर्वकः क्रियाविशेषः। सच क्वचिद्भर्तृशरीर एव, क्वचित्तदवयवास्थ्यादिषु, क्वचिच्च तत्प्रतिकृतिषु पालाशादिषु क्रियत इति तत्तदर्थमर्थ्यमाना सैव चितिर्भर्तृचितिरेव । तेनास्थ्यादिनापि सहगमने ब्राह्मण्यादेर्न पृथक्चितिप्रयुक्तो दोषः, निर्व्यूढे हि भर्तृसंस्कारे स्त्रिया एवाग्निप्रवेशसिद्ध्यर्थं रच्यमाना चितिः पृथक्चितिः, तत्र ब्राह्मण्या नाधिकारः । भर्तृशरीरादिसाहित्यव्यतिरेकेण केवलं भर्तृमात्रोद्देशेन भिन्नचित्यारोहणमनुगमनम् । तत्र च ब्राह्मण्याः सहगमन एवाधिकारः ।

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासां चैव नारीणां धर्मोऽयं परमः स्मृत इति

उशनसः स्मरणात् । यानि च

या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।
सा स्वर्गमात्मघातेन नात्मानं च पतिं नयेत् ॥

इत्यादीनि च वाक्यानि तानि पृथक्चितिविषयाण्येव । तदेतत्स्पष्टमाह स्मृत्यर्थसारः—ब्राह्मण्या एकचित्यारोहणमेव न पृथक्चित्यारोहणं कार्यम् । सवर्णायाः पत्या सहैकचित्यारोहणम्, असवर्णायाः पृथक्चित्यारोहणमेवेति । क्षत्रियादिस्त्रीणां पृथक्पृयगेवेति मिताक्षरास्वरसः । दिवोदासीये भरद्वाजः—

पृथक्चितिं मृते पत्यौ न विप्रा गन्तुमर्हति ।
साप्यनुम्रियते पर्णशरदाहे सहास्थिभिरिति ॥

पारिजातेऽपि—देशान्तमृते पत्यौ ब्राह्मण्यास्तदस्थिभिः सहगमनं भवत्येव । तत्र चन्द्रिकायां भृगुः—

या समारोहणं कुर्याद्भर्तृचित्यां पतिव्रता ।
तां मृताह्नि संप्राप्ते पृथक्पिण्डे नियोजयेत् इति ।

स्मृत्यन्तरेऽपि—

एकचित्यां समारूढौ दम्पती निधनं गतौ ॥
पृथक्श्राद्धं तयोः कुर्यादोदनं च पृथक् पृथक् इति ।

ओदनमोदनपिण्डम् इत्यर्थः । अग्निस्मृतौ—

एकचित्यां समारुह्य मृतयोरेकबर्हिषि ।
पित्रोः पिण्डान् पृथग् दद्यादिति ।

तथा चैकस्यां तिथौ मातृपितृमरणे तन्त्रेण अर्पणं कृत्वा मातृपितृश्राद्धं पृथक् पृथक् कृत्वा एकबर्हिषि षड् पिण्डान् दद्यात् । पतिमुद्दिश्य कालान्तरे यान्वारूढा सा यस्यां तिथौ अग्निं प्रविष्टा तस्यामेव श्राद्धमर्हति न तु पतिक्षयतिथौ "क्षयाहस्तु क्षयेह्नीति" । यत्र

क्षयः स क्षयाहः

तिथिस्तात्कालिकी ग्राह्या तथा मरणजन्मनोः ।

इति वचनादिति केचित् तन्न, मरणतिथौ श्राद्धप्रतिपादकवाक्यानामन्वारूढाश्राद्धेतरश्राद्धविषयकत्वात् ।

आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रतेति ।

स्वधर्ममनुपालयन्ती साध्वी कस्माच्चित्प्रतिबन्धकात्पतिमरणादिने मरणालाभे ततः प्रागूर्ध्वं वा तमुद्दिश्य तद्भक्त्यैवासून् त्यजति तस्या आब्दिकं पतिक्षयदिने एव युक्तम् । उक्तं च—

सहाग्रतः पृष्ठतो वा तद्भक्त्या म्रियते यदि ।
तस्याः श्राद्धं प्रदातव्यं पृथक् पत्युः क्षयेहनि इति ॥

पत्युः क्षयेऽहनि तस्याः श्राद्धं पृथक् दातव्यमित्यन्वयः । तस्याः क्षयेऽहनि इत्यन्वये पत्युः पृथगिति व्यर्थं स्यात् । किंच अन्यथाप्राप्ते विधिः स्यात्, तथाच वाक्यानर्थक्यमिति । अत्र केचित् तस्या अन्वारूढाया, भर्तुश्च क्षयाहनि स्वक्षयाहे पृथक् श्राद्धं प्रदातव्यं तेन तत्क्षयाहे तस्याः, पतिक्षयाहे पत्युः नत्वेकस्यां भर्तुरेव क्षयतिथावित्यर्थमाहुः तदपि न, क्षयेहनीत्यस्य संबन्धाकाङ्क्षायां तत्पतिशब्दाभ्यां संबन्धिसमर्पणे कृते श्राद्धपदेपि संबन्धाकाङ्क्षायां ताभ्यामेव संबन्धिसमर्पणे तस्याः श्राद्धं तस्याः क्षयाहनि पत्युः श्राद्धं पत्युः क्षयेहनीत्यावृत्तिलक्षणो वाक्यभेदः स्यात् पृथक्पदे वीप्साप्रसङ्गाच्च । किंच एकस्मिन्नेव दिने यदा तिथिद्वयं तत्र च प्रातरेकस्यां तिथौ पत्युर्मरणमपरस्यां चाग्निप्रवेशः स्त्रिया कृतः तत्र सहगमनेपि दिनद्वये श्राद्धप्रसङ्गः, तस्मात्तिथिस्तात्कालिकेति वचनमन्वारूढाश्राद्धेतरविषयम् । तदुक्तं पुराणसमुच्चये—

अग्रतः पृष्ठतो वापि तद्भक्त्या म्रियते तु या ।
तस्याः श्राद्धं सुतैः कार्यं पत्युरेव क्षयेहनि ।

इति वदन्ति ।

**अथ वमनादिना श्राद्धविघ्ने निर्णयः ।**

ऋग्विधाने—

इन्द्राय सामसूक्तेन श्राद्धविघ्नो यदा भवेत् ।
अग्न्यादिभिर्भोजनेन श्राद्धं सम्पूर्णमेव हीति ।

अत्रादिपदेन विधिवल्लौकिकाग्निप्रतिष्ठापनमन्वाधानाघाराज्यभागान्तस्थालीपाकतन्त्रं पितृनामपूर्वकाग्न्यर्चनान्न त्यागहोमादयो गृह्यन्ते भोजनशब्देन च श्राद्धस्य पुनः करणम् । एवञ्चात्र विधानद्वयमुक्तम् । तत्र भोजनानन्तरं श्राद्धे प्रधानभूतपिण्डदाने कृते पश्चाद्वमनप्राप्तौ होम एव कर्तव्यः । पिण्डदानात्प्राग् वमनादौ तद्दिने उपवासं कृत्वा परेऽहनि श्राद्धं कर्तव्यमित्यर्थः । उभयत्र सूक्तजपश्चानुवर्तते । पृथग्निमित्तत्वादर्शनात् । पक्षद्वयमप्याह स्मृतिसंग्रहकारः—

प्राधान्यं पिण्डदानस्य भोजनस्य तदङ्गता ।
अतो भुक्तिक्रियाहानौ श्राद्धावृत्तिं न मन्यते इति ॥

अत्र श्राद्धाऽऽवृत्तिं न मन्यते इत्यनेन होमविधिः सूचितः । तदुक्तम्—

प्राणादिपञ्चभिर्मन्त्रैर्यावद्द्वात्रिंशसंख्यया ।
होमशेषं समाप्याथ श्राद्धशेषं समापयेत् इति ॥

तथा तत्रैव ।

अकृते पिण्डदाने तु सज्जनो ब्राह्मणो वमेत् ।
पुनः पाकात्तु कर्तव्यं पिण्डदानं यथाविधि इति ॥

अत्र पुनः पाकविधानेन श्राद्धस्य पुनरावृत्तिर्विधीयते इति । संकल्पश्राद्धेपि पुनः करणमुक्तम् ।

भुक्तिक्रियायाः प्राधान्यं श्राद्धे संकल्पसंज्ञके ।
तत्रापि पितृविप्राणां तूपघाते पुनः क्रियेति ॥

एतद्वचनजातेन परेहनि पुनः श्राद्धकरणमुक्तम् । तदेतत्सांवत्सरिकमासिकविषयम् । अमायां वमनादिविघ्ने तु तदैवाऽऽमेन कार्यम् ।

तथाच मरीचिः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादि नियतं माससंवत्सरादृतइति ॥

अनेनाब्दिकं मासिकं च श्राद्धमावश्यकं पक्वान्नेनैव कार्यमिति सूचितम् । श्राद्धे परिवेष्टुरुच्छिष्टस्पर्शे शुद्धिप्रकारः संग्रहे—

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तो न संकरः ।
भूमौ निधाय तद्द्रव्यमाचान्तेभ्यूक्षणाच्छुचिरिति ॥

भोक्तॄणामन्योन्यस्पर्शे शङ्खः—

श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेदिति । अन्योच्छिष्टस्पर्शे शङ्खः—

उच्छिष्टलेपनं स्पर्शे प्रक्षाल्यान्येन वारिणा ।
भोजनान्ते नरः स्नात्वा गायत्रीं त्रिशतं जपेत् ॥

अन्योन्यभोजनपात्रोच्छिष्टस्पर्शे व्यासः—

उच्छिष्टोच्छिष्टसंस्पर्शे स्पृष्टपात्रं विहृत्य च ।
सर्वान्नं पूर्ववत् क्षिप्त्वा भोजयेत्तु द्विजोत्तम इति ॥

एकोद्दिष्टलक्षणमाहुर्मूले—

एकां शलाकां निक्षिप्यैकोद्दिष्टे त्वर्घ्यमाहरेत् ।
एकपात्रे पवित्रं तु देवावाहनवर्जितम् ॥
अग्नौकरणहीनं तु शेषं कुर्याच्च पूर्ववत् इति ।

याज्ञवल्क्योपि—

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् इति ॥

उपतिष्ठतामित्यक्षय्यस्थाने, विसर्जने अभिरम्यतामिति वदेत् । ब्रुयुस्तेऽभिरताः स्म इति । कात्यायनः— स्वदितमिति तृप्तिप्रश्नः, सुस्वदितमित्यनुज्ञेति । तच्चैकोद्दिष्टं त्रिविधम् । नवं, नवमिश्रं पुराणं चेति ।

तत्र प्रथमाद्येकादशाहान्तं विहितं नवश्राद्धम्। तथाचाङ्गिराः—

प्रथमेह्नि तृतीयेह्नि पञ्चमे सप्तमे तथा।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते इति॥

वसिष्ठस्त्वाह—

सप्तमेह्नि तृतीयेह्नि प्रथमे नवमे तथा।
एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् सदेति।

षण्णां नवश्राद्धानामुपरि कर्त्तव्यं मासिकं नवमिश्रम्। तथाचाश्वलायनः—नवमिश्रं षडुत्तरामिति। मासिकानामुपरि कर्त्तव्यं प्रत्याब्दिकादि पुराणम्। अत एव हारीतेन प्रायश्चित्तकाण्डे क्रमेण नवमासिकयोः प्रायश्चित्तमभिधायोत्तरकालीनं श्राद्धं पुराणशब्देन व्यवहृतम्।

चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मासिके।
एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयतइति॥

इत्थं पार्वणैकोदिष्टे विवेचित अथोभयात्मकं सपिण्डीकरणं विविच्यते तत्र लौगाक्षिः—

श्राद्धानि षोडशापाद्य विदधीत सपिण्डनामिति।
षोडशश्राद्धानि तु जातूकर्ण्येन दर्शितानि॥
द्वादशप्रतिमास्यानि आद्यषाण्मासिके तथा।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडशेति॥

आद्यम् ऊनमासिकम्। एवं षाण्मासिकाब्दिकशब्दावपि ऊनषाण्मासिकमूनाब्दिकञ्चाहतुः द्वादशप्रतिमास्यानां पृथगुपादानात्। तेषां तु कालमाह याज्ञवल्क्यः—

मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम्।
प्रतिसंवत्सरं चैवमाद्यमेकादशेहनीति॥

पैठीनसिः—

मासिकानि स्वकाले तु दिवसे द्वादशेपि वेति।

ऊनषाण्मासिकादीनां कालन्तु श्लोकगौतम आह—

एकद्वित्रिदिनैरूने त्रिभागेनाधिकेन वा ।
श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतम इति ॥

ऊनमासिकस्य वैकल्पिकं कालमाह गालवः—
मरणाद्द्वादशाहे स्यान्मास्यूने वोनमासिकमिति ।

ऊनानां वर्ज्यकालमाह गार्ग्यः—
नन्दायां भार्गवादिने चतुर्दश्यां त्रिपुष्करे ।
ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयादिति ॥

पुराणे—
सपिण्डीकरणादर्वाक् कुर्याच्छ्राद्धानि षोडश ।
एकोदिष्टविधानेन कुर्यात्सर्वाणि तानि त्विति ॥

एवं षोडशश्राद्धानि कृत्वा ततः सपिण्डीकरणं कुर्यात् । तस्य कालमाहुर्मूले—
सपिण्डीकरणं चाब्दे सम्पूर्णेऽभ्युदये तथा ।
द्वादशाहे तु केषाञ्चिन्मतं चैकादशेऽहनीति ॥

बौधायनस्तु—अथ संवत्सरे पूर्णे सपिण्डीकरणं त्रिपक्षे वा तृतीये वा मासि षष्ठे वैकादशे वा द्वादशाहे वेति। एकादशाहद्वादशाहतृतीयमासषष्ठमासैकादशमाससंवत्सरान्तत्रिपक्षशुभागमा इति अष्टौ काला माधवादिग्रन्थेषु फलिताः । तत्रेयं व्यवस्था, मृताहादेकादशे दिने यद्यमावास्या स्यात्तदा साग्निकेन तस्यामेव सपिण्डीकरणं कार्यम् ।

तथाच कार्ष्णाजिनिः—
सपिण्डीकरणं कुर्यात्पूर्ववच्चाग्निमान् सुतः ।
परतो दशरात्राच्चेत्कुहूर्वाद्योपरीतरइति ॥

एकादशदिवसत्वेन दर्शस्यानागमे तु साग्निर्द्वादशेऽह्नि कुर्यात् ।

तथाच भविष्यत्पुराणम्—

यजमानोऽग्निमान् राजन् प्रेतश्चानग्निमान् भवेत् ।

द्वादशाहे भवेत्कार्यं सपिण्डीकरणं सुतैरिति ॥

प्रेतस्य साग्निकत्वे तु तृतीयपक्षे सपिण्डनम् ।

तथाच सुमन्तुः—

प्रेतश्चेदाहिताग्निः स्यात्कर्त्तानग्निर्यदा भवेत् ।

सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके ॥

उभयोः साग्निकत्वे तु द्वादशाहे ।

तथाच स्मर्यते—

साग्निकस्तु यदा कर्त्ता प्रेतश्चाप्यग्निमान् भवेत् ।

द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुरिति ॥

उभयोरनग्निकत्वे तु द्वादशाहादयःसप्त काला इच्छया विकल्प्यन्ते तथाच माधवीये भविष्यत्पुराणम्—

सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान् ।

अनाहिताग्नेः प्रेतस्य पूर्णेब्दे भरतर्षभ ! ॥

द्वादशेहनि पष्ठे वा त्रिपक्षे वा त्रिमासिके ।

एकादशेपि वा मासि मङ्गले वाप्युपस्थिते इति ॥

व्याघ्रः—

आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् ।

अस्थितेश्च शरीरस्य द्वादशाहे प्रशस्यत इति ॥

एतच्च सर्वं त्रैवर्णिकविषयं शूद्रस्य तु द्वादशाहएव नियमः ।

मन्त्रवर्जं हि शूद्राणां द्वादशेहनि कीर्तितमिति ॥

सपिण्डीकरणं प्रकृत्य विष्णुनोक्तत्वात्। यदा संवत्सरपूर्त्तेः प्रागेव सापिण्डीकरणं क्रियते तदा, यद्यपि षोडशश्राद्धानि ततः प्रागेव कृतानि।

श्राद्धानि षोडशाद-त्वा न कुर्यात्तु सपिण्ड नमिति।

वृद्धवसिष्ठोक्तेः तथापि स्वस्वकाले पुनरपि मासिकादीन्यावर्त्तनीयानि।

तदाह गोभिलः—

यस्य संवत्सरादर्वाग् विहिता तु सपिण्डता।

विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडशेति ॥

विधिवदिति यथाचारं पार्वणविधिना एकोद्दिष्टविधिना वेत्यर्थः। तथाच पैठीनासिः—

सपिण्डीकरणादर्वाक् कुर्यात् श्राद्धानि षोडश।

एकोद्दिष्टविधानेन कुर्यात् सर्वाणि तानि तु ॥

सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः।

प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ॥

आवर्त्तनं चोर्ध्वभाविनामेव नतु प्राग्भाविनाम्।

तथाच कार्ष्णाजिनिः—

अर्वागब्दाद्यत्र यत्र सापिण्डीकरणं कृतम्।

तदूर्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिरिति ॥

सपिण्डीकरणादूर्ध्वमावर्त्तनीयानामनुमासिकादीनां वृद्धिप्राप्तौ पुनरपकर्षः। तथाच शाट्यायनिः—

सपिण्डीकरणादर्वाक् अपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥
निषेधश्च कात्यायनेनोक्तः ।
निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेदिति ॥

विज्ञानेश्वरस्तु—संवत्सरादर्वाक्सपिण्डीकरणमिति पक्षे किं षोडशश्राद्धानि कृत्वा सपिण्डीकरणं किंवा विपरीत इति संशय्य सपिण्डनानन्तरं स्वकाले कार्याणीति मुख्यः पक्षः। अर्वाक्सपिण्डनादिति त्वापत्कल्प इति सिद्धान्तितत्वात्। तन्मते माधवाद्युदाहृतानि शाठ्यायनिप्रभृतिवचनानि कथं व्याख्येयानीति परिभावनीयम् ।

सपिण्डीकरणस्य गौणकालमाह ऋष्यशृङ्गः—
सपिण्डीकरणश्राद्धमुक्तकाले न चेत्कृतम् ।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेदिति ॥

अथ सपिण्डीकरणेतिकर्त्तव्यतामाह याज्ञवल्क्यः—
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थे पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् इति ।

प्रेतपात्रोदकं किंचिदवशेष्य त्रिधा विभज्य पितृपात्रेष्वासिच्य प्रेतार्घ्यपात्रावसिष्टोदकेन प्रेतस्थानब्राह्मणहस्तेऽर्घ्यो देय इति व्याख्यातारः। कात्यायनोपि—ततः संवत्सरे पूर्णे चत्वारि पात्राणि सतिलगन्धोदकैः पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य, प्रेतपात्रं पितृपात्रेषु सिञ्चति ये समाना इति द्वाभ्यामेतेन पिण्डो व्याख्यात इति। तदेतदाहुर्मूलकाराः।

चत्वारीहार्घ्यपात्राणि अर्चयेत्पूर्ववच्छुचिः ।

प्रेतपात्रं पितॄणां तु पात्रेषु निर्वपेद् बुधः ॥
मधुवाता ऋचं जप्त्वा संगच्छध्वमिति ब्रुवन् ।
ये समाना इति द्वाभ्यां केचिदिच्छन्ति सूरयः ॥
एवं पिण्डेषु कर्त्तव्यं चरमं तु विसर्जयेदिति ॥

व्युत्क्रममृतेषु तु सपिण्डीकरणं नास्ति, किन्तु पितरि प्रेते पितामहे च जीवति पितुरेकपिण्डमेकोद्दिष्टविधानेन विधाय पितामहस्य पितृपितामहप्रपितामहेभ्यः पार्वणविधिना दद्यात्। एवं गोब्राह्मणादिहतस्यापि सपिण्डाभावः, दार्शिकाब्दिकादौ एकोद्दिष्टपार्वणयोरनुष्ठानं चेति विज्ञानेश्वरमतम् ।

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसाविति ।

कात्यायनवचनं चात्रोपष्टम्भकम् । स्मृतिचन्द्रिकाकारप्रभृतयस्तु–पितामहे जीवति प्रपितामहादिना सपिण्डनं कार्यमित्याहुः । तथाच मनुः–

पिता यस्य तु वित्तः स्याज्जीवेच्चापि पितामहः ।
पितुः स नाम संकीर्त्य कीर्त्तयेत् प्रपितामहमिति ॥

विष्णुरपि–यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यादिति। स्मृत्यर्थसारे-व्युत्क्रममृतानां सपिण्डीकरणं कार्यं नवेति मतद्वयमप्युपनिबद्धम्। अत्र च विभक्तानामपि न पृथगाधिकारः किंतु ज्येष्ठेनैव कर्त्तव्यमिति ।

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥

इतिवचनात् । ज्येष्ठासंनिधाने तु य एव सपिण्डः समानोदको वा सन्निहितः स दशाहान्तं कुर्यात् । यत्तु—

कनीयसा कृतं कर्म सपिण्डीकरणं पुनः ।

तज्ज्यायसापि कर्त्तव्यं प्रेतशब्दं विहाय तु इति ॥

तत्कनीयसः साग्नित्वे पिण्डपितृयज्ञानुरोधेन सपिण्डीकरणस्यावश्यकर्त्तव्यत्वात्तद्विषयकम्, अनग्निकस्तु कनीयान् सपिण्डीकरणं न कुर्यादेवेत्यन्यत्र विस्तरः ।

उशनाः—

एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा

अहन्येकादशे प्राप्ते पार्वणं तु विधीयत इति ।

इदं च शूद्राणामप्यमन्त्रकं द्वादशेह्नि मासे गते वा कार्यम् । अन्वारोहणे सहगमने तु स्त्रियाः पृथक् सपिण्डी करणं न कार्यम् । भर्त्तुः कृते स्त्रियाश्च कृतं भवति ।

तदाह श्राद्धकल्पे आपस्तम्बः—

एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।

पृथक् पिण्डप्रदानं न तस्मात्पत्नीषु युज्यते ॥

चतुर्थीहोममन्त्रैः स्त्री पत्युर्देहार्द्धतां व्रजेत् ।

अतो धर्मे च पिण्डे च भवेत्तस्यार्द्धभागिनी ॥

मृते पितरि मातुस्तु न कुर्यात्सहपिण्डताम् ।

भर्त्तुरेव सपिण्डत्वे तस्या अपि कृतं भवेद् इति ॥

अस्यार्थः, एकस्यामेव तिथौ एकचित्यां समारूढयोर्दम्पत्योः पतिपिण्डदानसमय एव द्वयोर्नामग्रहणं कार्यम् । न पृथक् मातुः पिण्ड-

दानम् । पितृपिण्डदानेनैव तस्या अपि जातत्वादिति ।

तदुक्तं चन्द्रप्रकाशे–

एकचित्यधिरोहश्चेत्तिथिरेकैव जायते ।

एकपाकेन पिण्डैक्ये द्वयोर्गृह्णीत नामनी इति ।

स्मृत्यर्थसारे–अन्वारोहणैकादिनमरणे स्त्रियाः पृथक् सापिण्डीकरणं न कार्यम् । भर्तुश्च कृते स्त्रियाश्च कृतं भवतीति । अनुगमने तु मातुः सपिण्डीकरणं पत्यैव सह कार्यम् ।

तदाह शातातपः–

मृता याऽनुगता नाथं सा तेन सहपिण्डनम् ।

अर्हति स्वर्गवासेपि यावदाभूतसंप्लवम् ॥

अन्वारोहणे तु पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्याद् इति विज्ञानेश्वरः ।

यमोपि–

पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः ।

सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैरिति ॥

पत्या चैकेनेत्यत्र पतिपदं पत्युः पित्रादीनामुपलक्षणार्थमित्येके । एतेन पत्यैव न तात्पित्रादिभिः सहेत्यन्ये ।

हारीतोऽपि–

स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः ।

एकत्वं या गता यस्माच्चरुमन्त्राहुतिव्रतैरिति ॥

तदेतत्पृथक्चित्यारोहणविषयम् । एकचित्यारोहणे पतिसापिण्डनेनैव तस्या अपि कृतत्वादिति शङ्खधरः । पतिमुद्दिश्य दिनान्तर-

मरणविषयमिति गोविन्दराजः। दिनान्तरमृते पुत्रः स्वपितृपितामह-पिण्डमध्ये कुशानन्तर्धाय पित्रैकेन मातुः सपिण्डनं कुर्यादिति स्मृत्यर्थसारः। पत्युद्देशेन मातुरग्निप्रवेशमरणविषयमिति मदनोपि।

अथ सहगमनानुगमनातिरिक्तं प्रकारान्तरेण मरणे मातुः सापिण्ड्यं केन सहेत्यपेक्षायामाह शङ्खः—

मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः।
पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम्॥

शातातपोपि—

पितामह्या सहैवास्याः सपिण्डीकरणं स्मृतम्।

छन्दोगपरिशिष्टे—

मातुः सपिण्डीकरणं पितामह्या सहोदितमिति॥

तदेतद्ब्राह्मादिविवाहोढाविषयमिति चिन्तामणिः।

श्राद्धकल्पे यमस्तु—

जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डनम् इति॥

मृतपितृकस्य विकल्पमाह यमएव—

प्रमीतापितृकः पित्रा पितामह्या थवा सुत इति।

ब्राह्मादिविवाहोत्पन्नः पित्रा पितामहेन पितामह्या वा विकल्पेन कुर्यादिति विज्ञानेश्वरः। अत्र सर्वत्र पितामहीपदं प्रपितामहीवृद्ध-प्रपितामह्योरुपलक्षणम्। पितामह्यादिभिः सार्द्धमित शङ्खोक्तेः। शातातपस्तु पक्षान्तरमाह—

तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् इति।

अस्यार्थः, तस्या मातुर्मात्रा मातुरेव पितामह्या तच्छ्वश्र्वा तस्या

मातृपितामह्या या श्वश्रूर्मातुः प्रपितामही नयेत्यर्थः। पूर्वस्यां जीवन्त्या-मुत्तरोत्तरयेति वाशब्दार्थमाह मदनः—आसुरादिविवाहेषु मातामह्या-दिभिरेवेति वाशब्दार्थ इति सर्वे एव।

आसुरादिविवाहेषु विन्नानां योषितां स्मृता।

इति तेनैवोत्तरार्द्धेनाभिधानात्।

पक्षान्तरमाह सुमन्तुः—

पिता पितामहे योज्यः संपूर्णे वत्सरे सुतैः।

माता मातामहे तद्वदित्याह भगवान् शिव इति॥

तदेतत्पुत्रिकापुत्रविषयमिति बहवः।

तदाह बौधायनः—

आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः।

द्वितीये पितरं तस्यास्तृतीये च पितामहम् इति॥

आसुरादिविवाहोत्पन्नः पुत्रिकासुतश्च मातामहेनैवेति विज्ञाने-श्वरोपि।

अथापुत्रायाः पत्न्याः सापिण्डनमाह पैठीनसिः—

अपुत्रायां मृतायां तु पतिः कुर्यात्सापिण्डताम्।

श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्॥

अस्याः श्वश्र्वादिभिः स्वमात्रादिभिरिति सर्वसंमतोर्थइति।

तदुक्तं व्यासेन—

अपुत्रायां मृतायां तु पतिः कुर्यात्सापिण्डनम्।

स्वस्य मात्रादिभिः सार्द्धमेवं वर्षेण युज्यत इति॥

एवं विरुद्धेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्त्ता स्वमात्रैव सापिण्ड्यं कुर्यादिति विज्ञानेश्वरोपि।

अथापुत्रस्य भर्तुः पत्न्या साপिण्ड्यं कार्यमित्याह लौगाक्षिः—

सर्वाभावे स्वयं पत्न्यः स्वभर्तृणाममन्त्रकम् ।
सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च इति ॥

सुमन्तुरपि—

अपुत्रे संस्थिते कर्ता नास्ति चेत् श्राद्धकर्मणि ।
तत्र पत्न्यपि कुर्वीत सापिण्ड्यं पार्वणं तथा इति ॥

अथ वृद्धिश्राद्धमाह । याज्ञवल्क्यः—

एवं प्रदक्षिणावृत् कौ वृद्धौ नान्दीमुखान् पितॄन् ।
यजेत दधिकर्कन्धूमिश्रान् पिण्डान् यवैः क्रियाः ।

आवृत् परिपाटी । पिण्डानिति दत्त्वेति शेषः । यवैरिति तिलसाध्याः क्रिया यवैः कुर्यादित्यर्थः । अत्र विशेषमाह आश्वलायनः अथाभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखो यज्ञोपवीती स्यात्प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात् यवोसीति स्वाहान्तेन मन्त्रेण यवापवनं विश्वेदेवा इदं वोऽर्घ्यं नान्दीमुखाः पितर इदमर्घ्यमिति यथालिङ्गमर्घ्यदानं पाणौ होमः अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहेति, मधुवाता इति ऋचः स्थाने उपास्मै गायतेति पञ्च मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च पृष्टीमाचान्तेषु भुक्ताशयान् गोमयेनोपलिप्य तेषु प्राचीनाग्रान् दर्भान् संस्तीर्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यादिति । इदं च श्राद्धत्रयं तत्र क्रममाह शातातपः—

मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतमिति ॥

आश्वलायनः—

माता पितामही चैव संपूज्या प्रपितामही ।
पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ।
एतेन वार्द्धनीयाः स्युः पितरोऽभ्युदये द्विजैरिति ।

अस्य मुख्यकालमाह वशिष्ठः—

पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा ।
उत्तरेद्युः प्रकुर्वीत मातामहगणस्य त्विति ॥

वृद्धशातातपः—

पृथग्दिनेष्वशक्तश्चेदेकास्मिन् पूर्ववासरे ।
श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकमिति ॥

तत्राप्यशक्तौ वृद्धमनुः—

अभावे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ।
पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकमिति ॥

इदं गर्भाधानमारभ्य पुत्रस्य प्रथमविवाहावधि पित्रा कार्यम् तदुपरि पुत्रेणेत्यादि हेमाद्रौ स्फुटम् । अत्र च पित्रादयस्त्रय एव नान्दीमुखसंज्ञका इत्यवधेयम् । यत्तु—

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयस्त्वश्रुमुखा ह्येते पितरः सम्प्रकीर्त्तिताः ।
तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः ।

इति वचनं तद्भाद्रपदपूर्णिमायां विहितं यत् श्राद्धं तन्मात्रविषयकम् । तथाच ब्रह्मपुराणे—

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यां तु कर्त्तव्यं वराहवचनं यथा ।
ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्विह इति ।

पितामहशब्देन प्रपितामहो लक्ष्यते । तस्मात्प्रौष्ठपदीमुपक्रम्यै-वेत्थमभिधानादन्यत्र नान्दीश्राद्धे पित्रादीनामेवोपादानमिति हेमाद्रि-पारिजातादिनिबन्धेषु स्फुटतरमेतत् । यद्यपि श्राद्धविषये प्रकीर्णकं बहुतरं वक्तव्यमस्ति तथापि विस्तरभयादुपरम्यते । ग्रन्थान्ते महर्षिन-मस्काररूपं मङ्गलं शिष्यशिक्षार्थमुपनिबध्नाति—

मनवे याज्ञवल्क्याय विश्वामित्राय चात्रये ।
विष्णवे च वशिष्ठाय व्यासायोशनसे नमः ॥
बौधायनाय शङ्खाय दक्षायाङ्गिरसे तथा ।
आपस्तम्बाय वत्साय हारीताय नमो नमः ॥
बृहस्पते ! नमस्तुभ्यं नारदाय महात्मने ।
पराशराय गार्ग्याय गौतमाय यमाय च ॥
शातातपाय शाङ्ख्याय संवर्त्ताय नमो नमः ।
चतुर्विंशतिसंख्येभ्यो मुनिभ्योस्तु नमो नमः ॥

इदं च मङ्गलाचरणं मुन्युपदिष्टधर्मसंग्राहकं तच्छिष्यकर्तृकम् । अ-र्थस्तु स्फुटएव ।

सर्ववेदैकवेद्याय सच्चिदानन्दमूर्त्तये ।
नमो नमः परेशाय विष्णवे प्रभविष्णवे ॥
तेनैव प्रेरितो यद्यदचरंक्षम चापलम् ।
तत्क्षम्यतांस एवैत दन्तर्यामी महेश्वरः ।

* इति पदवाक्यप्रमाणज्ञश्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन रचितायां चतुर्विंशतिमुनिमतव्याख्यायां श्राद्धकाण्डं सम्पूर्णम् ।

* अस्य ग्रन्थस्य सत्स्वपि बहुषु खण्डेषु, कृतेऽपि तत्प्राप्तिप्रयासे, संप्रत्युपलब्धं खण्डद्वयं लोकोपकारितया व्ययव्ययेनापि प्रकाशितम् । अन्यान्युपलभ्यमानान्यपि खण्डानि सत्वरमेव प्रकाशयिष्यन्ते ।

# विज्ञापनम् ।

## वनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य कृते ।॥।ᐟ मूल्यं प्रापणव्ययश्च =ᐟ देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां कृते १ᐟ मूल्यं प्रापणव्ययश्च =ᐟ देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहितं खण्डानि ३। द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहितं खण्डानि ३ ) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

| | | |
|---|---|---|
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ० | ८ | ८ |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुपटीका खण्डानि ४ | ४ | ० |
| पातञ्जलदर्शनम् श्रीरामानन्दयतिकृतमणिप्रभाऽख्यवृत्ति म० | १ | ० |
| व्याकरण मिताक्षरा । श्रीमदन्नंभट्टप्रणीता खण्डानि १० | १० | ० |
| रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रम | | ० |
| पराक्रमसहितः खण्डे २ | २ | ० |
| बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया म० म० १० | | ० |
| ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्विरचिता खण्डे २ | २ | ० |
| दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डानि ३ | ३ | ० |
| श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-व्याख्या समेतम् खण्डानि १५ | १५ | ० |
| तत्त्वशेखरः । श्रीभगवल्लोकाचार्यप्रणीतः । तथा—तत्त्वत्रयचुलुक-संग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । | १ | ८ |
| श्रीभाष्यवार्तिकम् । श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्रतिपादनपरम् । यतीन्द्रमतदीपिका च । श्रीगोविन्दाचार्यसूनु-श्रीनिवासाचार्यकृता । सकलाचार्यमतसंग्रहश्च । खण्डे २ | २ | ० |
| गूढार्थदीपिका । श्रीमद्भागवतदशमस्कन्धस्यरासपञ्चाध्यायी-व्याख्या । | १ | ० |
| आश्वलायनसूत्रप्रयोगदीपिका । श्रीविठ्ठलरमंचनाचार्यभट्ट-विरचिता । | २ | ० |
| काव्यालंकारसूत्राणि । पण्डितवरवामनविरचितवृत्तिसमेतानि कामधेनुसमाख्यव्याख्यासहितानि । | १ | ० |
| श्रुत्यन्तसुरद्रुमः । श्रीपुरुषोत्तमप्रसादविरचितः । | २ | ० |
| चतुर्विंशतिमतसंग्रहः । श्रीभट्टोजिदीक्षितसंकलितः । | २ | ० |

THE

CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 246.

# सांख्यसङ्ग्रहः ।

तत्र

सांख्यतत्त्वविवेचनम् श्रीषिमानन्द(क्षेमेन्द्र)विरचितम् ।

सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेशविरचितम् ।

समाससूत्रव्याख्या सर्वोपकारिणी च ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयाध्यक्षेण
विन्ध्येश्वरीप्रसादद्विवेदिना परिशोधितः ।

# SÂMKHYA SAMGRAHA

a Collection of The Works of Sâmkhya Philosophy,

Edited by *Pandita Vindhyesvarî Prasâda Dvivedin,*
*Librarian, Government Sanskrit College, Benares.*

FASCICULUS I-२

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS:—
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.
*Price Rupee one.*

॥ श्रीः

—:०:—

# सांख्यसंग्रहस्य

## भूमिका ।

मनुस्मृतौ ।

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥" इति ।

याज्ञवल्क्यस्मृतौ च ।

"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ॥
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" इति ।

विष्णुपुराणादौ ।

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति च त्रयम् ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः ॥"इत्यादि—

अत्र चतुर्दशविद्यासु अष्टादशविद्यासु वा सांख्यशास्त्रस्य नामापि नास्तीति न्यायस्यानेकात्मप्रतिपादकत्वादनेकात्मप्रतिपादकानि वैशेषिकसांख्ययोगादीनि शास्त्राणि न्यायविस्तरपदेन संगृहीतानि भवन्तीति हृदयम् तथात्वे छान्दोग्योप-

निषदि ३ प्रपाठके १७ खण्डे "तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्त्रायोक्त्वोवाच" इति । भगवता श्रीकृष्णेन तु भगवद्गीतायाम् ५ अध्याये ।

"सांख्ययोगौ पृथक् बालाः प्रवदन्ति न पण्डिताः ।"
"एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥" इति ।

४ अध्याये ॥

"इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरैक्ष्वाकवे ऽब्रवीत् ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥
स एवायं मया ते ऽद्य योगः प्रोक्तः पुरातनः ॥" इति ।
अपि च श्वेताश्वतरोपनिषदि ६ अध्याये ।
"तत्कारणं सांख्ययोगाधिगम्यं
ज्ञात्वा देवं मुच्यते सर्वपापैः ॥" इति ।

अत्रेदं न भ्रमितव्यं यत् तदानीं कापिलं सांख्यं नासीदेव ५ अध्याये ऽत्रैवोपनिषदि "ऋषिं प्रसूतं कपिलं यस्तमग्रे" इत्युक्तत्वात् । देवकीपुत्रेण भगवता श्रीकृष्णेन भगवद्गीतायाम् १० अध्याये "सिद्धानां कपिलो मुनिः" इत्युक्तत्वात् । इत्थं च कापिलं सांख्यशास्त्रमतीव श्रद्धेयम् । तच्च सांख्यं सूत्रषडध्यायी समाससूत्रं चेति द्विविधमुपलभ्यते अस्योपाख्यानं समाससूत्रसर्वोपकारिणीटीकायामुक्तमपि च समाससूत्रनाम्नापि द्वैविध्याश्रयशङ्कानिरासः तत्र सूत्रषडध्याय्याः भाष्यं वृत्तिश्च प्रकाशितमेव अन्ये ऽपि सांख्यतत्त्वकौमुदीसांख्यचन्द्रिकागौडपादभाष्यादयो ऽनेके ग्रन्थाः प्रकाशिताः परं तु—

समाससूत्रमालम्ब्य व्याख्यां पञ्चशिखस्य च।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनम् ॥

इत्युक्त्या महर्षिकपिलप्रशिष्यपञ्चशिखाचार्या(१)नुसृतोऽपि समाससूत्रग्रन्थ इदानीं लुप्तप्रचार इति तस्य बहूनि व्याख्याना-नि(२) सङ्कलय्यास्मिन् सांख्यसङ्ग्रहे प्रकाशयितुं प्रवृत्तोऽस्मि। अत्र केचिद्वदन्ति समाससूत्रमेव महर्षिकपिलप्रणीतं सांख्यशास्त्रं सूत्रषडध्यायी तु विज्ञानभिक्षुणैव प्रणीतेति। तन्मन्दम् विज्ञान-भिक्षुसमयाद्बहु पूर्वं भोजराजेन षडध्याय्या व्याख्यातत्वाद् वि-स्तरस्तु न्यायवार्त्तिकभूमिकायां द्रष्टव्य इति शम्।

---

(१) "कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये।
पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः॥"
इति सांख्यतत्त्वकौमुद्याम्।

(२) सांख्यतत्त्वविवेचनम् श्रीषिमानन्द(क्षेमेन्द्र)विरचितम्।
सांख्यतत्त्वयाथार्थ्यदीपनम् श्रीभावागणेशविरचितम्।
समाससूत्रसर्वोपकारिणी टीका।
कापिलसूत्रवृत्तिः।
तत्त्वसमाससूत्रव्याख्या।
तत्त्वसमाससूत्रवृत्तिः।
सांख्यसूत्रप्रक्षेपिका। एतानि व्याख्यानानि।
प्रसङ्गादन्येऽपि ग्रन्थाः संगृहीता यथा।
सांख्यतत्त्वप्रदीपः।
तत्त्वमीमांसा।
सांख्यपरिभाषा।

गवर्नमेण्टसंस्कृतकालेज
सरस्वतीभवन
बनारस
२६ मई १९१६ ई०

विन्ध्येश्वरीप्रसादद्विवेदी

ॐ नमः परमात्मने ।

—:०:—

# सांख्यसंग्रहः ।

तत्र

## सांख्यतत्त्वविवेचनम् ।

श्रीषिमानन्दविरचितम् ।

रघुनन्दनसुतेनेदमिष्टिकापुरवासिना ।
कान्यकुब्जद्विजाग्र्येण षिमानन्देन(१) तन्यते ॥ १ ॥
सांख्योपज्ञ नमस्तुभ्यं कपिलाय महात्मने ।
पञ्चविंशतितत्त्वानां तत्त्वज्ञानप्रवर्त्तकः ॥ २ ॥
दुःखत्रयाभिभूतस्य शान्तिर्मे स्यात् कुतस्त्विह ।
तथोपदिश जन्मादि यथा न स्यात् कृपानिधे ॥ ३ ॥
एवं पृष्टो मुनिः प्राह निर्विण्णाय कृपानिधिः ।
पञ्चविंशतिसूत्राणि व्याख्यातानि महात्मभिः ॥ ४ ॥
बबन्धुः कवयः काव्ये व्याचिख्युः कवयः परे ।
सांख्यशास्त्रस्य याथार्थ्यं तदेवेदं विविच्यते ॥
षिमानन्देन मन्देन कुक्षिम्भरिशतादिना ॥ ५ ॥

(१) अत्र क्षेमेन्द्रेणेत्यनुमीयते । 'षिमानन्द' इति तु मातापित्रोरुल्लापने नामेति सर्वजनप्रसिद्ध्यर्थं तथैव लिखितमिति सम्भाव्यते ।

# अष्टौ प्रकृतयः ॥ १ ॥

प्रकृतिर्बुद्ध्यहंकारौ तन्मात्रैकादशेन्द्रियम् ।
भूतानि चेति सामान्याच्चतुर्विंशतिरेव ते ॥

एतेष्वेव धर्मधर्म्यभेदेन गुणकर्मसामान्यानामन्तर्भावः । प्रकृतित्वं च साक्षात्परम्परयाऽखिलविकारोपादानत्वम् । व्युत्पत्तिस्तु प्रकृष्टा परिणामरूपा आकृतिरस्या इति । सा च साम्यावस्थयोपलक्षितसत्त्वादिद्रव्यत्रयरूपा । साम्यावस्था च शान्तघोरमूढादिरूपाणामपि असमुदायवद्रूपत्वेपि अतिशयैः समुदायवद्भिरविरोधेन वर्तमानत्वं सामान्यात्मना गुणभावोऽतिशयात्मना प्राधान्यं विशेषात्मना वैषम्यमित्यतो न्यूनाधिकभावेनासंहतावस्थाऽकार्यावस्थेति यावत् । महदादिकं तु कार्यसत्त्वादिकं न कदाप्यकार्यावस्थं भवतीति तद्व्यावृत्तिः । वैषम्यावस्थायामपि प्रकृतित्वसिद्धये उपलक्षितमित्युक्तं सत्त्वादिगुणवती प्रकृतिः सत्त्वाद्यनतिरिक्तत्वात् तथा च सूत्रं सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वादिति सत्त्वादीनां प्रकृतिस्वरूपत्वं न तु प्रकृतिधर्मत्वम् । गुणेभ्य एव सर्वकार्योपपत्तौ तदन्यप्रकृतिकल्पनावैयर्थ्यात् । सूत्रभाष्याभ्यामपि तथोक्तत्वात् । यत्तु प्रकृतेर्गुणा इतिवत् वनस्य वृ-

क्षा इतिवत् व्याष्टिसमष्ट्यभिप्रायेणेति सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणा इति च न सत्त्वादीनां प्रकृतिकार्यत्ववचनं गुणनित्यतावाक्यविरोधेन महत्तत्त्वकारणीभूतकार्यसत्त्वादिपरम् । महदादिसृष्टिर्गुणवैषम्यात् । तच्च सजातीयसंवलनेन गुणान्तरव्यावृत्तप्रकाशादिफलोपहितः सत्त्वादिव्यवहारयोग्यः परिणाम इति सत्त्वादिव्यवहारो वैषम्य एवेत्याह श्रुतिः यथा तम एवेदमग्र आसीत् तत्परे स्यात् परेणेरितं विषमत्वं(१) प्रत्ययाद्वै रजसो(२) रूपं तद्रजः खल्वीरितं विषमत्वं प्रत्ययाद्वै सत्त्वस्य(३) रूपमिति सत्त्वादित्रयं च सत्त्वादिस्वरूपमिति सत्त्वादित्रयं च सुखप्रकाशलाघवप्रसादादिगुणकतया संयोगविभागादिमत्तयानाश्रितत्वोपादानत्वादिना द्रव्यत्वेपि पुरुषोपकारत्वात् पुरुषबन्धकत्वाच्च गुणशब्देनोच्यते इन्द्रियादिवत् गुणानां सुखदुःखमोहात्मकत्वप्रवादस्तु धर्मधर्म्यभेदात् मनसः सङ्कल्पात्मकत्ववत् तत्र सत्त्वं सुखप्रसादप्रकाशाद्यनेकधर्मकमपि प्रधानतस्तु सुखात्मकमुच्यते । एवं रजोपि दुःखकालुष्यप्रवृत्त्याद्यनेकधर्मकं प्राधान्यतस्तु दुःखात्म-

(१) क्षोभककालरूपेण कार्यपरिणामोन्मुखत्वम् ।

(२) रजोव्यवहारयोग्यं कार्यं रजसः ।

(३) कार्यस्य सत्त्वव्यवहारयोग्यस्य ।

कमुच्यते । एवं तमोपि मोहावरणस्तम्भनाद्यनेकधर्मकं प्राधान्यतस्तु मोहात्मकमुच्यते सतो भावः सत्त्वं धर्मप्राधान्येनोत्तमं पुरुषोपकरणं रागयोगाद्रजो मध्यमम् । तमोधर्मावरणयोगादधमं सत्त्वादीन्यसंख्यव्यक्तयः प्रतिक्षणपरिणामित्वात् लघुत्वादिधर्मैरन्योन्यं साधर्म्यं वैधर्म्यं च गुणानामसंख्यातमितिसूत्रात् । एकदानेकपुरुषादिसृष्टिश्रवणाच्च एकैकव्यक्तित्वे विभुत्वं स्यात् तथा च संयोगवैचित्र्याभावादनन्तवैचित्र्यं कार्याणां न स्यात् । द्रव्यान्तरस्यावच्छेदकीभूतस्याभावाच्च । तस्मादसंख्यातान्येव सत्त्वादीनि त्रित्वकथनं तु विभाजकोपाधित्रयेणैव वैशेषिकाणां नवद्रव्यवचनवत् सत्त्वादीनि च यथायोग्यमणुविभुपरिमाणकानि इतरथा रजसश्चलस्वभावत्ववचनविरोधः स्यात् । आकाशकारणस्य विभुत्वौचित्यात् सर्वकारणद्रव्यविभुत्वे कार्यपरिच्छेदासम्भव इति ।

शब्दस्पर्शविहीनं तद्रूपादिभिरसंहतम् ।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ॥

इत्याद्युक्तेर्न परमाण्वादावन्तर्भावः प्रकृतेरिति ।

अथैवमपि प्रकृतेरणुविभुसाधारणसत्त्वाद्यनेकव्यक्तिरूपत्वे अपरिच्छिन्नत्वैकत्वाक्रियत्वसिद्धान्तक्षतिरिति चेन्न कारणद्रव्यत्वरूपप्रकृतित्वेनैवापरिच्छिन्नत्ववचना-

द्गन्धत्वेन गन्धानां पृथिवीव्यापकतावत् आकाशादिप्रकृतीनां विभुत्वेनैव प्रकृतिविभुत्वसिद्धान्तोपपत्तेश्च । तथा पुरुषभेदेन सर्गभेदेन च भेदाभावस्यैव एकशब्दार्थत्वात् । अजामेकामितिश्रुतेस्तथावगमात् । तथाध्यवसायोभिमानादिक्रियाराहित्यस्यैवाक्रियशब्दार्थत्वादित्यन्यथा श्रुतिस्मृतिर्युक्तस्य प्रकृतिक्षोभस्यानुपपत्तेरिति । तत्रायं प्रयोगः सुखदुःखमोहात्मकमहदादिकार्यं सुखदुःखमोहात्मकद्रव्यकार्यं सुखदुःखमोहात्मकत्वात् वस्त्रादिकार्यशय्यावदिति प्रकृतौ प्रमाणम् । बाह्यवस्तुषु सुखादिकमुत्तमत्वादिकमेव घटरूपमितिवच्चन्दनसुखं स्त्रीसुखमित्यादिप्रत्ययाच्चेति दिक् ।

अव्यक्तबुद्ध्यहङ्कारास्तन्मात्राणां च पञ्चकम् ।
अष्टौ प्रकृतयस्त्वेताः सप्त च व्यक्ततामियात् ॥
अव्यक्तप्रकृतिजन्यत्वात् अव्यक्तानीति चोच्यते ।
व्यज्यन्ते च यथा लोके घटाद्या न तथा हि तत् ॥
अव्यक्तं प्रकृतिर्माया प्रधानं ब्रह्म कारणम् ।
अव्याकृतं तमःपुष्पं क्षेत्रमक्षरनामकम् ॥
बहुधात्मकादिनामानि तस्यामी ते जगुर्बुधाः ।
व्यज्यते नेन्द्रियैर्यस्मादव्यक्तमत उच्यते ।
अनादिमध्यनिधनान्निरङ्गत्वेन तत् तथा ॥

तदेवाह श्रुतिः ।

अशब्दमस्पर्शमरूपमव्ययं
यथा च नित्यं रसगन्धवर्जितम् ।
अनादिमध्यं महतः परं ध्रुवम्
प्रधानमेतत् प्रवदन्ति सूरयः ॥ इति
तस्मादलिङ्गकं सूक्ष्मं तथा प्रसवधर्मिकम् ।
एकं साधारणं तत्र कार्यं कस्यापि नेतरे ॥
बुद्धिर्महान् मनो ब्रह्मा मतिः ख्यातिरपूर्वकम् ।
प्रज्ञा भूतिर्धृतिर्ज्ञानं सन्ततिः स्मृतिरित्यपि ॥
हैरण्यगर्भ्या बुद्धेस्तु महतो नाम सूचितम् ।
गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो वेदा विजज्ञिरे ॥
एका मूर्त्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः । इति
विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभुः ॥

अत्र सत्त्वाद्यंशत्रयेण महतो देवतात्रयोपाधित्वात्तदविवेकेन तिस्र इति ।

सात्त्विकांशात् प्रधानात् तु महत्तत्त्वमजायत इति महत्त्वस्य प्राधान्येन चाध्यवसायो वृत्तिर्महदहंकारमनस्त्रितयात्मकस्यान्तःकरणवृक्षस्य महत्तत्त्वं बीजावस्था तदुक्तं सांख्यसूत्रे इदमेव महत्तत्त्वमंशतो रजस्तमःसंभेदेन परिणतं सत् व्यष्टिजीवानामुपाधिरधर्मादियुक्तं क्षुद्र-

मपि भवति महदुपरागाद्विपरीतमिति । महतस्त्रिगुणस्वरूपत्वाद्देहस्य देहिना कालरूपविष्णुना क्षोभ्यदशायां गुणरूपोपाधिप्राधान्यादविवेके ब्रह्मविष्णुशिवत्वं तत्र महान् सुषुप्त्यभिमानी शिवस्तदुपाधिस्तमःकार्यरूपी तत्र स्वप्नाभिमानी विष्णुस्तदुपाधिः कार्यसत्त्वं तत्र जाग्रदभिमानी ब्रह्मा तदुपाधिः कार्यरजः तत्र समुदायसमुच्चयनन्यन्यायेन समष्टेर्व्यष्ट्यनन्यत्वान्मशकादिरपि विष्णुरेवेति भावः । सृष्टिस्तु महदादिक्रमेणैव न तु भूतादिक्रमेणेति ॥

सा च कौर्मे

भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह ।
आकाशसुषिरं तस्मादुत्पन्नं शब्दलक्षणम् ॥
आकाशं तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ।
वायुरुत्पद्यते तस्मात्तस्य स्पर्शो गुणो मतः ॥ इत्यादि

नन्वेवं चेदाकाशादीनां केवलं विकृतित्वं कथं तत्र आकाशादीनां स्पर्शादितन्मात्रेषु अहंकारोपष्टम्भमात्रेण कारणत्वस्य पुराणादिषूक्तत्वात् ।

न पुमान् स्थाणुरेवायं बुद्धिरध्यवसायिनी ।
पुरुषाधिष्ठितात् सर्वगताज्जाता प्रधानता ॥
चिच्छक्तिर्यादृशी तादृग् वृत्तिः सत्त्वविमिश्रिता ।

रजोगुणस्वरूपा यत् त्रिवृत्करणतः श्रुतेः ॥
ज्ञानं धर्मश्च वैराग्यमैश्वर्यं सत्त्वतो ह्यमी ।
अनैश्वर्यमवैराग्यमधर्मोऽज्ञानमेव तु ॥
तमसश्चापि ते ज्ञेया बुद्धेर्भेदा इतीरिताः ।
ज्ञानं तत्त्वावबोधोऽयं धर्मः श्रुत्युक्तपालनम् ॥
वैराग्यमर्थानासक्तिरैश्वर्यमणिमादिकम् ।
तत्तद्विपर्ययेणैव तामसं तच्चतुष्टयम् ॥
ज्ञानेन मोक्षो धर्मेण गतिरूर्ध्वा भवेदिति ।
वैराग्येनाक्षरलय ऐश्वर्येणाहृता गतिः ॥
एवमेषाष्टधा शक्तिर्व्याख्याता बुद्धिसञ्ज्ञिता ।
प्रधानविकृतिस्त्वेषाहंकारप्रकृतिश्च सा ॥
मूलप्रकृतिरित्यादि कविभिश्च निरूपितम् ।
एकोहंकार इत्येतज्जिज्ञासा चेद्विभावय ॥
योहंशब्दं करोत्येष अभिमान इति स्मृतः ।
स्पृशेहं रसये वाहं स्वामी चाहं मया हृतः ॥
इत्यादि नाम यस्यासीत्तस्य भेदा अमी शृणु ।
वैकारिकस्तैजसोपि भूतादिः सानुमानकः ॥
निरनुमानश्च पञ्चैते भेदास्तस्य प्रकीर्त्तिताः ।
वैकारिकः सात्त्विकोऽयं भूतादिस्तामसः स्मृतः ॥
तैजसो राजसो ज्ञेयस्तस्मात् तन्मात्रपञ्चकम् ।

एकादशेन्द्रियगणः सात्त्विकादभिजायते ॥
देवतास्त्वभिमानिन्यस्तैजसादपि चोच्यते ।
तदेव कथमेवं चेत् त्रिवृत्करणहेतुतः ॥
शब्दतन्मात्रमित्येतत् शब्द एवोपलभ्यते ।
न तूदात्तनिपादादिभेदस्तस्योपलभ्यते ॥
स्पर्शतन्मात्रमेवैतत् स्पर्श एवोपलभ्यते ।
न तु शीतमृदुत्वादिविशेषस्तस्य लभ्यते ॥
रूपतन्मात्रमेवं वै रसतन्मात्रमप्यथ ।
गन्धतन्मात्रमेतेषु विशेषो नोपलभ्यते ॥
तन्मात्राण्यविशेषाणि सूक्ष्मभूतानि चोच्यते ।
भोग्यानि शान्तघोराणि प्रकृत्याऽणव एव च ॥
कुर्वद्रूपात् प्रकृतयः संख्यया ऽष्टौ प्रकीर्त्तिताः ॥

# षोडश विकाराः ॥ २ ॥

एकादशैवेन्द्रियाणि महाभूतानि पञ्च च ।
विकाराः षोडशैवैते न तु प्रकृतिताजुषः ॥
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियं त्विदम् ।
वाक्पाणिपायूपस्थपादाः कर्मेन्द्रियं मतम् ॥
स्वं स्वं कर्म प्रकुर्वन्ति ज्ञानं चेति यथैषितम् ।
उभयात्मकं मनश्चैव संकल्पादिस्वरूपवत् ॥

करणानीन्द्रियाणीति वैकारिकमयं रथः ।
पदानि नियतानीत्यक्षाणीत्यभिधीयते ॥
पृथिवीजलतेजांसि वायुराकाश इत्यपि ।
महाभूतानि पञ्चैव धारणाद्युपकारतः ॥
आपः संग्रहभावेन चतुर्णामुपकारिकाः ।
तेजः पाचकभावेन वायुर्वहनभावतः ॥
शब्दादिपञ्चगुणवत्पृथ्वी पञ्चगुणा मता ।
आपः शब्दादिसहिताः गन्धेन रहितास्तथा ॥
तेजः शब्दस्पर्शवत् रूपवत् श्वसने पुनः ।
शब्दश्च स्पर्श इत्येवमाकाशे शब्द एव तु ॥
न तु विग्रहभूतानि विशेषाकृतयस्तथा ।
विकाराः शान्तघोराख्यमूढाः त्रिविधकीर्त्तिताः ॥

## पुरुषः ॥ २ ॥

पुरि शयनात् प्रमाणात् पूरणात् पुरुषचित्तः ।
स चानादिः सर्वगतश्चेतनो निर्गुणोऽपरः ॥
द्रष्टा भोक्ता क्षेत्रविदमलोऽप्रसवधर्मकः ।
सूक्ष्मो नित्यो ह्यनादिस्त्वमध्यनिधनोऽपि सः ॥
सर्वमासमनेनेति तस्मात् सर्वगतस्तु सः ।
सुखोपलब्धिमत्त्वाच्च चेतनोऽनिर्गुणस्तथा ॥

सत्त्वादिगुणराहित्यात् परः परतया स्मृतः ।
दृश्यप्रकृतिसम्बन्धात् द्रष्टा भोक्तानुभावनात् ॥
क्षेत्रे गुणगतं वेत्ति क्षेत्रज्ञ इति कीर्त्तितः ।
शुभाशुभादिसंसर्गाभावादमल इष्यते ॥
निर्बीजत्वात् प्रसूते च नेत्यप्रसवधर्मकः ।
निरङ्गत्वातीन्द्रियत्वात् सूक्ष्मो नित्यः सदातनात् ॥
एवं सांख्यः स पुरुषो व्याख्यातः पूर्वसूरिभिः ।
जीवो जन्तुः पुमानात्मा पुरुषः पूजको नरः ॥
क्षेत्रज्ञश्चाक्षरः प्राणः कोय एषः स ज्ञस्तथा ।
अज एतानि नामानि सांख्ये पुरुषसाञ्ज्ञिते ॥

एवम्,

पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे रतः ।
मुण्डी जटी शिखी वापि मुच्यते नात्र संशयः ॥
अयं कर्ताथवाऽकर्त्ता पुरुषः प्रकृतेः परः ।
शुभाशुभानि कर्त्ता चेत् कुर्याद् वृत्तित्रयं विना ॥
लोकदृष्टगुणानां चेत् कर्तृता धर्मिता कथम् ॥
साहित्यं यमनियमनिषेचनप्रसंख्यानात् ।
ज्ञानैश्वर्यविकारप्रकाशने सात्त्विकी वृत्तिः ॥
रागः क्रोधो लोभः परपरिवादो निन्दा तुष्टिः ।
विकृताकृतपारुष्यं प्रख्यातैषा रजोबुद्धिः ॥

उन्मादमदविषादा नास्तिक्यं स्त्रीप्रसङ्गिता ।
निद्रालस्यं नैर्घृण्यं त्वशौचमिति तामसी वृत्तिः ॥
एतद् वृत्तित्रयं दृष्ट्वा गुणानां कर्तृताथवा ।
अकर्ता पुरुषः सिद्ध इति सिद्धान्त इष्यते ॥
प्रवर्त्तमानप्रकृतेरिमान् गुणान्
रजस्तमोभ्यां विपरीतदर्शनात् ।
आत्मानमाच्छाद्य स आत्मने तद्
अहङ्करोमीत्यबुधोऽत्रमन्यते ॥
बालाग्रकुक्षीकरणासमर्थः
सर्वं मयेदं कृतमित्यमन्यत ।
उन्मत्तवद्भाव्यत इत्यबोधः
अहो विधे पण्डितमानिनः कः ॥
तदुक्तं गीतासु
प्रकृतेः(१) क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥
अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥

---

(१) अत्र प्रकृतेरिति षष्ठी अभेदे एकशतं षष्ठ्यर्था इति भाष्योक्तेः । चित्स्वरूपपुरुषस्य व्यपदेशे पुरुषस्य चैतन्यमिति विकल्पोदाहृतेश्च ।

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति सदात्मानमकर्तारं स पश्यति ॥ इत्यादि
स एकः पुरुषः किं वा नानेति च विचारय ।
सुखदुःखमोहसङ्करविशुद्धजन्ममरणानाम् ।
नानात्वात् पुरुषबहुत्वं सिद्धं लोकाश्रमवर्णभेदाच्च ॥
यद्येकः पुरुषः स्याद् बुद्धिहानिः प्रसज्यते ।
एकस्मिन् सुखिते सर्वे सुखिनः स्युरतः परम् ।
एकस्मिन् दुःखिते सर्वे दुःखिताः स्युरिति क्रमात् ॥
अतो बहुत्वं संसिद्धं बहवः पुरुषाः स्मृताः ।

आकृतिगर्भाशयभावसङ्गतिशरीरविभागाल्लिङ्गबहुत्वात् सांख्याचार्याः कपिलासुरिपञ्चशिखपतञ्जलिप्रभृतयः पुरुषबहुत्वं वर्णयन्ति । वेदवादिन आचार्या हरिहरहिरण्यगर्भव्यासादय एकमात्मानं, तथा च श्रुतिः ।

पुरुष एवेदँ सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्येनातिरोहति ।
तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ॥
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः ।
तदेव सत्यममृतं स मोक्षः सा परा गतिः ॥
तदक्षरं तत्सवितुर्वरेण्यं यस्मात् परं नापरमस्ति किञ्चित् ।
यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ॥

वृक्ष इव स्तम्भो दिवि तिष्ठत्येकः तेनेदं पूर्णं पुरुषेण ।
सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम् ॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥
सर्वस्य पशुमीशानं सर्वस्य शरणं महत् ।
सर्वतः सर्वसत्त्वानि सर्वात्मा सर्वसम्भवः ॥
सर्वं विलीयते यस्मिन् तद ब्रह्म मुनयो विदुः ।
एक एव हि भूतात्मा भूतेभूते व्यवस्थितः ॥
एकधा वहुधा चैव दृश्यते जलचन्द्रवत् ।
स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥
वसत्येको महानात्मा येन सर्वमिदं ततम् ॥ इत्यादि ।

## त्रैगुण्यम् ॥ ४ ॥

सत्त्वं रजस्तम इति गुणाः भावेण्यस्त्रैगुण्यम् ।
प्रसादो लाघवं सङ्गः प्रसङ्गात् प्रीतिरार्जवम् ॥
तुष्टिरिस्तितिक्षा सत्त्वस्य रूपं साक्षात् सुखावहम् ।
शोकस्तम्भद्वेषतापखेदभोगाभिमानिता ॥
रजोरूपाण्यनेकानि वहुदुःखप्रदानि वै ।
तमो नामाच्छादनादि वीभत्सावरणादि च ॥
दैन्यगौरवनिद्रादिप्रमादालस्यलक्षणम् ।

मोहात्मकमनन्तं तदेवं त्रैगुण्यमीरितम् ।
सत्त्वं प्रकाशकं विद्याद्रजो विद्यात् प्रवर्त्तकम् ॥
विनाशकं तमो विद्यात् त्रैगुण्यं नाम सञ्ज्ञितम् ।

## सञ्चरः ॥ ५ ॥

साम्यावस्था गुणानां या प्रकृतिः सा स्वभावतः ।
कालक्षोभेण वैषम्यात् क्षेत्रे परयुते पुरा ॥
बुद्धिस्ततश्चाहङ्कारस्त्रिविधोपि व्यजायत ।
तन्मात्राणीन्द्रियाणि महाभूतानि च क्रमात् ॥
एवं क्रमेणैवोत्पत्तिः सञ्चरः परिकीर्तितः ।

## प्रतिसञ्चरः ॥ ६ ॥

व्युत्क्रमेणैव लीयन्ते तन्मात्रे भूतपञ्चकम् ।
तन्मात्राणीन्द्रियाणि अहङ्कारे विलीयते ॥
अहङ्कारोऽथ बुद्धौ तु बुद्धिरव्यक्तसञ्ज्ञके ।
अव्यक्तं न क्वचिल्लीनं प्रतिसञ्चर इति स्मृतः ॥

## अध्यात्ममधिभूतमधिदैवतं च ॥ ७ ॥

बुद्ध्याहङ्कारमनसी श्रोत्रं त्वक् चक्षुषी तथा ।

जिह्वा घ्राणं पादपायूपस्थमध्यात्मसञ्ज्ञितम् ॥

यत्तु मोक्षधर्मे

आदौ मन अहङ्कारात् जायते वृत्तयश्चताः ॥

शब्दरागात् श्रोत्रमस्य जायते भावितात्मनः ।

रूपरागात् तथा चक्षुर्घ्राणं गन्धजिघृक्षया ॥

इत्यादिनेन्द्रियाणां मनोवृत्तिरागादिकार्यत्वं तद्भेदान्तरीत्यैवेति मन्तव्यम् ।

अधिभूतम् ।

यथाक्रमेण बोद्धव्यमभिमन्तव्यमेव च ।

सङ्कल्पितव्यं श्रोतव्यं स्प्रष्टव्यं द्रष्टव्यमेव च ॥

रसयितव्यं घ्रातव्यं गन्तव्यमुत्स्रष्टव्यं च ।

आनन्दयितव्यमित्येवमधिभूतं प्रकीर्तितम् ॥

अधिदैवतं च ।

ब्रह्मा रुद्रश्चन्द्रमाश्च आकाशो वायुरेव च ।

सूर्यो वरुण इन्द्रश्च विष्णुमित्रं तथैव च ॥

अनेनैव क्रमेणेदं संप्रोक्तमधिदैवतम् ।

चत्वारि यो वेदयते यथा च-

क्षुषा स्वरूपाण्यधिदैवतं वा ।

विमुक्तयाथागतदोषसङ्गो-

गुणांस्तु भुङ्क्ते न गुणैः स युज्यते ॥

## पञ्चाभिबुद्धयः ॥ ८ ॥

इच्छाभिबुद्धिर्विज्ञेया आभिमुख्येन कर्मणः ।
इदं मे कार्यमित्येषोऽध्यवसायः करोम्यहम् ॥
इच्छा वाञ्छाथ सङ्कल्पो मनसः कर्म चेष्यते ।
एवमेताश्च पञ्चाभिबुद्धयः परिकीर्तिताः ॥

## पञ्च कर्मयोनयः ॥ ९ ॥

धृतिः श्रद्धा सुखेच्छा विविदिषा तदभावकौ ।
सामान्यतः समुद्दिष्टाः पञ्चैते कर्मयोनयः ॥
वाचि कर्मणि संकल्पेप्रतीतिर्याभिरज्यते ।
तन्निष्ठस्तत्प्रतिष्ठश्च धृतेरेतद्धि लक्षणम् ॥
अनसूया ब्रह्मचर्यं यजनं याजनं तपः ।
प्रतिग्रहश्च होमश्च श्रद्धाया लक्षणं स्मृतम् ॥
सुखं सुखार्थी सेवेत विद्या कर्म तपांसि च ।
प्रायश्चित्तपरो नित्यं सुखेयं परिकीर्त्तिता ॥
विषधूम्रमूर्छितवद् विविदिषा ध्यानिनां प्रज्ञायोनिः।
एकत्वं च पृथक्त्वं च नित्यं वेदमचेतनम् ॥
सूक्ष्मसत्कार्यसंक्षोभ्यं ज्ञेया विविदिषा हि सा ।
कार्यकरणक्षमकरी विविदिषा प्राकृती वृत्तिः ॥

धृतिः श्रद्धा विविदिषा सुखा चेति चतुष्टयम् ।
ज्ञेयं बन्धो विविदिषा मोक्षाय परिकल्पिता ।
कर्मयोनिस्वरूपोयं विशिष्य परिकीर्त्तितः ॥

## पञ्च वायवः ॥ १० ॥

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
इत्येते वायवः पञ्च शरीरेषु शरीरिणाम् ॥
मुखनासाधिचारी यः प्राणनात् प्राण उच्यते ।
नाभेरधिचरत्येवोपानये ऽपान इष्यते ॥
हृद्यधिष्ठाननयनात् समान इति कीर्तितः ।
कण्ठादूर्ध्वावगमनादुदान इति च स्मृतः ॥
सन्ध्यधिष्ठानतो व्यानो विक्षेपणविजृम्भणात् ।

## पञ्च कर्मात्मानः ॥ ११ ॥

वैकारिकादयः पूर्वं यथाक्रममुदाहृताः ।
शुभं वाऽशुभमूढौ च शुभमूढाऽशुभमूढके ॥
यथाक्रमं च कर्त्तारस्तत्तत्कर्म समीरितम् ।

## पञ्चपर्वा अविद्या ॥ १२ ॥

तमो मोहो महामोहस्तामिस्रश्चान्धतामिस्रः ॥
अष्टकौ तौ तमो मोहौ प्रकृत्यष्टकनिष्ठितौ ।

आत्मज्ञानाभिमान्येयं प्राप्त्याद्यैश्वर्यमानिता(१)॥
निर्वृत्ते विषये दृष्टे पञ्चानुश्राविके तथा ।
मोहोऽहमभिमानो यो महामोहो दशात्मकः ॥
अष्टैश्वर्ये दशविषये सिद्धतामिश्र उच्यते ।
विषादः सोऽन्धतामिश्रो मरणे प्रतिपद्यते ॥
अविद्या पञ्चपर्वैषा भिन्ना द्वाषष्टिभेदतः ॥

# अष्टाविंशतिधाऽशक्तिः ॥ १३ ॥

जडत्वकुष्टिकुब्जत्वरूपता
ऽघ्राणत्वमूकत्वसुपङ्गुताश्च ।
कुणिर्गुदावर्त्ति च पण्ढता च
उन्माद इत्येष निरूपितोऽयम् ॥
एकादशेन्द्रियवधो बाधिर्यादिस्वरूपतः ।
बुद्धेर्वधः सप्तदश तुष्टिसिद्धिविपर्ययः ॥
नास्ति प्रधानमिति या प्रतिपत्तिरजम्भिका ।
न महानित्यसलिला नायाच्छा चानहंकृतौ ॥
न वास्त्यदृष्टिस्तन्मात्रपञ्चकं भूतकारणम् ।
सर्वमेवेदं ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति ।
यथा वेदान्तिनां तद्वत् सांख्यानामीदृशी मतिः ॥

---

(१) अविद्यास्मितारागद्वेषाभिनिवेशाख्या ।

असुता विषयार्जने प्रवृत्तिः
सुतरा परिरक्षणे प्रवृत्तिः ।
क्षयदोषमपश्यतो धने प्रवृत्तिः
असुनेत्रा परिकीर्त्यते हि सांख्यैः ॥
अकुर्मरीचिका(१)भोगशक्तिर्हिंसाद्यपश्यतः ।
अनुत्तमाम्भसिका दोषभोगादम्भः प्रवर्त्तनम् ॥
नवधा कथिता एवं तत्र तुष्टिविपर्ययाः ।
कथ्यन्ते सिद्धयो ह्यष्टौ ते ऽमी सिद्धिविपर्ययाः ॥
नानात्वमूहमानस्य सिद्धमेकमतारकम् ।
विपरीतग्रहः शब्दश्रवणादसुतारकम् ॥
नानात्वज्ञो मुक्त इति श्रुत्वैकज्ञो न मुक्तिभाक् ।
अतारयन्तमज्ञानात्तदन्यज्ञाननिवेशतः ।
दुःखितस्याप्यनुद्वेगादप्रमोदा हि संसृतौ ॥
अप्रमुदं तदज्ञानमप्रमुदितमप्रमोदमानं वा ।
असम्यग्वचनादप्युपरोधेन वा गुरौ ॥
अभाग्यस्य न सिद्धिः स्यात् ज्ञाने तत् समुदीरितम्
स्निग्धसंसर्गतो ज्ञानोत्तमज्ञानमरम्यकम् ॥
व्याख्याताः पूर्वरीत्याष्टावेते सिद्धिविपर्ययाः ।
अष्टाविंशतिधाशक्तिरूपाख्यातोभयपोगतः ॥

---

(१) 'कुमरीचिका' इति क्वचित् ।

## नवधा तुष्टिः ॥ १४ ॥

प्रकृतौ परमात्मत्वं प्रतिपद्यैव तुष्टिभाक् ॥
माध्यस्थ्यमवलम्बेत अम्भः सा तुष्टिरुच्यते ।
बुद्धौ च परमात्मत्वे तुष्टिः सा सलिला स्मृता ॥
अहंकारे यदा सा स्यादायाच्छा इति शब्दिता ।
तन्मात्रेषु यदा सा स्यात् तुष्टिर्दृष्टिर्निगद्यते ॥
आध्यात्मिकाश्चतस्रस्तु तुष्टयः प्रभवन्ति हि ।
मोक्षस्तास्वपि नास्त्येव तत्त्वज्ञानाद्यथोदिता ॥
अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
त्यागे दुःखं क्षये(१) दुःखं धिगर्थं दुःखभाजनम् ॥ इति
दोषदर्शनसन्तुष्टः परब्रह्मैव मोक्षभाक् ।
सुतेयं पञ्चमी तुष्टिस्तत्त्वज्ञानाद्यभावतः ॥
रक्षणे सुतरा षष्ठी सप्तमी क्षयदर्शनात् ।
सुनेत्रा सङ्गदोषा चाष्टमी कुमरीचिका ॥
अर्थे हिंसादिदोषेण निवृत्तिश्च समस्करी ।
तुष्टिस्तु नवमी प्रोक्ता ह्युत्तमाम्भसिका तव ॥

## अष्टधा सिद्धिः ॥ १५ ॥

ज्ञानं यद्दूरमुत्पन्नं ताराख्या प्रथमा हि सा ।

---

(१) 'व्यये' इति क्वचित् पाठः ।

शब्दमात्रेण भूतेषु सुतारा ज्ञानमिष्यते ॥
ज्ञानमध्ययनेनैव तारयन्ती तृतीयका ।
अध्यात्मदुःखापनयात् प्रमोदेत्यभिधीयते ॥
भौतिकक्लेशहरणात् प्रमुदा सिद्धिरुच्यते ।
आधिदैवक्लेशहरणात् ज्ञानमुत्पद्यते नृणाम् ॥
प्रमोदमानेत्याख्याता षष्ठी सिद्धिः स्वयं सताम् ।
स्निग्धसंसर्गनाशात्तु रम्यका सप्तमी स्मृता ॥
प्रमुदा चाष्टमी सिद्धिः परिचर्यादिना गुरोः ।
इत्येताः सिद्धयो ह्यष्टौ व्याख्याताः ज्ञानसाधिकाः ।

## दश मूलिकार्थाः ॥ १६ ॥

अस्तित्वमेकत्वमथार्थवत्त्वे
पारार्थ्यमन्यत्वमकर्तृकत्वम् ।
योगो वियोगो बहवः पुमांसः
स्थितिः शरीरस्य च शेषवृत्तिः ॥
एषा सा दशमूलिकार्थगणना सङ्घातपारार्थ्यतः
सिद्धा सा पुरुषास्तिता परिणतेर्भेदस्य तत्कारणम् ।
अस्त्यव्यक्तमनन्तमेकमिति च प्रेमाविषादात्मकं
नानापायपरार्थता त्रिगुणतोन्यत्वस्य सिद्धिस्तथा ॥
विपर्यासादकर्तृत्वं योगः पुरुषदर्शनात् ।

प्राप्ते शरीरभेदे तु चरितार्थत्वदर्शनात् ॥
जन्मादिकरणान्तानां भेदान्नाना हि ते स्मृताः ।
चक्रभ्रमिवत् शेषवृत्तिः सिद्धार्थाः दश मूलिकाः ॥
सप्तत्या प्रागुपदिष्टाः पञ्चाशत् प्रत्यया इमे ।
दशषष्टिपदार्थैस्तु षष्टितन्त्र इतीर्यते ॥

## अनुग्रहसर्गः ॥ १७ ॥

ब्रह्मानुग्रहमसृजद्रूपतन्मात्रतः पृथक् ।
उत्पाद्यानुग्रहध्यानात् प्राक्तनाधारवर्जनात् ॥

## चतुर्दशविधो भूतसर्गः ॥ १८ ॥

अष्टविकल्पं दैवं पैशाचं राक्षसं तद्वत् ।
गान्धर्वमैन्द्रं ब्राह्मं च सौम्यं ब्राह्ममथाष्टकम् ॥
देवयोनय एवैते तिर्यग्योनिस्तु पञ्चधा ।
मृगपशुपक्षिसरीसृपस्थावरमिति भेदसम्भिन्ना ॥
मानुष्यकं चैकविधं ब्राह्मणादिचाण्डालान्तम् ।
पशवो गवादिमूषान्ताः पक्षिणो गरूडादिकाः ॥
मशकान्ता मृगाश्चापि सिंहादि च शिवान्तकाः ।
शेषादि अलगर्दान्ताः सर्पाः पर्वतभूतृणाः ॥
स्थावरा भौतिकः सर्ग एतत्संसारमण्डलम् ॥

## त्रिविधो बन्धः ॥ १९ ॥

प्रकृतिबन्धः प्रकृतिलयः परत्वेनाभिमन्यतः ।
संन्यासिनामिन्द्रियेषु लयो वैकारिकोऽपरः ॥
गृहीणां दक्षिणाबन्धो वदान्यत्वाभिमानिनाम् ।
इत्येषस्त्रिविधो बन्धस्त्रिविधो मोक्ष उच्यते ॥

## त्रिविधो मोक्षः ॥ २० ॥

ज्ञानोद्रेकादुपरतेश्च धर्माधर्मक्षयो भवेत् ।
धर्माधर्मक्षयाच्चाथ कैवल्यमिति गीयते ॥
तदुक्तम् ।
आद्यो हि मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात् ।
कृत्स्नक्षयात् तृतीयस्तु व्याख्यातं मोक्षलक्षणम् ॥

## त्रिविधं प्रमाणम् ॥ २१ ॥

दृष्टमनुमानमाप्तवचनं चैतत् प्रमाणकम् ।
पञ्चेन्द्रियाणि प्रत्यक्षं वृष्टिर्मेघोदयेन तु ॥
अनुमानमिन्द्रो देवानां राजाशब्दः प्रमापकः ।
आगमेऽपि,
स्वकर्मभिर्विनिर्मुक्तो रागद्वेषविवर्जितः ॥
ज्ञानवान् शीलसम्पन्नः सोऽपि ज्ञेयश्च तादृशः ॥

## त्रिविधं दुःखम् ॥२२॥

दुःखं तु त्रिविधं प्रोक्तमध्यात्ममधिभूतकम् ।
आधिदैवं च तत्रापि प्रथमं द्विविधं स्मृतम् ॥
शारीरं मानसं चेति वातकामादिदोषजम् ॥
भूतेभ्यो मानुषादिभ्यो जातं स्यादाधिभौतिकम् ॥
देवेभ्यः शीतवातादिभवं स्यादाधिदैविकम् ।
एतत् समासतः प्रोक्ता सूतव्याख्या यथामति ॥
प्रक्रियां च प्रवक्ष्यामि पौराणिकहिताय वै ॥

---

## एतत् परम्परया याथात-थ्यम् ॥ २३ ॥

## एतत् सर्वं ज्ञात्वा कृतकृत्यः स्यात् ॥ २४ ॥

## न पुनस्त्रिविधेन दुःखेनाभि-भूयते ॥ २५ ॥(१)

महान् अहंकारः पञ्च तन्मात्राणि अव्यक्तसंज्ञानि

---

(१) २३।२४।२५। सूत्राणि प्रथमादर्शपुस्तके न सन्ति ।

भवन्ति महच्छब्देन हैरण्यगर्भो बुद्धिरुच्यते । प्रधानं मूलमव्यक्तसंज्ञम् । ज्ञः पुरुषः । एतानि पञ्चविंशतितत्त्वानि । तत्र प्रधानं कारणमेव न कार्यम् । महदादयः सप्त पूर्वपूर्वस्य कार्याणि उत्तरोत्तरस्य कारणानि । इन्द्रियाण्येकादश पञ्च महाभूतानि कार्याण्येव न कारणानि । पुरुषस्तु न कार्यं न वा कारणम् । तदुक्तम् । मूलप्रकृतिरित्यादि । महान् अहंकारः पञ्च तन्मात्राणि सप्त प्रकृतिविकृतयः । प्रधानाद् बुद्धिर्जायत इति प्रधानविकारः सैवाहङ्कारं जनयतीति प्रकृतिः अहङ्कारोऽपि बुद्धेर्जायत इति विकृतिः सोऽपि एकादशेन्द्रियाणि पञ्च तन्मात्राणि जनयतीति प्रकृतिः ॥

तत्र शब्दतन्मात्रमहंकाराज्जायत इति विकृतिस्तस्मादाकाशं जायत इति शब्दतन्मात्रं प्रकृतिः । तथा स्पर्शतन्मात्रमहंकाराज्जायत इति विकृतिः तदेव वायुं जनयतीति प्रकृतिः । एवं रूपतन्मात्रमहंकाराज्जायत इति विकृतिः तदेव तेजो जनयतीति प्रकृतिः । रसतन्मात्रमहङ्काराज्जायत इति विकृतिस्तदेवाम्भो जनयतीति प्रकृतिः । तथा गन्धतन्मात्रमहंकाराज्जायत इति विकृतिः तदेवावनिं जनयतीति प्रकृतिः ॥

एतानि पञ्च तन्मात्राणि सूक्ष्मभूतानि स्थूलभूतानां

कारणानि षोडशकश्च विकारः । पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि एकादशं मनः पञ्च महाभूतानि एष षोडशको गणो विकार एव न प्रकृतिः । पुरुषस्तु नोभयमित्यर्थः ॥

प्रत्यक्षानुमानशब्दरूपं त्रिविधं प्रमाणम् । तत्र प्रत्यक्षं तावत् श्रोत्रादिपञ्चकं लोकोचितशब्दादिगुणग्राहकम् । अनुमानं चाप्रत्यक्षार्थग्राहकं धूमादि । शब्दस्तावत् त्रिविधो भवति वागिन्द्रियविषयः श्रोत्रविषयो बुद्धिमात्रविषयश्च । तेषु कण्ठताल्वादिस्थलावच्छिन्नः शब्दो वागिन्द्रियविषयः तत्कार्यत्वात् वागिन्द्रियव्यवहितश्रोत्रस्थश्च शब्दतः शब्दः श्रोत्रस्य विषयस्तद्ग्राह्यत्वात् । घट इत्यादिपदानि तु बुद्धिमात्रस्य विषयः वक्ष्यमाणयुक्त्या बुद्धिमात्रग्राह्यत्वात् ॥

तानि पदान्येवार्थस्य करणत्वात् स्फोट इत्युच्यते । तद्धि पदं वागिन्द्रियोच्चार्यप्रत्येकवर्णेभ्योतिरिक्तं वर्णानामाशुतराविनाशितया मेलनाभावेनैकं पदमिति व्यवहारगोचरत्वासम्भवात् अर्थस्मारकत्वासम्भवाच्च । अस्य च स्फोटस्य कारणमेकः प्रयत्नविशेषः प्रयत्नभेदेनोच्चारणे सति एकपदव्यवहाराभावादर्थाप्रत्ययाच्च तस्य च स्फोटस्य व्यञ्जक आनुपूर्वीविशिष्टतया अन्त्यवर्णप्रत्ययः अतश्च

बुद्धेरेव स्फोटग्राहकत्वम् आनुपूर्व्या बुद्ध्यैव ग्रहणसम्भवेन । सामानाधिकरण्यप्रत्यासत्त्यैवानुपूर्वीप्रत्ययस्य स्फोटाख्यपदाभिव्यक्तिहेतुत्वे लाघवात् । अत एव स्फोटः श्रोत्रेण ग्रहीतुं न शक्यते घोत्तरटत्वादिरूपिण्या आनुपूर्व्याः श्रोत्रेण ग्रहणासम्भवात् आशुतरविनाशितया वर्णानां मेलनासम्भवात् पूर्वपूर्ववर्णसंस्काराणां तत्स्मृतीनां चान्तःकरणनिष्ठानामन्तःकरणसहकारित्वस्यैवौचित्यादिति ।

स्यादेतत् स्फोटव्यञ्जकस्यानुपूर्वीविशिष्टचरमवर्णस्यैव पदत्वमर्थप्रत्यायकत्वं वास्तु अलं स्फोटेन तद्धेतोरेव तदस्त्विति न्यायात् । एतदेव सांख्यसूत्रेणोक्तं प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्द इति । एकत्वप्रत्ययोऽप्यानुपूर्वीविशिष्टचरमवर्णस्यैकत्वेनोपपद्यते ॥

अत्रोच्यते । एवं सत्यवयव्युच्छेदप्रसङ्गः । असमवायिकारणसंयोगविशेषावच्छिन्नानामवयवानामेव जलाद्याहरणहेतुत्वकल्पनायां लाघवात् तद्धेतोरेव तदस्त्विति न्यायसाम्यात् एको घट इत्यादिप्रत्ययानामप्येकं वनमित्यादिप्रत्ययवदुपपत्तेः । अथ परमाणूनां तत्संयोगानां चातीन्द्रियतया तद्रूपत्वेऽवयविनः प्रत्यक्षानुपपत्तिरित्यादिकमवयविसाधकमिति चेत् तुल्यं स्फोटे

ऽपि आनुपूर्व्याः क्षणाद्यतीन्द्रियघटिततया आनुपूर्वीविशिष्टचरमवर्णात्मकत्वे पदस्य प्रत्यक्षानुपपत्तिरित्यादिकं स्फोटसाधकमिति । अपि च स्फोटशब्दोऽस्माभिः श्रुतिप्रमाणेनैव स्वर्गादिवत् कल्प्यते इत्यतस्तत्र लौकिकप्रमाणाभावे ऽपि न क्षतिः ॥

तथाहि प्रणवस्याकारोकारमकाररूपमात्रात्रयं ब्रह्मादिदेवतात्रयात्मकमुक्त्वा प्रणवं देवतात्रयातिरिक्तपरब्रह्मात्मकं चतुर्थमात्रां श्रुतय आमनन्ति । सा चतुर्थी मात्रा वर्णत्रयादतिरिक्तः स्फोट एव सम्भवति सैव चार्द्धमात्रेत्युच्यते राशिवदविभक्तयोर्वर्णपदयोर्वर्णा एकमर्द्धं पदं चान्यदर्द्धमित्युपपद्यते । यथा चावयवेभ्यो विविच्यावयवी न व्यवहार्यो भवति एवमेव प्रत्येकवर्णेभ्यो विविच्य पदमुच्चारयितुं न शक्यत इति। अतः स्मर्यते "अर्द्धमात्रा स्थिता नित्या यानुच्चार्या विशेषत"इति ॥

ननु स्यादेवमर्द्धमात्रोपपत्तिः । नादबिन्दोस्तु किं स्वरूपम् उच्यते । प्रणवे उच्चार्यमाणे शङ्खनादवेणुनादादिवद्यः स्वरविशेषो भवति स नादः या च नादस्योपरमावस्था अतिसूक्ष्मा सा शून्यतुल्यतया बिन्दुरुच्यत इति । तस्मादवयवेभ्योऽवयवीव वर्णेभ्योतिरिक्तं पदं तदेव स्फोट इति सिद्धम् । नन्वेवं वाक्यमपि स्फोटः

स्यादिति चेन्न बाधकाभावे सतीष्यतामिति दिक् ॥

शब्दस्तावत् यथोपदेष्टृपुरुषवाक्यलक्षणः इन्द्रो देवराडित्यादिः । अर्थापत्तिसम्भवाभावैतिह्यप्रतिभोपमानानि यदि प्रमाणानि तर्ह्यत्रैवान्तर्भाव्यानि न पृथक् । प्रकृतिपुरुषौ विद्यमानावपि नोपलभ्येते सूक्ष्मत्वात् यथाकाशे धूमोष्मनीहारपरमाणवः सन्तोऽपि नोपलभ्यन्ते । महदादिकार्यदर्शनेन तत्कारणमिव प्रधानमनुमीयते । त्रिगुणप्रधानजन्यं महदादिकार्यं किञ्चित्प्रकृतिसदृशं किञ्चिद्विकृतिसदृशं लोके उभयथा पुत्ररूपकार्यदर्शनात् । तच्च कार्यं सत् नासत् न सदसत् नानिर्वचनीयम् अत्यन्तासत्त्वे सिकताभ्योऽपि तैलमुत्पद्येत । अन्यौ च पक्षौ विरुद्धावेव अव्यक्तसञ्ज्ञं प्रधानं स्वतन्त्रं व्यापि नित्यं च व्यक्तसञ्ज्ञं कार्यमस्वतन्त्रमव्यापि अनित्यं च । पुरुषः स्वतन्त्रो व्यापी नित्यश्च । त्रयाणां लोकानां कारणं प्रधानं तच्चैकं लाघवात् । प्रलयकाले महदादिकार्यं प्रधाने लीयते । तच्च प्रधानं सत्त्वरजस्तमोमयम् । गुणत्रयसाम्यावस्था प्रकृतिः । प्रधानमचेतनं पुरुषस्तु चेतनः । व्यक्तप्रधानविलक्षणः शुद्धो गुणरहितः । कार्यस्य सुखदुःखमोहजनकत्वेन तत्र कारणीभूतानि सत्त्वरजस्तमांसि अनुमेयानि । दृष्टं च

यथाक्रमं भर्तृसपत्नीविटेषु सुखदुःखमोहजनकत्वं कामिन्याः । त्रिगुणमये ऽपि कार्ये यदा सत्त्वमुद्रिक्तं भवति जनादृष्टात् तदा रजस्तमसी अभिभूय स्वकार्यं सुखं जनयति । एवं यदा रज उद्रिक्तं भवति तदा सत्त्वतमसी अभिभूय स्वकार्यं जनयति दुःखम् । एवं यदा तम उद्रिक्तं भवति तदा सत्त्वरजसी अभिभूय स्वकार्यं मोहं जनयति ॥

दुःखं त्रिविधम् आध्यात्मिकाधिभौतिकाधिदैविकभेदात् । तथाहि तत्र आध्यात्मिकं द्विरूपं शारीरं मानसं चेति । शारीरं तावत् वातपित्तश्लेष्मविपर्ययकृतं ज्वरातीसारादि । मानसं तु प्रियवियोगाप्रियसंयोगादिजम् । आधिभौतिकं तु चतुर्द्धाभूतग्रामनिमित्तं पशुपक्षिमृगमनुष्यसरीसृपदंशयूकामत्कुणस्थावरेभ्यो जरायुजाण्डजस्वेदजोद्भिज्जेभ्यो जायते । दिवः प्रभवति तद्दैवं तदधिकृत्य यज्जायते तदाधिदैविकं शीतोष्णवातवर्षाशनिपातजम् । समुदिततन्तवः पटमिव गुणसमुदायात्मकं प्रधानम् महदादिकार्यं जनयति । एकरसमपि यथा आकाशसलिलं वाप्यादौ पतितं सत् वाप्यादिसंश्लेषात् रसान्तरमापद्यते तथा एकरूपादपि प्रधानाद्देवादयः क्रमेण सुखिनो दुःखिनो अत्यन्तमूढाश्च भवन्ति । तथा सत्त्वोत्कट्याद्रजस्तमसोरौदासीन्याद्देवाः

अत्यन्तं सुखिनः। रजस औत्कट्यात् सत्त्वतमसोरौदासीन्यान्मनुष्याः अत्यन्तं दुःखिनः। तमस औत्कट्यात् सत्त्वरजसोरौदासीन्यात्तिर्यञ्चः अत्यन्तं मूढाः। महदादिसङ्घातः भोक्तृसापेक्षः भोग्यत्वात् पर्यङ्कवत्। महदादिसङ्घः पराधीनः अचेतनत्वात् मालावत्। एवं पुरुषोऽनुमीयते। स च नाना जन्ममरणकरणानां प्रत्येकं भेदात्। अयमर्थः। एकस्य मरणे सर्वे म्रियेरन् यद्येक एव आत्मा स्यात् एकस्य च जन्मनि सर्वे जायेरन् एकस्य करणवैकल्ये सर्वे करणवैकल्यवन्तः स्युः। न चैवं दृश्यते तस्मान्नाना। पञ्चविंशतितत्त्वगोचरसम्यग्ज्ञानात् पुरुषस्य कैवल्यं भवति। तच्चान्यत्वं प्रधानादिभेद इति यावत्। अविवेकात् संसारः विवेकात् कैवल्यम्। अर्थतः अख्यातिवादाङ्गीकारः। अत एव इदं रजतमिति ज्ञानं न भ्रमः किंतु स्वरूपतः अर्थतश्च अविविक्तं ज्ञानद्वयम्। यस्य यादृशमिदं रजतमिति रजतज्ञानविषयीभूतं तस्य तादृशमेव जगदिति निर्णयः॥

अत एव वस्तुतस्तात्त्विकोऽन्यथाभावः परिणाम इत्येव लक्षणलक्षितः परिणामोऽङ्गीकृतः स च पुरुषः प्रतिशरीरं नानेत्यवादि स्म अविकारित्वात्। वस्तुतोऽकर्त्ता मुक्तवत् साक्षिवदुदासीनः। सत्त्वरजस्तमांसि कर्तॄणि क-

र्माण्यपि भवन्ति। अकर्त्तापि पुरुषः कर्त्तेव व्यवह्रियते । अचोरश्चोरैः सह धृतश्चोर एव । गुणाभेदात् प्रकृतिः कर्त्री न पुरुषः । दर्शनशक्तिमतः क्रियाशक्तिरहितस्य पुरुषस्य प्रधानेन सह संयोगः महदादिभूतपर्यन्तं प्रधानं द्रष्टुम् । दर्शनशक्तिरहितस्य क्रियाशक्तिमतः प्रधानस्यापि पुरुषेण संयोगः मोक्षार्थं पुरुषस्य भिन्नत्वेन व्यक्ताव्यक्तपुरुषज्ञाने जाते प्रधानस्य मोक्षो भवति। नित्यसुखोपलब्धिर्मोक्ष इति चेदुपलब्धेरपि नित्यानित्यविवेकग्रस्तत्वादसारम् ।न च नित्यसुखगोचरस्याविद्यादियत्किञ्चिदावरणभङ्ग एव पुरुषार्थो वाच्यः सुखानुभवस्यैव पुरुषार्थत्वाच्चैतन्यनित्यत्वेनावरणस्यापि असम्भवाच्च । मोक्षे परमानन्दश्रुतिस्मृतयस्तु मोक्षशास्त्रपरिभाषामात्रा ।

दुःखमेवास्ति न सुखं यस्मात् तदुपलभ्यते ।
दुःखार्त्तस्य प्रतीकारे सुखसञ्ज्ञा विधीयते ॥
दुःखं कामसुखापेक्षा सुखं दुःखात्ययः स्मृतः ॥

इत्यादिस्मृतिभिर्दुःखनिवृत्तिरेव सुखत्वेन परिभाषिता । सांख्यसूत्रमपि दुःखनिवृत्तिर्गौण इति विमुक्तिप्रशंसा मन्दानामिति च । आनन्दावाप्तिस्तु गौणमोक्षो ब्रह्मलोके भवति इति पश्चात् कृतार्थयोः प्रधानपु-

रुषयोर्वियोगो भवति अन्धपङ्गुसंयोगवत् । तथाहि एकः पङ्गुरपरश्चान्धः द्वावप्येतौ दुष्टे पथि गच्छन्तौ महता सार्थेन सह दैवाद्बन्धुभिः परित्यक्तौ यथायोगं गमनशक्तिदर्शनशक्तिराहितौ दर्शनार्थं गमनार्थं च संयुक्तौ भवतः । तथा चान्धेन पङ्गुः स्कन्धमारोपितस्तद्दर्शितमार्गेणान्धो याति पङ्गुश्चान्धस्कन्धारूढः सन् याति । पश्चात् स्वस्वदेशप्राप्त्यनन्तरं कृतार्थौ सन्तौ वियुक्तौ भवतः । तथा च प्रधानं पुरुषस्य मोक्षं कृत्वा निवर्त्तते । पुरुषो न प्रवर्त्तते नापि निवर्त्तते । द्रष्टा भोक्ता च पुरुषः । भोगश्चिदवसानता लक्षणः । न क्रियावेशात्मा स च पुरुषः अनाद्यविवेकात् संसरति । सच्छास्त्रश्रवणेन गुर्वनुग्रहेण च निर्विचिकित्सो विवेकज्ञाने जाते मुच्यते । प्रकृतिपुरुषसंयोगात् संसारः सञ्जायते । स्त्रीपुरुषसंयोगादपत्यमिव प्रकृतेर्महत्तत्त्वं जायते । महत्तत्वादहङ्कारो जायते । स च त्रिविधः वैकारिको भूतादिस्तैजसश्च । यो हि वैकारिकः स एव सात्त्विकः यो भूतादिः स एव तामसः । यो हि तैजसः स एव राजसः तत्र वैकारिकादहङ्कारादेकादशेन्द्रियाणि तदभिमानिन्यो देवताश्च जायन्ते । भूतादेश्चाहंकारात् तन्मात्राणि जायन्ते तैजसादहंकारादेकादशेन्द्रियगणस्तन्मात्रपञ्चकं च जायते । एतद्रूप-

द्वयस्य यथासंख्यं वैकारिकाद्भूतादेश्चाहंकाराज्जातत्वात् कथं पुनरुत्पत्तिरुच्यत इति चेच्छृणु ।

यदा रजस्तमसी अभिभूय सत्त्वगुण उत्कटो वैकारिकसञ्ज्ञां लभमानोऽहंकारोऽप्रवृत्तिधर्मा तैजसाहंकारं सहायीकृत्य प्रवृत्तिधर्माण्येकादशेन्द्रियाणि जनयति तदा तानि स्वसाहाय्यच्छलमधिगम्य तैजसस्वरूपेणापि कृतानीत्युच्यते । यदा च सत्त्वरजसी अभिभूय तमोगुणोत्कटो भूतादिस्तैजसाहंकारस्य रूपं सहायीकृत्य तन्मात्रपञ्चकं प्रवृत्तिधर्मकं करोति तदा तत्तन्मात्रपञ्चकं स्वसाहाय्येनैव तैजसेनापि कृतमित्युच्यते तस्मात् प्रवृत्तिधर्मकात् तत्तन्मात्रपञ्चकाद् भूतपञ्चकमुत्पद्यते । एष परिणामक्रमः । वैकारिकादेकादशेन्द्रियाणि भूतादेस्तन्मात्रपञ्चकमिति ॥

अयमर्थः । वैकारिकस्य भूतादेश्च स्वस्वप्रवृत्तिधर्मककार्यद्वयस्य यथासंख्यं जनने तैजसाहंकारस्य साहाय्यम् । तैजसाहंकारस्य साहाय्यकरणादेव एतद्गणद्वयलक्षणककार्यस्य प्रवृत्तिधर्मकत्वम् । बुद्धिजनकानीन्द्रियाणि बुद्धीन्द्रियाणि तानि चक्षुःश्रोत्रघ्राणरसनत्वगिन्द्रियाणि । तेषां च विषयाः रूपशब्दगन्धरसस्पर्शाः । कर्म कुर्वन्तीति कर्मेन्द्रियाणि तानि च वाक्पाणिपादपायूपस्थानि ।

तेषां च विषयाः वागवदनादानगमनोत्सर्गानन्दाः । मनो बुद्धीन्द्रियं कर्मेन्द्रियं च यतो बुद्धीन्द्रियाणां वृत्तिं संकल्पयति कर्मेन्द्रियाणां च अत उभयात्मकं मनः । मनोऽपि विभु धर्माधर्मवासनाश्रयतः प्रतिपुरुषमन्तःकरणं नित्यमाकाशवत् । न च प्रकृतिधर्मा एव सन्त्वदृष्टादय इति वाच्यम् अन्यनिष्ठादृष्टादिभिरन्यत्र सुखदुःखाद्युत्पादेऽतिप्रसङ्गात् । तच्च नाणु संभवति योगिनां सर्वावच्छेदेन एकदाखिलसाक्षात्कारासम्भवात् । न च योगिनां योगजधर्म एव प्रत्यासत्तिः स्यात् संयोगसंयुक्तसमवायादिलौकिकप्रत्यासत्त्यैवोपपत्तौ सन्निकर्षान्तरकल्पने मानाभावात् गौरवाच्च अन्योन्यव्यभिचाराच्च । साक्षात्कारेष्ववान्तरजातिकल्पने जातिसाङ्कर्यात् अतिगौरवाच्च । योगिमते सर्वार्थग्रहणसमर्थस्यान्तःकरणस्य तमआख्यावरणभङ्ग एव योगजधर्मादिभिः क्रियते सुषुप्तौ तमसो वृत्तिप्रतिबन्धकत्वसिद्धेरिति नाप्यन्तःकरणं मध्यमपरिमाणमात्रं सम्भवति प्रलये विनाशेनादृष्टाद्याधारतानुपपत्तेः अतः परिशेषतोऽन्तःकरणं विभ्वेव सिध्यति तदुक्तं ।

चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतमं विद्धि चिदाकाशं वरानने ॥

स्यादेतत् । अन्तःकरणस्य विभुत्वे परिच्छिन्नवृत्तिलाभस्यावरणेनोपपत्तावपि लोकान्तरगमनादिकं नोपपद्यते । अत एव सांख्यसूत्रम् "न व्यापकं मनः करणत्वा"दिति । तद्गतिश्रुतेरिति वेति किं चैवं सति लाघवात् चैतन्यस्यैवावरणकल्पनमुचितं किमर्थं विभ्वन्तःकरणं परिकल्प्यते तत्र ज्ञानप्रतिबन्धकमावरणं कल्प्यते ॥

अत्रोच्यते । गतिश्रुतिस्तावत् आत्मनीवान्तःकरणेऽपि प्राणेन्द्रियाद्युपाधिनोपपद्यते कार्यकारणरूपेणान्तःकरणद्वैतात् । कार्यान्तःकरणस्य स्वतोऽपि गतिरुपपद्यते कार्यकारणरूपेणान्तःकरणद्वैतं च सांख्यैरप्येष्टव्यम् केवलकार्यत्वेन्तःकरणधर्मत्वं धर्मादीनामिति सांख्यसूत्रानुपपत्तेः । केवलनित्यत्वे च महदाद्युत्पत्तिसूत्रानुपपत्तेः यत्तूक्तं चैतन्यस्यैवावरणकल्पनं युक्तमिति तदयुक्तम् । कूटस्थचैतन्यस्य ज्ञानप्रतिबन्धरूपावरणासम्भवात् । न च चैतन्यस्यार्थसम्बन्ध एव प्रतिबिम्बादिरूपे प्रतिबन्धकं कल्पनीयमिति वाच्यम् एवमप्यात्मदर्शनानुपपत्तेः करणद्वारं विना स्वस्मिन् प्रतिबिम्बादिरूपेण स्वस्वसम्बन्धासम्भवात् । अपि च इच्छाकृत्याद्याधारतयान्तःकरणे सिद्धे स्वप्नादावन्तर्दृश्यमानघटादयोऽपि तस्यैव परिणामाः कल्प्यन्ते कार्यकारणयोः सामानाधिकरण्यौ-

चित्यात् । एवं च घटाद्याकारपरिणताश्चैतन्ये भासन्ते तदविभागेनैव बाह्यघटादिकं भासते ऽतस्तादृशपरिणामप्रतिबन्धकमेवावरणं तत्रैव युक्तं किञ्च बाह्यकरणस्यावरणदर्शनेनान्तरावरणस्यापि करणनिष्ठत्वं चानुमीयते आत्मनो ऽनावृतत्वं श्रुतिस्मृतिभ्यां चेति ।

ननु अन्तःकरणस्य विभुत्वे सति कथं कार्यत्वं स्यादिति चेन्न विभ्व्या अपि आकाशप्रकृतेः कार्याकाशरूपपरिच्छिन्नपरिणामवद् गुणान्तरसम्भेदेनान्तःकरणप्रकृतेरपि परिच्छिन्नान्तःकरणरूपपरिणामोपपत्तिः श्रुतिस्मृतिप्रामाण्याच्चैतदिष्यत इति दिक् ॥

मनसः सङ्कल्पो विषयः । एतान्येकादश वैकृताहंकाराज्जातानि इत्यत्रादि स्मैव बुद्धिप्रतिबिम्बितमर्थं पुरुष उपलभते । तदुक्तं बुद्धिस्थमर्थं पुरुषश्चेतयते । अहं धर्मं करिष्यामीत्यध्यवसायो बुद्धेर्लक्षणम् । धर्मो ज्ञानं विरागः ऐश्वर्यमेतत् सात्त्विकबुद्धेः । तद्विपरीतमविरागादि तामसम् ॥

पञ्चविंशतितत्त्वैरेव जगद्व्याप्तं न न्यूनैर्नाधिकैश्च वत्सविवृद्धिनिमित्तं क्षीरस्येव अज्ञस्यापि प्रधानस्य पुरुषमोक्षार्थं प्रवृत्तिरुचितैव । लिङ्गशरीरं तु बुद्ध्यहंकारमनोबुद्धीन्द्रियकर्मेन्द्रियपञ्चतन्मात्राणामष्टादशानां समु-

दायः त्रयोविंशतितत्त्वमध्ये पञ्चभूतानि वर्जयित्वा अहंकारं च बुद्धौ प्रवेश्य सप्तदशकं लिङ्गशरीरसञ्ज्ञं भवति वह्नेरिन्धनवदात्मनोऽभिव्यक्तिस्थानत्वात् । तच्च सर्वपुरुषाणां सर्गादावुत्पद्य प्राकृतप्रलयपर्यन्तं तिष्ठति तेन चैवेह लोकपरलोकयोः संसरणं जीवानां भवति । प्राणश्च बुद्धेरेव वृत्तिभेद इत्यतो न लिङ्गशरीरात् पृथङ् निर्दिश्यते तस्य च लिङ्गशरीरस्य सूक्ष्माणि पञ्च भूतानि आश्रयश्चित्रादिवदाश्रयं विना परमसूक्ष्मस्य लोकान्तरगमनासम्भवात् ॥

इदं च लिङ्गशरीरमादौ स्वयंभुव उपाधिभूतमेकमेव जायते तस्यैव विराडाख्यवक्ष्यमाणस्थूलशरीरवत् ततश्च व्यष्टिजीवानामुपाधिभूतानि व्यष्टिलिङ्गशरीराणि तदंशभूतानि ततो विभज्यन्ते । पितुर्लिङ्गशरीरात् पुत्रलिङ्गशरीरवत् । तदुक्तं सूत्रकारेण । व्यक्तिभेदः कर्मविशेषादिति मनुनाप्युक्तम् ।

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् ।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥ इति ।

षण्णामिति षडिन्द्रियं समस्तलिङ्गशरीरोपलक्षकम् तथा च स्वयम्भूः स्वलिङ्गशरीरावयवान् सूक्ष्मानल्पान् आत्ममात्रासु स्वांशचेतनेषु संयोज्य सर्वप्राणिनः ससर्जेत्यर्थ इति लिङ्गशरीरम् । स्थूलशरीरोत्पत्तिस्तु दश-

गुणितमहत्तत्त्वमध्ये ऽहंकारस्तस्यापि दशगुणितस्य मध्ये व्योम्नोऽपि दशगुणितस्य मध्ये वायुर्वायोरपि दशगुणितस्य मध्ये तेजस्तेजसोऽपि दशगुणितस्य मध्ये जलं जलस्यापि दशगुणितस्य मध्ये पृथिवी समुत्पद्यते सैव च स्थूलशरीरस्य वीजं तदेव च पृथिवीरूपं वीजमण्डरूपेण परिणमते तस्यापि दशगुणिताण्डरूपस्य पृथिव्यावरणस्य मध्ये चतुर्दशभुवनात्मकं स्वयम्भुवः स्थूलशरीरं तत्संकल्पादेवोत्पद्यते तेनैव शरीरेण स्वयम्भुर्नारायण इत्युच्यते । तदुक्तं मनुना स्वयम्भुवं प्रकृत्य ।

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् यज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥
स वै शरीरी प्रथमः सवै पुरुष उच्यते ।
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥
इत्यादिनेति ।

तत एव चादिपुरुषात् व्यष्टिपुरुषाणां विभागादन्ते च तत्रैव लयात् स एव चैक आत्मेति श्रुतिस्मृत्योर्व्यवह्रियते

अतो न व्यवहारपरतया नारायण एव सर्वभूतानामात्मेत्यादिश्रुतिस्मृतिविरोध इति । ततश्च स नारायणो विराट्शरीरी स्वनाभिकमलकर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखाख्यं स्वयम्भुवं सृष्ट्वा तद्द्वारान्यानपि व्यष्टिशरीरिणः स्थावरान्तान् ससर्ज तदुक्तम्—

तच्छरीरसमुत्पन्नैः कार्यैस्तैः कारणैः सह ।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः ॥ इति ।

यत्तु शेषशायिनो नारायणस्य नाभिकमलश्रोत्रचक्षुरादिभ्यश्चतुर्मुखस्याविर्भावः श्रूयते तद्दैनन्दिनसर्गेष्वेव कल्पभेदेन मन्तव्यम् । दैनन्दिनप्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाविर्भावः शेषशायिनः सकाशात् घटते न त्वादिसर्गेषु दैनन्दिनप्रलय एव लीलाविग्रहेण शयनादिति ॥

तदेवं संक्षेपतश्चतुर्विंशतितत्त्वानि तेषां सृष्टिक्षयं प्रयोजनं चोक्तम् । तत्र यद्यस्माज्जायते तस्य तदाऽऽपूरणेनैव स्थितिः ततस्तस्य संहारोऽपि तत्रैव भवति । तथा च भारते ।

यद्यस्माज्जायते तत्त्वं तच्च तत्र प्रलीयते ।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ॥ इति ।

एते च सृष्टिस्थितिसंहाररूपाः स्थूला एव परिणामाश्च-तुर्विंशतितत्त्वानां कूटस्थपुरुषविवेकाय प्रदर्शिताः सूक्ष्मा अप्यन्ये प्रतिक्षणपरिणामा एतेषां स्मर्यन्ते ।

नित्यदाह्यङ्गभूतानि भवन्ति न भवन्ति च ।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यते ॥ इति ।

अतस्तु सर्वं जडवस्तु परमार्थतः सर्वदैवासदुच्यते । ततश्च तस्माद्विरज्य आत्मैव परमार्थसत्यो दुःखभीरुभिर्द्रष्टव्यः तदुक्तम् ।

अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहंकारविटप इन्द्रियाङ्कुरकोटरः ॥
महाभूतप्रशाखश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः शुभाशुभफलोदयः ॥
आजीवः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एतज्ज्ञात्वा च तत्त्वेन ज्ञानेन परमासिना ॥
कृत्वा चाक्षरतां प्राप्य जहाति मृत्युजन्मनी ॥ इति

तदुक्तं—

इन्द्रियाणीन्द्रियार्थाश्च नोपसर्पन्त्यतः खलु ।
हीनश्च करणैर्देही न देहं पुनरर्हति ॥
तस्मात्सर्वात्मकाद्रागाज्जायन्ते सर्वजन्तवः ॥ इति

नरकादौ विशेषरागाभावे ऽपि सामान्यराग-

सत्त्वाद्रागस्य कर्मसहकारित्वं विपाकारम्भे तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्येति श्रुतावभिमानरागद्वेषादिजन्यस्य विषयवासनाख्यसङ्ग-सामान्यस्यैव जन्मादिविपाकारम्भे सहकारित्वसिद्धेः ।

यत्रयत्र मनो देही धारयेत् सकलं धिया ।
स्नेहाद् द्वेषाद् गुणाद्वापि याति तत्तत्सरूपताम् ॥
इति स्मृतेः ।
सोऽथ प्रतिनिवृत्ताक्षो गुरुदर्पणबोधितः ।
स्वतोऽन्यां विक्रिया मौढ्यादस्थितामञ्जसैक्षत ॥
अथासौ प्रकृतिर्नाहमियं हि कलुषात्मिका ।
शुद्धबुद्धस्वभावोऽहमिति त्यजति तां विदन् ॥
एवं देहेन्द्रियादिभ्यः शुद्धत्वेनात्मनि स्मृते ।
निखिला सविकारेयं त्यक्तप्राया हि चर्मवत् ॥

नन्वनात्मन्यात्मबुद्धिरूपा या ऽविद्या तस्याः कथमात्मविशेष्यकविवेकज्ञाननाश्यत्वं प्रकारादिभेदादिति चेत् न तादृशाविद्याया अनात्मविशेष्यकविवेकद्वारेणात्मविशेष्यकविवेकनाश्यत्वादिति । यच्च योगेन निर्विकल्पकमात्मज्ञानं जायते तद्विवेकज्ञानद्वारैव मोक्षकारणं भवति न तु साक्षात् । अविद्यानिवर्तकत्वाभावात् अहं गौरः कर्त्ता सुखी दुःखीत्यादिज्ञानमेव ह्य-

विद्या संसारानर्थहेतुतया श्रुतिस्मृतिन्यायसिद्धा तस्याश्च निवर्त्तिका नाहं गौर इत्यादिरूपा विवेकख्यातिरेव भवति समाने विषये ग्राह्याभावत्वप्रकारकग्राह्याभावज्ञानत्वेनैव विरोधात् अन्यथा शुक्तिनिर्विकल्पकस्यापि इदं रजतमिति ज्ञानविरोधित्वापत्तेः । किञ्च यथोक्ताभावज्ञाने ग्राह्यज्ञानविरोधित्वस्यावश्यकतया निर्विकल्पज्ञानस्य भ्रमनिवर्तकत्वं न पृथक् कल्प्यते गौरवात् ॥

अपि च अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्तीत्यादिश्रुत्या विवेकोपदेशापेक्षयोत्तम उपदेशो नास्तीत्युच्यते ॥

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥

इति गीतावाक्यैश्च विवेकज्ञानस्यैव मोक्षहेतुत्वमुच्यते ऽतो विवेकज्ञानमेव साक्षादविद्यानिवृत्त्या मोक्षहेतुः । योगेन केवलात्मसाक्षात्कारस्तु योग्यानुपलब्धिविधयोपाध्यादिगतधर्माभावमुपाध्यादिभेदं च ग्राहयति ततो ऽविद्यानिवृत्तिरिति । एतेन सर्वभूतेषु समताज्ञानम् आत्मनः सर्वात्मकत्वादिज्ञानं च श्रुतिस्मृत्योर्गीयमानं विवेकज्ञानस्यैव शेषभूतं सर्वदर्शनेषु मन्तव्यम् । ज्ञानान्तराणा साक्षादभिमानानिवर्तकत्वात् ब्रह्ममीमांसायां स्वयं वि-

शेषो यत्परमात्मविवेकशेषत्वम् । सांख्यशास्त्रे तु सामान्यात्मविवेकशेषत्वमिति दिक् ॥

विवेकख्यातेरत्वविद्यानाशकत्वमेव न तु शुक्तिरजतविवेकदर्शिन इव पुनर्भ्रमदर्शनात् प्रतिबन्धकत्वं दृष्टान्ते पटलकामादिदोषबाहुल्यात् पुनरुज्जीवनं भ्रमस्य । अत्र च अनात्मन्यात्माभिमाने ऽनादिवासनैव दोषः सर्वास्तिकसंमतः जातमात्रस्याभिमाने दोषान्तरानुपलब्धेः सा मिथ्याज्ञानवासना यदा विवेकख्यातिपरम्पराजन्यदृढवासनयोन्मूलिता तदैव विवेकसाक्षात्कारनिष्ठोच्यते तत्पूर्वमवश्यं वासनालेशतो मिथ्यांशस्य कस्याप्यात्मनि भानात् तस्यां च विवेकख्यातिनिष्ठायां जातायां न पुनरभिमानः सम्भवति वासनाख्यदोषाभावादिति । यदि तु बुद्धिपुरुषयोरन्योन्यप्रतिबिम्बनादिकमविवेककारणं दोष इष्यते तदा तु तं दोषं बाधित्वैव विवेकसाक्षात्कार उदित इति न तस्य पुनर्भ्रमहेतुत्वं फलबलेन योगजधर्मासहकृतस्यैव तस्य दोषत्वकल्पनासम्भवादिति । यद्यपि विवेकप्रतियोगिपदार्थानामानन्त्याद्विशेषरूपेण विवेकग्रहो न सम्भवति तथापि दृश्यत्वपरिणामित्वादिरूपैः सामान्यविवेकग्रहसम्भवात् प्रकृत्यादिपदार्थानां विशिष्टज्ञानाभावे ऽपि सामान्यतो

विवेकख्यातेर्मोक्षहेतुत्वम् । तदुक्तम् ।

घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा ।
देहद्रष्टा तदा देही नाहमित्यादिरूपतः ॥ इति ।

आत्मा वा अरे द्रष्टव्य इत्यत्र तु न आत्मनो दृश्यत्वं वृत्तिव्याप्यत्वे ऽपि फलव्याप्यत्वरूपं यत्तु बौद्धैरपि सुखदुःखादिमत्त्वेनापि बुद्धिरनुभूयमाना स्वप्रकाशतया चैतन्यव्याप्या न भवति यथा वेदान्तिनामहमित्यनुभूयमानो ऽप्यात्मा चैतन्याख्यफलव्याप्यो न भवतीत्युच्यते तन्निःप्रमाणत्वादुपेक्ष्यम् । तत्प्रधानादिसर्गे उत्पद्यते । अधर्मवशात् पश्वादौ धर्मवशाद्देवादौ संसरति । अतत्त्वज्ञानादेव धर्माधर्मोपरञ्जितं प्रलयकाले प्रधाने लीयते । यद्यपि प्रधानपुरुषौ विभू तथापि प्रकृतिरेव लिङ्गव्यवस्थां करोति । लिङ्गं सूक्ष्मैः परमाणुभिस्तन्मात्रैरुपचितं मानुपादिषु व्यवतिष्ठते नटवत् यथा नटः स्वरूपेण एकोपि वेषान्तरेण नानारूपः तथा लिङ्गमुदरान्तः प्रविश्य हस्ती स्त्री पुमानिति भवति पञ्चविपर्ययसंज्ञा भवति यथा तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति । धर्मेण प्राजापत्याद्यूर्ध्वलोकप्राप्तिः । अधर्मेण पश्वादिप्राप्तिरज्ञानेन बन्धः पञ्चविंशतितत्त्वज्ञानेनापवर्गः । तच्च तत्त्वज्ञा-

नं गुरोः सकाशात् शास्त्रश्रवणेनैतादृशं जायते । तथाहि प्रधानादन्यः पुरुषः अन्या बुद्धिः अन्योऽहंकारः अन्यानि तन्मात्राणि इन्द्रियाणि पञ्चमहाभूतानि चेति । सर्वं कार्यं त्रिगुणात्मकमपि उद्रिक्तगुणापेक्षया सात्त्विकादिशब्दव्यपदेशभाक् चेतनः पुरुषः नानायोनिषु जरामरणकृतं दुःखं चेतयते प्राप्नोतीत्यर्थः । यावत् तत्त्वज्ञानेन लिङ्गशरीरं न निवर्त्तते तावत् स्थूलं शरीरं प्रतिजन्म नूतनं जायते नश्यति च । स्वप्रयोजनाभावेऽपि प्रत्युपकारनिरपेक्षं सुमित्रवत् प्रधानं महदादिविषयभूतपर्यन्तं कार्यं पुरुषस्य भोगाय मोक्षाय चारभते प्रकृतिः पुरुषस्य भेदेन बुद्ध्यहंकारादि दर्शयित्वा निवर्त्तते । यथा नर्त्तकी शृङ्गारादिरसैर्हास्यादिभावैश्च निबद्धगीतादीनि रङ्गस्य दर्शयित्वा निवर्त्तते कृतार्थत्वात् तद्वत् । किञ्च प्रकृतिर्गुणवती अगुणस्य पुंसः जगद्योनिभावेन सुखदुःखमोहात्मकेन शब्दादिविषयभावेन वेत्त्येवंविधैरुपकारैरनुपकारिणः पुरुषस्योपकुर्वती पश्चादात्मानं प्रकाश्य अहमन्या त्वमन्य इति निवर्तते सुमित्रवत् आत्मनः प्रत्युपकारं नेच्छति ।

सर्गस्य नेश्वरः कारणं न स्वभावो न कालः कालोऽपि योगिनां क्षणरूप एव न तु न्यायवैशेषिकयो-

रित्वात्मवदखण्डो नित्य एको लाघवात् स एव तत्तदुपा-ध्यवच्छिन्नः सन् क्षणमुहूर्तादिवत्सरान्तं व्यवहारं करोतीति । न तु क्षणनामा पृथक् पदार्थोऽस्तीति ॥

साङ्ख्यैस्तु दिक्कालावाकाशादिभ्य इति सूत्रितं महाकालो वा क्षणादिर्वा पृथक् पदार्थो नास्ति किन्त्वाकाशमेवोपाधिभिर्विशिष्टं क्षणादिमहाकाला-न्तव्यवहारं कुरुते इति मन्यते । तदेतन्मत-द्वयमप्यसमञ्जसमित्याह योगी स्थिरेण केनाप्युपा-धिना महाकालाकाशाभ्यां क्षणव्यवहारस्यासम्भवात् । तथाहि उत्तरदेशसंयोगावच्छिन्ना परमाण्वादिक्रिया अन्यद्वा एतादृशं किञ्चिन्महाकालाकाशयोः क्षणरूप-तायामुपाधिः परैरिष्यते तत्र उक्तं संयोगविशिष्टक्रियादिकं चेत् विशेष्यविशेषणतत्सम्बन्धमात्रं तर्हि त्रयाणामपरैः स्थिरत्वाभ्युपगमात् न तैः क्षणव्यवहारः सम्भवति यदि च तत्तेभ्योऽतिरिक्तमिष्यते न तु तन्महाकाल आ-काशं वा तेनैव क्षणव्यवहारोपपत्तौ तदवच्छिन्नस्यान्यस्य क्षणव्यवहारहेतुत्वकल्पनावैयर्थ्यात् स च विशिष्टादि-रास्थिरः क्षणः प्रकृतेरेवातिभङ्गुरः परिणामविशेष इत्यतो न प्रकृतिपुरुषातिरिक्तत्वापत्तिः । तस्यैव क्षणस्य प्रच-यविशेषैर्मुहूर्ताहोरात्रादिर्हिपरार्द्धान्तव्यवहारो भवति न

त्वखण्डो महाकालोऽस्ति प्रमाणाभावात् अद्यत्वादिव्यवहारः क्षणप्रचयेनैव कालनित्यत्वश्रुतिस्मृतयस्तु प्रवाहनित्यतापरा इति तस्मादावश्यकत्वात् क्षणात्मक एव कालो नाखण्डो महाकालोऽस्ति नाप्याकाशं कालव्यवहारहेतुरिति किं तु प्रधानम्। पुरुषो न बध्यते न मुच्यते नापि संसरतीति किं तु नानाश्रया प्रकृतिरेव तथेति सर्वं समञ्जसम्(१) ॥

इति कान्यकुब्जश्रीऋषिमानन्ददीक्षितविरचितं
सांख्यतत्त्वविवेचनं समाप्तम् ॥

---

(१) अत्रादर्शपुस्तके समाप्तिसूचकं पुष्पिकादिवाक्यं नास्ति किन्तु अतः परं कश्चित् पाठोऽपि नास्तीति ग्रन्थसमाप्तिरनुमीयत इति। इदं पुस्तकं च ग्रन्थकर्तुरेवेति भूमिकायां निरूपयिष्यते ॥

# अथ तत्त्वयाथार्थ्यदीपनम् ।

श्रीभावागणेशविरचितम् ।

---

श्रीकृष्णचन्द्राय नमः ॥

पुरुषः स जयत्याद्यः सा च प्रकृतिरीश्वरी(१) ।
याभ्यां संसृज्य सृज्यन्तेऽनन्तब्रह्माण्डकोटयः ॥ १ ॥
कपिलासुरिपञ्चशिखान् गुरून् विज्ञानाचार्यवर्यांश्च ।
प्रणमामि बुद्धिवृद्ध्यै सिद्ध्यै वा सर्वकार्याणाम् ॥ २ ॥
समाससूत्राण्यालम्ब्य व्याख्यां पञ्चशिखस्य च ।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनम् ॥ ३ ॥

तत्र तावद्विविक्तपुरुषज्ञानं मोक्षसाधनमिति । येभ्यो विवेक्तव्यो यश्च विवेचनीयः तदुभयं सूत्रत्रयेणोद्दिशति(२) ।

अष्टौ प्रकृतयः । प्रकर्षेण कुर्वन्तीति प्रकृतयः । तत्त्वान्तरारम्भकत्वं प्रकृतित्वमिति सामान्यलक्षणम् । ताश्च अव्यक्तबुद्ध्यहंकार(३)पञ्चतन्मात्ररूपाः । तत्राव्यक्तं नि-

---

(१) प्रकृतिः सा जायत्यजा—पा० १ पु० ।

(२) लक्षणपरीक्षादिकं तु सांख्यप्रवचनेनैव कर्त्तव्यमित्याचार्याशयः ।

(३) महदहङ्कार—पा० २ पु० ।

त्यं शब्दादिगुणशून्यं सत्त्वादिगुणत्रयं च। साम्यावस्थोपलक्षिता गुणाः प्रकृतिरित्येकं लक्षणं च। अकार्या गुणा इत्यपरम् । तथा प्रकृतिपर्याया अव्यक्तं प्रधानं ब्रह्म अक्षरं क्षेत्रं तमः माया ब्राह्मी विद्या अविद्या प्रकृतिः शक्तिः अजा इत्यादयः । सत्त्वादिगुणवती सत्त्वाद्यतिरिक्ता प्रकृतिरिति तु न शङ्कनीयम्। किन्तु गुण एव प्रकृतिः । सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वादिति सांख्यप्रवचनसूत्रेण सत्त्वादीनां प्रकृतिस्वरूपत्वहेतुना प्रकृतिधर्मत्वप्रतिषेधात। प्रकृतेर्गुण इत्यादिवाक्यं तु वनस्य वृक्षा इतिवद् बोद्धव्यम् । "सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणा" इति प्रकृतिकार्यत्ववचनं तु गुणनित्यतावाक्यविरोधेन महत्तत्त्वकारणीभूतकार्यसत्त्वादिपरमेव । महदादिसृष्टिर्हि गुणवैषम्याच्छ्रूयते तच्च वैषम्यं सजातीयसंवलनेन प्रकाशादिफलोपहितः सत्त्वादिव्यवहारयोग्यः कारणगुणानां परिणाम इति। एतेनाष्टाविंशतितत्त्वपक्षोऽप्युपपादितो मन्तव्यः। सत्त्वादित्रयं च द्रव्यत्वेऽपि पुरुषोपकरणत्वाद् गुणा इत्युच्यन्ते। द्रव्यत्वं चैषां संयोगविभागादिमत्तया उपादानकारणत्वेन सिद्धम् । एषां सुखदुःखमोहात्मकत्वप्रवादस्तु धर्मधर्म्यभेदात । मनसः संक-

रूपात्मकत्ववत् । तानि च सत्त्वादीनि प्रत्येकं संख्याव्यक्तिकानि लघुत्वादिधर्मैरन्योन्यं साधर्म्यं वैधर्म्यं च गुणानामिति सांख्यप्रवचनसूत्रात् । अत्र हि सूत्रे लघुत्वादिना बहूनां सत्त्वानां साधर्म्यं तेनैव रजस्तमोभ्यां वैधर्म्यम् । एवं च लघुत्वादिना बहूनां रजसां गुरुत्वादिना बहूनां तमसां साधर्म्यवैधर्म्ये उक्ते इति । तेषु त्रित्ववचनं तु सत्त्वत्वादिविभाजकोपाधित्रयेणैव वैशेषिकाणां नवद्रव्यवचनवदिति । तानि च सत्त्वादीनि यथोपयोगमणुविभुपरिमाणकानि । मध्यमपरिमाणत्वे ऽनित्यत्वापत्तिः । सर्वेषां विभुत्वे कार्याणां परिच्छिन्नत्वानुपपत्तिः । आकाशप्रकृतेर्विभुत्वस्यैवौचित्यात् । ननु प्रकृतेश्चापरिच्छिन्नत्वैकत्वाक्रियत्वमिति सांख्यसिद्धान्तः । स च विरुध्यत इति चेत् मैवम् गन्धस्य पृथिवीव्यापकत्ववत्प्रकृतेर्व्यापकत्वम् । तच्च प्रकृतित्वस्य दैशिकाभावप्रतियोगितानवच्छेदकत्वम् । एकत्वं च सर्गभेदेन नानात्वाभावः । अक्रियत्वं चाध्यवसायाभिमानादिप्रतिनियतक्रियाराहित्यम् । अन्यथा श्रुतिस्मृतिसिद्धप्रकृतिक्षोभस्यानुपपत्तेरिति । प्रकृत्यनुमानं चेत्थं(१) महदादिकार्यं पक्षः सुखदुःखमोहात्मकद्रव्यकार्यमिति

(१) चेदं—पा० १ पु० ।

साध्यं कार्यत्वे सति सुखदुःखमोहात्मकत्वादिति हेतुः वस्त्रादिकार्यशय्यासनवदिति दृष्टान्तः । श्रुतिस्मृती चात्रानुग्राहकस्तर्कः ॥

ननु सुखस्यान्तरेवानुभवात् शय्यासनादौ सुखे किं प्रमाणं येन दृष्टान्तता स्यादिति चेन्न कारणगुणा हि कार्यगुणानारभन्ते इति न्यायेन विषयेषु त्रिगुणकार्येषु सुखदुःखमोहसिद्धेः घटरूपमिति(१) प्रत्ययवत् चन्दनसुखं स्त्रीसुखमित्यादिसुखप्रत्ययादपि विषये सुखाद्युचितं सुखदुःखोत्पादकत्वाच तद्गतमेव सुखदुःखादिकं सिध्यति अन्तःकरणसुखादिहेतुतयापि विषये सुखादिकं सिध्यति । कालादिभेदैरेकस्या एव स्त्र्यादिव्यक्तेः सुखदुःखोत्पादकत्वाच्च तद्गतमेव सुखदुःखादिकं सिध्यति ॥

इति मूलप्रकृतिनिरूपणम् ॥

अथ बुद्धिर्निरूप्यते । त्रिगुणात्मकमाद्यं कार्यं बुद्धिरित्येकं लक्षणम् । निश्चयवृत्तिकमन्तःकरणं बुद्धिरिति द्वितीयं लक्षणम् । तस्या धर्मज्ञानवैराग्यैश्वर्याख्यप्रकृष्टगुणयोगात् महत्सञ्ज्ञा तदपि तृतीयं लक्षणम् । तस्याः पर्यायाः । मनो मतिर्महान् ब्रह्मा पूर्बुद्धिर्वृत्तिः ख्यातिः प्रज्ञा सन्ततिः स्मृतिरिति । अनुस्मृतौ च ।

(१) पटरूपमिति—पा० २ पु० ।

महानात्मा मतिर्विष्णु(१)र्जिष्णुः शम्भुश्च वीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ब्रह्मा धृतिः स्मृतिः ॥
पर्यायवाचकैरेतैर्महानात्मा निगद्यते ।
सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः ॥
सर्वतः श्रुतिमाँल्लोके सर्वं व्याप्य स तिष्ठति(२) ।
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः ॥
विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत ।
विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुः ॥ इति ।

इदमेव महत्तत्त्वमंशतो रजस्तमःसम्भेदेन परिणतं सत् व्यष्टिजीवानामुपाधिरधर्मादियुतं क्षुद्रमपि भवति । महदुपरागाद्विपरीतमिति सांख्यप्रवचनसूत्रात् । महदहंकारमनस्त्रितयात्मकस्यान्तःकरणवृक्षस्य महत्तत्त्वमङ्कुरावस्थेति । अत्र प्रकृतेर्महानित्यादिसृष्टिक्रमे शास्त्रमेव प्रमाणम् । इदमेव महत्तत्त्वं कार्येश्वरस्य स्वयम्भुव उपाधिस्तेनैवोपाधिना स सर्वज्ञः सर्वेश्वरः सर्वकर्त्ता सर्वपालकः सर्वसंहर्त्ता च । मात्स्ये ।

सविकारात् प्रधानात् तु महत्तत्त्वमजायत ।
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥

---

(१) मनुर्विष्णुः–पा० २ पु० ।
(२) सर्वमावृत्य तिष्ठति–पा० २ पु० ।

गुणेभ्यः क्षोभमाणेभ्यस्त्रयो देवा विजज्ञिरे ।
एका मूर्त्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥ इति ।

स च स्वयम्भूः क्रियाशक्तिमत्केवलमहत्तत्त्वोपाधिकः सूत्रात्मेत्युच्यते । स एवार्द्धसुषुप्तावर्द्धलयात् प्राज्ञ इत्युच्यते । समग्रसुषुप्तौ तु समग्रलयेन निर्विशेषचिन्मात्रस्वरूपेणावस्थानादीश्वर इत्युच्यते श्रुतिस्मृतिपुराणेषु स च महांस्त्रिधा तदुक्तं वैष्णवे ।

सात्त्विको राजसश्चैव तामसश्च त्रिधा महानिति ।

ब्रह्मशङ्करोपक्षयाप्यादौ विष्णुरेवाविर्भवतीत्यर्थेनोक्तम् । पूर्वोक्तधर्मादिषु धर्मेणोर्ध्वगमनमूर्ध्वगमनेन भोगस्थानान्युपलक्ष्यन्ते । तेन पातालभूस्वर्गादीनामपि संग्रहः । ज्ञानेन मोक्षः वैराग्येण प्रकृतिलयः पुरुषतत्त्वानभिज्ञस्य वैराग्यात् प्रकृतिलयो भवति । तथा चोक्तं पुराणे ।

प्रकृतिचिन्तकानधिकृत्य "पूर्णं शतसहस्रं तु तिष्ठन्ति विगतज्वरा" इति । अत्र प्रकृतिग्रहणेन महदहंकारभूतेन्द्रियाण्यपि गृह्यन्ते । तत्र वैराग्यपूर्वकं तेषु तेष्वात्मभावेनोपास्यमानेषु लयो हि प्रकृताविति च श्रूयते । पूर्ववाक्यानन्तरमेव ।

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥

बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः॥ इति च।

अयं च प्राकृतिको बन्ध इत्युच्यते योगिभिः महदादिभावश्च वैकृतिको बन्ध इति। ऐश्वर्येणाप्रतिघातः ऐश्वर्यं चाणिमादिसिद्धयः।

इति बुद्धिर्व्याख्याता॥

अहङ्कारो व्याख्यायते। महत्तत्त्वादहङ्कार उत्पद्यते अङ्कुराच्छाखावत्। तस्य चाहमाकारवृत्तिमत्त्वादहङ्कार इति संज्ञा। अहंवृत्तिमदन्तःकरणमहङ्कार इत्येकं लक्षणम्। एकादशेन्द्रियोपादानत्वं द्वितीयं लक्षणम्। तन्मात्रोपादानत्वं तृतीयं लक्षणम्। तस्य च पर्यायाः।

अहङ्कारोऽभिमानश्च कर्त्ता मन्ता च स स्मृतः।
आत्मा च प्रकुलो जीवो यतः सर्वाः प्रवृत्तयः॥ इति।

कौर्मप्रोक्ता अविशेषा इति च। स चाहङ्कारस्त्रिविधः। तदुक्तं कौर्मे।

वैकारिकस्तैजसश्च भूतादिश्चैव तामसः।
त्रिविधोऽयमहङ्कारो महतः सम्बभूव ह॥
तैजसानीन्द्रियाणि स्युर्देवा वैकारिका दश।
एकादशं मनश्चात्र स्वगुणेनोभयात्मकम्॥
भूततन्मात्रसर्गस्तु भूतादेरभवत् प्रजा॥ इति।

वैकारिकः सात्त्विकस्तैजसो राजसः । स्वगुणेन सर्वेन्द्रियेषु साहाय्यरूपेणोत्कर्षेणोभयात्मकं ज्ञानकर्मेन्द्रियोभयात्मकमित्यर्थः। इन्द्रियदेवताश्च दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकामचन्द्रश्चेति एकादश ।

इत्यहंकारनिरूपणम् ॥

अथ तन्मात्रा उच्यन्ते । शब्दस्पर्शरूपरसगन्धा निर्विशेषास्तद्वन्ति सूक्ष्मभूतानि तन्मात्राः । निर्विशेषशब्दादिगुणवद् द्रव्यं तन्मात्रा इति सामान्यलक्षणम् । अहंकारोपादानत्वे सति तत्त्वान्तरारम्भकत्वं द्वितीयं लक्षणम् । तत्तन्निर्विशेषगुणवत्त्वं तत्तन्मात्रलक्षणम् । तानि च पञ्च शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेति। शान्तघोरमूढाः पञ्चस्वपि विशेषाः शब्दत्वस्पर्शत्वादिव्याप्या जातिविशेषा एव । शब्दे तु उदात्तानुदात्तस्वरिताः निषादर्षभगान्धारषड्जमध्यमधैवताः पञ्चमश्चेति स्वराः । स्पर्शे शीतोष्णत्वे । रूपे शुक्लत्वादयो विशेषाः । ते च श्वेतपीतरक्तश्यामहरितकपिशाः । रसे मधुरत्वादयो विशेषास्ते च मधुरतिक्तकषायकट्वम्लक्षाराः षड्साः । गन्धे सुरभित्वासुरभित्वे । एतैर्विशेषै रहिता अविशेषास्तद्वन्ति द्रव्याणि तन्मात्राः । तेषां पर्यायाः

तन्मात्राणि तमोविग्रहाः सूक्ष्मविग्रहाः सूक्ष्मभूतानि अविशेषा इति ॥

इति पञ्च तन्मात्राः ॥

एवमष्टौ प्रकृतयो व्याख्याताः ॥

षोडशविकारा इति द्वितीयं सूत्रम् । एकादशेन्द्रियाणि पञ्चमहाभूतानि च एते षोडश विकाराः । तत्र श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि स्वस्वविषयकबुद्धिजनकत्वात् पञ्च बुद्धीन्द्रियाणि । वाक्पाणिपादपायूपस्थानि स्वस्वकर्मकरणात् पञ्च कर्मेन्द्रियाणि । तत्र उच्चारणं वाचः हस्तयोरादानं पादयोर्गतिः पायोरुत्सर्गः उपस्थस्यानन्दः । सर्वसहायत्वादुभयात्मकं मनः । एतान्येकादशेन्द्रियाणि । तत्त्वान्तरानारम्भकत्वे सति अहंकारोपादानत्वमित्येकं(१) लक्षणम् । अहंकारोपादानकत्वे सति शरीरसंयुक्तं क्रियाकरणमतीन्द्रियमिन्द्रियमिति द्वितीयम् । अथ पर्यायाः इन्द्रियाणि करणानि निपातनानि(२) वैकारिकाणि तैजसानि ।

इतीन्द्रियनिरूपणम् ॥

अथ महाभूतानि । पृथिव्यप्तेजोवाय्वाकाशमिति ।

---

(१) अहङ्कारमात्रोपादानकत्वमिन्द्रियत्वमित्येकं—पा० २ पु० ।
(२) नियतानि—पा० १ पु० ।

सविशेषशब्दादिमत्त्वं महाभूतत्वमित्येकं लक्षणम् । तत्त्वान्तरानारम्भकत्वे सत्यारम्भकत्वं द्वितीयं लक्षणम् । सविशेषशब्दगुणवत्त्वमाकाशस्य(१) लक्षणम् । सविशेषशब्दस्पर्शवत्त्वं वायोर्लक्षणम् । सविशेषशब्दस्पर्शरूपवत्त्वं तेजसः । सविशेषशब्दस्पर्शरूपरसवत्त्वमपाम् । सविशेषशब्दस्पर्शरूपरसगन्धवत्त्वं पृथिव्याः । एतानि विशेषलक्षणानि । एतानि पञ्च महाभूतानि परस्परोपकारीणि । अथामीषां पर्यायाः । भूतानि विकारा विशेषा आकृतयः तमोविग्रहाः शान्ता घोरा मूढा इति ।

इति षोडशविकारा व्याख्याताः ।

पुरुष इति तृतीयं सूत्रम् । अनादिः सूक्ष्मश्चेतनः सर्वगतः निर्गुणः कूटस्थो नित्यो द्रष्टा भोक्ता क्षेत्रवित् अमनः प्रसवधर्मा चेति स्वरूपम् । कूटस्थनित्य इत्येकं लक्षणम् । मुख्यभोक्तृत्वमित्यपरं लक्षणम् । वृत्तिसाक्षित्वमिति तृतीयं लक्षणम् । अथ पर्यायाः पुरुष आत्मा पुमान् पुद्गलजन्तुः जीवः क्षेत्रज्ञः नरः कविः ब्रह्म अक्षरः प्राणः ज्ञः यः कः स एक इति । एवमेतानि पञ्चविंशतितत्त्वानि एत-

(१) गुणकत्वमाकाशस्य—पा० १ पु० ।

ज्ज्ञानात् कृतकृत्यो भवति । तथा चोक्तं पञ्चशिखेन प्रमाणवाक्यम् ।

पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे स्थितः ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥

स च पुरुषो नाना सुखदुःखमोहजन्ममरणबन्धमोक्षव्यवस्थातः जन्मादिव्यवस्थातः पुरुषबहुत्वमिति सांख्यप्रवचनसूत्रात्। यद्येकः पुरुषः स्यादेकस्मिन् सुखिते सर्वे सुखिताः स्युः एवं सर्वत्र एवं पुरुषबहुत्वं सिद्धम् । एवं तावत् साख्याचार्याः कपिलासुरिपञ्चशिखपतञ्जलिप्रभृतयो यस्मात् परं नापरमस्ति किञ्चिदिति न्यायवैशेषिकाश्च बहून् पुरुषानात्मत्वेन वदन्ति। औपनिषदाश्चाचार्या हरिहराहिरण्यगर्भव्यासादयः एभ्योऽतिरिक्तमेकमेव नित्येश्वरं सर्वेषामात्मानं वदन्ति। कस्मादेवं पुरुष एवेदꣳ सर्वमिति। तदेवाग्निस्तदादित्य इति। तदक्षरं तद्विभुर्वरेण्यं यस्मात् परं नापरमस्ति किञ्चित् स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च वसत्येको महानात्मा येन सर्वमिदं ततम् ।

ब्राह्मणे कृमिकीटेषु श्वपाके गवि हस्तिनि ।
पशुगोदंशमशके रूपं पश्यन्ति सूरयः ॥
एकमेव यथा सूत्रं सुवर्णे वर्त्तते पुनः ।
मुक्तामणिप्रवालेषु मृण्मये रजते तथा ॥

तद्वत् पशुमनुष्येषु तद्वद्धस्तिमृगादिषु ।
एकोऽयमात्मा विज्ञेयः सर्वत्रैव व्यवस्थितः ॥

इत्यादि प्रमाणेभ्यः । सांख्यास्तु आदिपुरुषविषयतया लयावशिष्टनिर्विशेषचिन्मात्रविषयतया वा एतानि श्रुतिवाक्यानि योजयन्ति ।

इति पुरुषनिरूपणम् ।

एवं पञ्चविंशतितत्त्वानि व्याख्यातानि ।

सांख्यकारिका च ।

मूलप्रकृतिरविकृति-
र्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो
न प्रकृतिर्न विकृतिः पुरुषः ॥ इति ।

इदानीं प्रथमसूत्रेणैव गुणात्मकप्रकृतेरुद्दिष्टत्वेऽपि गुणानामवान्तरविभागं तद्धर्मांश्च विवेचयितुं वक्ष्यमाण-सञ्चरप्रतिसञ्चरोपोद्घातसङ्गत्या(१)च सूत्रं प्रवर्त्तते ।

त्रैगुण्यमिति चतुर्थं सूत्रम् । सत्त्वरजस्तमांसि त्रयो गुणाः तेषां समाहारस्त्रिगुणं त्रिगुणमेव त्रैगुण्यम् । तत्र सत्त्वं नाम प्रकाशलाघवप्रसन्नताभिष्वङ्गप्रीतितितिक्षादिलक्षणमनन्तभेदम् समास-

(१) चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा इति ।

तः सुखात्मकम् । रजो नाम शोकतापस्वेदस्तम्भोद्वेगोन्मादादिलक्षणमनन्तभेदं समासतो दुःखात्मकम् । तमो नाम अज्ञानापुण्यदैन्यगौरवालस्यनिद्राप्रमादादिलक्षणमनन्तभेदं समासतो मोहात्मकम् । एतेषां लक्षणानि ।

सत्त्वं प्रकाशकं विद्याद्रजो विद्यात् प्रवर्त्तकम् ।
तमो लयात्मकं विद्यात्त्रैगुण्यं नाम संज्ञितम् ॥
एते त्रयो गुणाः सर्वे उत्पत्तिस्थितिलयहेतवः ॥
इति त्रैगुण्यं व्याख्यातम् ।

इदानीं सगुणनिर्गुणश्रुतिविषयोपपत्त्यर्थं सर्गादावुत्पन्नं स्वयम्भुत्वं प्रलयावशिष्टनिर्विशेषचित्सामान्यं च दर्शयितुं सृष्टिप्रलययोः सूत्रद्वयं प्रवर्तते । सञ्चरः प्रतिसञ्चरः । सञ्चरः सृष्टिः प्रतिसञ्चरः प्रलयः । तत्र सृष्टिर्यथा । अव्यक्ताख्या प्रकृतिः प्रवृत्तिस्वभावा स्वतन्त्रा च । सर्गादौ स्वयमेव क्षुब्धा सती भाविनारायणबीजभूता पूर्वकल्पे स्वयम्भूपालकेन नामकेन व्यक्तेन नारायणपुरुषेण संयुज्यते ततश्च सजातीयैरन्यैः प्रकृत्यंशैर्न्यूनाधिकभावेन मिलिता सती चेतनाचेतनात्मकं महत्तत्त्वमारभते । ननु पुरुषस्य प्रकृतिसंयोगित्वे असंयोगो ह्ययं पुरुष इति श्रुतिविरोध इति चेन्न वि-

कारहेतुसंयोगस्यैव सङ्गशब्दार्थत्वात् अन्यथा श्रुतिस्मृतिषु जलसंयोगिनोऽपि पद्मपत्त्रस्याऽसङ्गतादृष्टान्तता न स्यात् । तत्र महत्तत्वस्य स्वरूपेण मुख्योत्पत्तिः चेतनस्य तु अभिव्यक्तिरूपा कार्यता । योगभाष्ये व्यासधृतवाक्यान्नवधा कार्यता ।

उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् ॥ इति ।

एवमादिशक्तिरपि चेतनाविशेषो महत्तत्त्वकारणीभूतगुणत्रयसम्बन्धात् स्वयम्भवाप्यादावुत्पद्यते । उत्पत्तौ च प्रमाणं प्रयोगसारे ।

तस्माद्विनिर्गता नित्या सर्वगा विष्णुसम्भवा ॥ इति ।

वायवीयसंहितायां च ।

शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता ।
ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव ॥ इति ।

पञ्चरात्रे ऽपि ।

एवमालोक्य तां शक्तिं सच्चिदानन्दरूपिणीम् ।
समस्ततत्त्वसन्धामस्फूर्त्यधिष्ठानरूपिणीम् ॥
व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान् ॥ इति ।
प्रादुरासीज्जगन्माता वेदमाता सरस्वती ।
गुणत्रयमयी शक्तिर्मूलप्रकृतिसञ्ज्ञिता ॥

तस्यामहं समुत्पन्नस्तत्त्वैरेतैर्महदादिभिरित्यादिशिववाक्याच्च । सैव प्रकृत्यधिष्ठात्री देवता महालक्ष्मी अम्बा भवानी हैमवती दुर्गा इत्यादिपदैरभिलप्यते पुराणादिषु । सैव च लीलाविग्रहैरादिपुरुषेण मिलिता सती सृष्टिं पालयति । तदुक्तं शङ्कराचार्यैः ।

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि । इति ।

एवं सर्वतत्त्वानां तत्तद्देवतानां च सहैवोत्पत्तिर्ज्ञेया । उत्पत्तिक्रमस्तु निरूपणक्रमेणैव । एतस्मान्महतो गुणान्तरसंवलितात् त्रिविधोऽहङ्कार उत्पद्यते चेतनाचेतनात्मकः वैकारिको राजसस्तामसश्चेति । ततश्चाहङ्कारात् सङ्कल्पपूर्वकं देहेन्द्रियाणि पञ्च तन्मात्राणि चोत्पद्यन्ते । स्वयम्भुव इन्द्रियाणि देवतारूपाणि वैकारिकात् व्यष्टीन्द्रियाणि च तैजसात् तेष्विन्द्रियेष्वादौ मन उत्पद्यते ।

शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः ।
रूपरागात् तथा चक्षुर्घ्राणं गन्धजिघृक्षया ॥

इत्यादिना मोक्षधर्मादौ श्रोत्रादीनां मनोवृत्तिरागादिकार्यत्वश्रवणात् । इन्द्रियतन्मात्रयोश्च कार्यकारणभावस्याभावात् क्रमनियमो नास्ति । तत्रेन्द्रियेषु ना-

स्त्ववान्तरकार्यकारणभावः प्रमाणाभावात् । तन्मात्रेषु त्वस्ति स यथा अहंकाराच्छब्दतन्मात्रं तस्मादहंकारोत्पन्नाच्छब्दतन्मात्रादहंकारसहितात् स्पर्शतन्मात्रं शब्दस्पर्शोभयगुणकम् । एवं क्रमेणैकैकगुणवृद्ध्या तन्मात्रत्रयमुत्पद्यते । ततश्च तन्मात्रेभ्यः पञ्च महाभूतानि जायन्ते । तत्राहङ्कारात् पञ्चतन्मात्राणां तद्द्वारा पञ्चमहाभूतानां चोत्पत्तौ पुराणे क्रम उक्तः स यथा

भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज हि ।
आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम् ॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज हि ।
वायुरुत्पद्यते तस्मात् तस्य स्पर्शो गुणो मतः ॥

इत्यादिक्रमेणेति । नन्वेवमाकाशादिभूतचतुष्टयस्यापि तत्त्वान्तरप्रकृत्यापत्त्या केवलविकृतित्वाष्टप्रकृतित्वसिद्धान्तक्षतिरिति चेन्न आकाशादीनां स्पर्शादितन्मात्रेष्वहंकारोपष्टम्भमात्रेण कारणत्वस्य पुराणेषूक्तत्वादिति । एवं त्रयोविंशतितत्त्वानां सृष्टिः । तेषु पञ्चमहाभूतानि वर्जयित्वाहंकारं च बुद्धौ प्रवेश्य सप्तदशकं लिङ्गशरीरसञ्ज्ञं भवति । वह्नेरिन्धनवदात्मनोऽभिव्यक्तिस्थानत्वात् । तच्च सर्वपुरुषाणां स्वस्वबीजभूतप्रकृतिसंयोगात् सर्गादावुत्पद्य प्राकृतप्रलय-

पर्यन्तं तिष्ठति । तेनैव चेहलोकपरलोकयोर्जीवाना संसरणं भवति । प्राणश्च बुद्धेरेव वृत्तिभेद इत्यतो लिङ्ग-शरीरे पृथक् न निर्दिश्यते बुद्धावेवान्तर्भावात् । तस्य च लिङ्गशरीरस्य परमसूक्ष्माणि पञ्च महाभूतानि तेजः-प्रधानान्याश्रयः चित्रादिवत् आश्रयं विना लोकान्तरग-मनासम्भवात् । तदुक्तं सप्तत्याम् ।

चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया ।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ इति ।

इदं च लिङ्गशरीरमादौ स्वयम्भुवः समष्टिचे-तनस्य उपाधिभूतमेकमेव समष्टिरूपं जायते ततश्च व्य-ष्टिजीवानामप्युपाधिभूतानि व्यष्टिलिङ्गशरीराणि तदं-शभूतानि ततो विभज्यन्ते पितुर्लिङ्गशरीरात् पुत्रलिङ्ग-शरीरवत् । तदुक्तं सांख्यप्रवचनसूत्रेण । व्यक्तिभेदः कर्मविशेषादिति । मनुनाप्युक्तम् ।

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् ।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥ इति ।

षण्णामिति षडिन्द्रियं समस्तलिङ्गशरीरोपलक्ष-कम् । तथा चायमर्थः । स्वयम्भूः स्वलिङ्गशरी-रावयवान् सूक्ष्मानल्पान् आत्ममात्रासु स्वांशचेतनेषु संयोज्य सर्वप्राणिनः ससर्जेति ।

इति लिङ्गशरीरनिरूपणम् ।

अथ स्थूलशरीरोत्पत्तिः । दशगुणितमहत्तत्त्वमध्ये ऽहंकारस्तस्मिन्नपि दशगुणे व्योम तथैव व्योम्न्यपि वायुः वायावपि तेजः तेजसि दशगुणे जलं तथैव जलस्यापि दशगुणस्य मध्ये पृथिवी समुत्पद्यते सैव स्थूलशरीरस्य बीजमण्डरूपेण परिणमते । तस्यापि दशगुणितस्याण्डस्य पृथिव्यावरणस्य मध्ये चतुर्दशभुवनात्मकं स्वयम्भुवः स्थूलशरीरं तत्सङ्कल्पादेवोत्पद्यते । तेनैव शरीरेण स्वयम्भूर्नारायण इत्युच्यते । स्वयम्भुवं प्रकृत्य मनुनाऽप्युक्तम् ।

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीजमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥

इत्यादिनेति । तत एवादिपुरुषाद्व्यष्टिपुरुषाणां विभागात् अन्ते च तत्रैव लयात् स एवैक आत्मेति श्रुतिस्मृत्योर्व्यवह्रियते । ततश्च स नारायणो विराट्शरी-

री पृथिवीरूपस्वनाभिकमलकर्णिकास्थानीयस्य सुमेरो-रुपरि चतुर्मुखमवान्तरब्रह्माणं सृष्ट्वा तद्द्वारान्यानपि व्यष्टिशरीरिणः स्थावरान्तान् ससर्ज । तथा च स्मर्यते ।

तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह ।

क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः ॥ इति ।

यत्तु शेषशायिनो नारायणस्य नाभिकमलश्रोत्रचक्षुरादिभ्यश्चतुर्मुखस्याविर्भावः श्रूयते । तद्दैनन्दिनसर्गेष्वेव हि कल्पभेदेन मन्तव्यम् । दैनन्दिनप्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाविर्भावः शेषशायिनः सकाशाद् घटते न त्वादिसर्गेषु । दैनन्दिनप्रलय एव नारायणस्य लीलाविग्रहेण शयनादिति । अस्यां सृष्टौ महत्तत्त्वस्य बुद्धिपूर्वकः त्रिगुणात्मकः प्रथमः सर्गः । तदनन्तरं तदुपाधिकस्वयम्भुवः सकाशाद् बुद्धिपूर्वकः सर्गः । स्वयम्भुवोऽङ्गदेवताः स्वयम्भूश्च स्थूलदेहनैरपेक्ष्येण ज्ञानवत्त्वात् विदेहा देवा इत्युच्यन्ते । तासु स्वयम्भूरेवेश्वरः नित्येश्वरानङ्गीकारात् । देवताश्चेश्वरकोटयः अविद्यानावृतोपाधिकत्वात् । अविद्यावृतोपाधिकाश्च जीवकोटय एव । अविद्यावृतानावृतोपाधिकत्वे एव जीवेश्वरविभाजके । तदुक्तं स ईशो यद्वशे माया स जीवो यस्तयार्दित इति ।

तदेवं सञ्चरो निरूपितः ।

तत्र यद्यस्माज्जायते तस्येतरापूरणेनैव स्थितिः । तद्व्यतिरेकेणैव तत्संहारोऽपि तत्रैव भवति । तथा चोक्तं महाभारते ।

यद्यस्माज्जायते तत्त्वं तत्तत्र प्रविलीयते ।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ॥ इति ।

एते च सृष्टिस्थितिसंहाररूपाः स्थूला एव परिणामाः कूटस्थपुरुषविवेकाय प्रदर्शिताः । सूक्ष्मा अप्येषां परिणामाः स्मर्यन्ते । यथा

नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥ इति ।

अत एव सर्वं जडवस्तु परमार्थतः सर्वदैव असदुच्यते । ततश्च तस्माज्जडवर्गाद्विरज्यात्मैव परमार्थसत्यो दुःखभीरुभिर्द्रष्टव्यः । परमार्थसत्यत्वं च कूटस्थनित्यत्वम् । तत्र कूटस्थनित्यत्वासंहतत्वापरार्थत्वचिन्मात्रत्वाद्यसाधारणधर्मैरुत्कृष्टैः प्रकृत्यादिभ्यो विवेक्तव्यः । इदानीं सदेवेत्यादिश्रुत्यर्थ उपपाद्यते । प्रतिसञ्चरान्ते यन्निर्विशेषं चित्सामान्यमवशिष्यते । तदेव सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतिषु सद्ब्रह्मादिपदवाच्यम् । अद्वितीयत्वं

तु अवैधर्म्याविभागाख्याभेदेनेति । इदानीमन्तकालीन-भगवत्स्मरणस्य परमगतिहेतुत्वश्रवणात् तत्स्मरणस्य च साध्यात्मसाधिभूतसाधिदैवभगवदनुचिन्तनजन्यत्वाद-ध्यात्मादित्रिभागः प्रदर्श्यते सूत्रत्रयेण । तत्र च प्रमाणम् ।

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ इति ।
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ इति ।

अध्यात्मम् ॥७॥ अधिभूतम् ॥८॥ अधिदैवम् ॥९॥

सूत्रत्रयस्यापि क्रमेणैव व्याख्या । बुद्धिरध्यात्मम् । बोद्धव्यमधिभूतम् । ब्रह्मा तत्राधिदैवतम् । अहङ्कारोऽध्यात्मम् । अधिमन्तव्यमधिभूतम् । रुद्रस्तत्राधिदैवतम् । मनोऽध्यात्मम् । सङ्कल्पयितव्यमधिभूतम् । चन्द्रस्तत्राधिदैवतम् । श्रोत्रमध्यात्मम् । श्रोतव्यमधिभूतम् । दिशस्तत्राधिदैवतम् । त्वगध्यात्मम् । स्पर्शयितव्यमधिभूतम् । वायुस्तत्राधिदैवतम् । चक्षुरध्यात्मम् । द्रष्टव्यमधिभूतम् । सूर्यस्तत्राधिदैवतम् । रसनमध्यात्मम् । रसोऽधिभूतम् । वरुणस्तत्राधिदैवतम् । घ्राणमध्यात्मम् । गन्धोऽधिभूतम् । पृथिवी तत्राधिदैवतम् । वागध्यात्मम् । वचनमधिभूतम् । वह्निस्तत्राधिदैवतम् । पाणिरध्या-

त्मम् । आदेयमधिभूतम् । इन्द्रस्तत्राधिदैवतम्। पादावध्यात्मम् । गन्तव्यमधिभूतम् । विष्णुस्तत्राधिदैवतम् । पायुरध्यात्मम् । उत्सृष्टव्यमधिभूतम् । मित्रस्तत्राधिदैवतम् । उपस्थमध्यात्मम् । आनन्दयितव्यमधिभूतम् । प्रजापतिस्तत्राधिदैवतमिति त्रयोदशविधं त्रितयमपि । तत्रात्मानं सङ्घातमधिकृत्य वर्तते तदध्यात्मं त्रयोदशकरणवर्गः । भूतानि अधिकृत्य वर्तते तदधिभूतं विषयवर्गः । देवतामधिकृत्य वर्तत इत्यधिदैवतम् करणाभिमानिदेवतावर्गः एतत्सहितेश्वरानुचिन्तितस्यान्तकालीनभगवत्स्मृत्या परमगतिः फलम् । तस्मादेतत्त्रिकमवश्यं ज्ञातव्यमिति भावः । सर्वतत्त्वानां ज्ञानफलं चोक्तं पञ्चशिखधृतवाक्येन ।

तत्त्वानि यो वेदयते यथावद्<br>
गुणस्वरूपाण्यधिदैवतं च ।<br>
विमुक्तपाप्मा गतदोषसङ्घो<br>
गुणांस्तु भुङ्क्ते न गुणैः स भुज्यते ॥

तत्त्वानीति तान्त्रिकी संज्ञा । तदर्थश्चात्मानात्मविवेकप्रतियोग्यनुयोगिनस्तत्पदार्थाः तेषां भावस्तत्तत्पदप्रवृत्तिनिमित्तानि पुरुषत्वप्रकृतित्वादीनि पञ्चविंशतिजातयः धर्मधर्म्यभेदात् व्यक्तयोपि तत्त्वानी-

त्युच्यन्ते । वेदयते वेत्तीत्यर्थः । गुणाः सत्त्वरजस्तमांसि तान्येव स्वरूपाणि तात्त्विकरूपाणि येषां तानि गुणस्वरूपाणि अधिदैवतञ्च अध्यात्माधिभूतयोरुपलक्षणम् । गुणांस्तु भुङ्क्ते गुणास्तस्य वशे भवन्तीति । न गुणैः स भुज्यते गुणवशो न भवतीत्यर्थः ॥

इति तत्त्वपादः प्रथमः ॥

इदानीं द्वितीयः प्रकीर्णकपाद आरभ्यते । तत्र पञ्चस्रोतोम्बुं पञ्चयोन्युग्रचक्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् पञ्चावर्त्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीम इत्यादिश्रुत्यर्थोपपत्तये पञ्चकानि निरूपयति सूत्रजातेन ॥

पञ्चाभिबुद्धयः॥१०॥अभिबुद्धिरभिमान इच्छा कर्त्तव्यता क्रियेति पञ्चाभिबुद्धिसञ्ज्ञिताः । तत्राभिबुद्धिर्नाम अभिमुखी बुद्धिः इदमवश्यं करणीयमितिरूपा बुद्धिवृत्तिः । अभिमानश्चाहं करोमीतिवृत्तिः । इच्छा वाञ्छा सङ्कल्पो मानसी वृत्तिः । कर्त्तव्यता ज्ञानेन्द्रियाणा शब्दादिविषया वृत्तिः । क्रिया वचनादिलक्षणा कर्मेन्द्रियाणां वृत्तिरिति ॥

अभिबुद्धयो व्याख्याताः ॥

पञ्च कर्मयोनयः ॥११॥ कर्मजन्याः कर्मजनकाश्च

धृतिः श्रद्धा सुखाऽविविदिषा विविदिषा चेति पञ्च ॥

वाचि कर्माणि सङ्कल्पे प्रतिष्ठां योऽभिरक्षति ।
तन्निष्ठस्तत्प्रतिष्ठश्च धृतेरेतद्धि लक्षणम् ॥
अनसूया ब्रह्मचर्यं यजनं याजनं तपः ।
दानं प्रतिग्रहो होमः श्रद्धाया लक्षणं स्मृतम् ॥
अर्थार्थी यस्तु सेवेत विद्याकर्मतपांसि च ।
प्रायश्चित्तपरो नित्यं सुखेयं परिकीर्त्तिता ॥
अविविदिषा वेदवेदनेच्छाप्रतिबन्धकक्रिया ॥
विविदिषा यथा ।

एकत्वं च पृथक्त्वं च नित्यं चेदमचेतनम् ।
सूक्ष्मं सत्कार्यमक्षोभ्यं ज्ञेया विविदिषा हि सा(१) ॥

आत्मनि एकत्वपृथक्त्वादिविषयिणी जिज्ञासा विविदिषा। एतासु चतस्रो बन्धाय विविदिषैका मोक्षाय ज्ञानमोक्षप्रतिबन्धनाशककर्मजन्यत्वात्तज्जनकत्वाच्च ॥

पञ्च वायवः ॥ १२ ॥

हृदि प्राणो गुदेऽपानो व्यानः सर्वशरीरगः ।
उदानः कण्ठदेशे च समानो नाभिसंस्थितः ॥

एते पञ्च क्रियाशक्तिमदन्तःकरणवृत्तिभेदा अपि वायुसमानगतिकत्वाद्वायुदेवताकत्वाच्च वायव इत्युक्तम् ।

---

(१) विविदिषा क्रिया—पा० २ पु० ।

प्रकर्षेण अननाद्गमनात् प्राण इत्युच्यते । अधो गमनादपानः । भुक्तस्यान्नस्य रसादेर्विक्षेपणाद्विजृम्भक्षणाच्च व्यान इत्युच्यते । उद्गारत्रमनादिकं करोतीति उदानस्तेन गीयते । भुक्तस्य समांशं रसं नयतीति समानः । तन्त्रान्तरोक्ता अप्यन्ये नागकूर्मकृकलदेवदत्तधनञ्जयाख्यास्तत्रैवान्तर्भाव्याः ।

इत्येते पञ्च प्राणा व्याख्याताः ॥

पञ्च कर्मात्मानः ॥ १३ ॥ वैकारिकस्तैजसो भूतादिः सानुमानो निरनुमानश्चेति कर्मात्मानः कर्मिण इत्यर्थः । तत्र वैकारिकः शुभकर्मकर्त्ता । तैजसोऽशुभकर्मकर्त्ता । भूतादिर्मूढकर्मकर्त्ता । सानुमानः शुभमूढकर्मकर्त्ता । निरनुमानोऽशुभमूढकर्मकर्त्ता ॥

इति पञ्च कर्मात्मानो व्याख्याताः ॥

इदानीं पञ्चाशद्भेदां पञ्चपर्वामधीम इति श्रुत्यर्थोपपत्तये बुद्धेः पञ्चाशत्सर्गान् बहुभिः सूत्रैरुद्दिशति ।

पञ्चपर्वाऽविद्या ॥ १४ ॥ अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या पतञ्जल्युक्ता सर्वदर्शनसम्प्रतिपन्ना । सा च पञ्चधा अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशजनकत्वात् क्लेशा इति योगे परिभाषिताः । अस्मितादीनां चतुर्णामविद्याकार्य-

त्वादविद्यात्वम् । अस्मिता अनात्मन्यहंवृत्तिः अविद्यास्मितयोरयं भेदः अविद्यायामधिकरणमपि पृथग् भासते ऽस्मितायां त्वारोपरूपत्वेऽपि नाधिकरणं भासते । विषयेषूत्कटेच्छा रागः । द्वेषः वैरबुद्धिः । अभिनिवेशो मरणत्रासः । विदुषामपि स्वरसवाही अनादिमरणदुःखानुभवजनितवासनाजन्यः श्रुतिस्मृतिपुराणेषु एते अविद्याभेदास्तमआदिशब्दैः परिभाषिताः । तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्रश्चेति तत्तन्नामकनरकप्रदत्वात्तत्तन्नामकाः । ते च विषयभेदात् द्विषष्टिभेदाः ते यथा । अष्टप्रकृतिषु आत्मत्वारोपात् अष्टभेदं तमः । देवा अणिमाद्यष्टविधमैश्वर्यमासाद्य वयममृता इत्यभिमानिनो भवन्ति सोऽयमभिमानो मोहोऽष्टविधः । दृष्टानुश्रविकेषु द्वादशसु विषयेषु प्राप्तेषु मुक्तोऽहमिति मन्यते सोऽभिमानो रागातिशयनिमित्तत्वात् महामोहो दशविधः । अणिमाद्यष्टगुणैश्वर्ये दशविधविषये च प्रतिहतस्य क्रोधाद् यद्दुःखमुत्पद्यते स तामिस्रोऽष्टादशविधः । देवा अणिमाद्यष्टकमैश्वर्यं शब्दादींश्च दश विषयान् भुञ्जानाः क्षयशङ्कयात्र सन्ति सत्रास एवाष्टादशविधोन्धतामिस्र इति द्विषष्टिभेदा पञ्चपर्वा अविद्या ॥

अष्टाविंशतिधाऽशक्तिः ॥ १५ ॥ नवधा तुष्टिः ॥ १६ ॥

अष्टधा सिद्धिः ॥१७॥ तत्राशक्तयः एकादशेन्द्रियवधाः सप्तदश बुद्धिवधाः । तत्रेन्द्रियवधाः । स्वस्वार्थक्रिया-ऽक्षमतारूपाः फलतो बुद्धेरेव ते ।

वाधिर्यं कुष्ठितान्धत्वं जडताऽजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वं क्लैव्योदावर्त्तमुग्धताः ॥

सप्तदश बुद्धेरेव वधाः तुष्टिसिद्धीनां विपर्ययरूपाः। तत्र तुष्टिविपर्ययाः । नास्ति प्रधानमिति ज्ञानमस्ती-त्यभिधीयते । महत्तत्त्वं नास्तीति ज्ञानमज्ञानसालि-लाः । अहङ्कारो नास्तीति मोहा । नैव सन्ति पञ्च-तन्मात्राणीति दृष्टिरदृष्टिः । विषयाणामर्ज्जने प्रवृत्तिः अ-सुतारा । रक्षणे प्रवृत्तिरसुपारा । क्षयदोषमपश्यतः प्र-वृत्तिः असुनेत्रा । भोगे शक्तिः असुमात्रिका । हिं-सादोषमपश्यतो भोगे प्रवृत्तिः अनुत्तमाम्भसिका । इति तुष्टिविपर्यांया नवधा ।

सिद्धिविपर्यासाद् अष्टौ बुद्धिवधा उच्यन्ते । नानात्वमूहमानस्यैकत्वानुसन्धानं सुतारमुच्यते । शब्द-मात्रश्रवणाद्विपरीतग्रहणमसुतारा । यथा नानात्मज्ञो मुक्त इति श्रुत्वा विपरीतं प्रतिपन्नो नानात्मज्ञो-ऽहममुक्त इति । अध्ययनश्रवणनिविष्टस्यापि जडत्वा-दसच्छास्त्रोपहतबुद्धित्वाद्वा पञ्चविंशतितत्त्वज्ञानसिद्धिर्न

भवति तदज्ञानम् । यदा आध्यात्मिकेन दुःखेन-चाभिभूयते तदज्ञानप्रमादम् । एवमाधिभौतिकदुःखेनाभिभूयते तत्प्रमोदमानम् । एवमेवाधिदैविकदुःखेनाभिभवः प्रमुदितामिति । सुहृदुपदिष्टेप्यात्मनि अनिश्चयबुद्धिरनर्थकम् । स्वदानमनर्थकं ज्ञात्वा दानपात्रस्य गुरुणि दुःखे जाते प्रमोदः प्रमुदिता । एवमष्टौ सिद्धिविपर्यया व्याख्याता । एवं सप्तदश बुद्धिवधाः ॥

नवधा तुष्टिरुच्यते । तत्र कारिका ।

आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोभिहिताः ॥

कुतश्चित् सर्वाकारेण परिणममाना प्रकृतिरेव ज्ञानं करिष्यतीति श्रुत्वा या तुष्टिः सा प्रकृत्याख्या तस्या अस्तीति संज्ञा । प्रव्रज्ययैव ज्ञानं भविष्यतीति श्रुत्वा प्रव्रज्योपादानेन या तुष्टिः सा सलिलसंज्ञा । कालेनैव ज्ञानं भविष्यतीति श्रुत्वा प्रव्रज्यया बहुकालेन या तुष्टिः सा आघेत्युच्यते । भाग्येनैव ज्ञानं भविष्यति मदालसा बालकानामिवेति कुतश्चिच्छ्रुत्वा या तुष्टिः सा वृष्टिरितिसंज्ञा । एताश्चतस्र आध्यात्मिक्यः । अथ बाह्याः पञ्च शब्दादिविषयेष्वर्जनरक्षणक्षयभोगहिंसादि-दोषदर्शनाद्या निवृत्तितुष्टयस्तास्वेका तुष्टिः अपारमुच्य-

ते द्वितीया सुपारं तृतीया पारम् अनुत्तमाम्भसिका चतुर्थी उत्तमाम्भः पञ्चमी इति नव तुष्टयो व्याख्याताः ॥

अथाष्टौ सिद्धयः । तत्र कारिका ।

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥

अस्यार्थः । भगवत्कृपावशादूहनेन तर्केणैव ज्ञानमुत्पद्यते सा प्रथमा सिद्धिस्तारेत्युच्यते । शब्दश्रवणमात्रादेव यद् ज्ञानं सा द्वितीया सुतारा । शिष्यभावेनाध्ययनेन यद् ज्ञानं सा तृतीया तारतारेति । यदाध्यात्मिकदुःखस्यापनोदकं ज्ञानं सा चतुर्थी प्रमोदेति । यदाधिभौतिकदुःखापनोदकं ज्ञानं सा पञ्चमी प्रमुदितेति । यदाधिदैविकदुःखनाशकं ज्ञानं सा षष्ठी प्रमोदमाना । यत् सुहृत्संसर्गितया ज्ञानं सा सप्तमी रम्यकेति । यद्दानेन परितोषिताद् गुरोर्ज्ञानं साष्टमी सदामुदितेति । आसु प्रथमास्तिस्रो दुःखविघातात्मकानां मुख्यानां तिसृणां सिद्धीनामङ्कुश आकर्षकः साधक इति यावत् सिद्धयस्त्वेता एव । अणिमाद्यास्तु ज्ञानप्रतिबन्धकत्वादसिद्धय एवेत्याचार्याशयः । एवमष्टौ सिद्धयो व्याख्याताः ॥

इदानीं सांख्यशास्त्रस्य षष्टितन्त्रत्वप्रतिपादनाय पञ्चाशत्सु सिद्धिसर्गेषु दशान्यान् पूरयति सूत्रेण । दश मूलिकार्थाः ॥ १८ ॥

अस्तित्वमेकत्वमथार्थवत्त्वं
परार्थमन्यत्वमकर्तृता च ।
योगो वियोगो बहवः पुमांसः
स्थितिः शरीरस्य च शेषवृत्तिः ॥

मूलयोः प्रकृतिपुरुषयोरर्था धर्मा मूलिकार्थाः । तत्रास्तित्वं द्वयोर्धर्मः । एकत्वं सर्गभेदेन नानात्वाभावरूपं प्रकृतेः । अर्थवत्त्वं पुरुषार्थत्वं पुरुषस्यैव । पारार्थ्यं च प्रकृतेरेव । अन्यत्वं जडवर्गाद् भिन्नत्वं पुरुषस्यैव । अकर्तृता च पुरुषस्यैव । योगो वियोगश्च द्वयोः । बहुत्वं पुरुषस्यैव । जीवन्मुक्तस्य संस्कारमात्रेण चक्रभ्रामिवच्छरीरस्य या स्थितिः सा शेषवृत्तिः पुरुषस्य । इति दशपदार्थाः प्रत्ययसर्गाख्याः पञ्चाशत् पूर्वोक्ताः एते च दश मूलिकाः । एवं षष्टिपदार्था षष्टितन्त्रे उक्ताः ॥

इदानीं पञ्चतन्मात्रसर्गं सूत्रयति । अनुग्रहसर्गः ॥ १९ ॥ पञ्चतन्मात्रा अनुगृह्योपादानकारणत्वेन स्वीकृत्य यः सर्गः सोऽनुग्रहसर्गः ।

पञ्चानां ब्राह्मणानां सचतुर्मुखसनकादीनां स्वस्य लीलाविग्रहे सर्गो भक्तानामनुग्रहार्थं सोऽप्यनुग्रहसर्गः पञ्चतन्मात्रेभ्य एव ॥

इदानीं भूतसर्गमाह । चतुर्दशविधो भूतसर्गः ॥ २० ॥ ब्राह्मप्राजापत्यसौम्यैन्द्रगान्धर्वयक्षराक्षसपैशाचा इत्यष्टौ देवसर्गाः । पशुपक्षिमृगसरीसृपस्थावरा इति पञ्चविधास्तैर्यग्योनयः । मानुषश्चैकविधो ब्राह्मणादिश्चाण्डालान्त इति । गवादिमूषकान्ताः पशवः । गरुडादिमशकान्ताः पक्षिणः । सिंहादिशृगालान्ता मृगाः । शेषादिदुन्दुभान्ताः सरीसृपाः । पर्वतादितृणान्ताः स्थावरा इति । अत्र कारिका ।

अष्टविधो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।

मानुषश्चैकविधः समासतो भौतिकः सर्गः ॥ इति

एतत्संसारमण्डलम् अन्यानप्यनुक्तान् सर्गानुद्दिशति सूत्रत्रयेण । त्रिविधो बन्धः ॥ २१ ॥ त्रिविधो मोक्षः ॥ २२ ॥ त्रिविधं प्रमाणम् ॥ २३ ॥ प्राकृतिको वैकृतिको दाक्षिण इति त्रयो बन्धाः । प्राकृतोऽष्टप्रकृतिष्वभिमानरूपः । द्वितीयस्तु प्रव्रजितानामपि शब्दादिषु मनसः सङ्गः । तृतीयस्तु गृहस्थादीनां कामोपहतचेतसां दक्षिणां ददतां दक्षिणाबन्धः । उक्तं च पञ्चशिखाचार्यैः ॥

प्राकृतेन तु बन्धेन तथा वैकारिकेण च ।
दक्षिणाभिस्तृतीयेन बद्धो जन्तुर्विवर्तते ॥ इति
मोक्षत्रैविध्यं चोक्तम् ।
आदौ तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात् ।
कृच्छ्रक्षयात् तृतीयस्तु व्याख्यातं मोक्षलक्षणम् ॥

ज्ञानोद्रेकादविद्यानिवृत्तिरूप एकः रागसंक्षयादिन्द्रियोपशमरूपो द्वितीयः कृच्छ्रक्षयाद्धर्माधर्माकरणरूपाद्धर्माधर्मानुत्पादरूपस्तृतीयः । एतत्त्रयं ज्ञानद्वारभूतत्वाद् गौणं मोक्षत्रयम् । आत्यन्तिकत्रिविधदुःखनिवृत्तिरेव मुख्यो मोक्षः । तदुक्तं गोतमेन सूत्रेण दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति ।

उक्तानां पदार्थानां सिद्ध्यर्थं प्रमाणान्याह मानाधीनत्वान्मेयसिद्धेः । त्रिविधं प्रमाणमिति । प्रत्यक्षानुमानशब्दा इति । तत्रानधिगतयथार्थज्ञानं प्रमा तत्करणं प्रमाणमिति सामान्यलक्षणमेकम् । अर्थाकारानधिगतयथार्थान्तःकरणवृत्तिरिति द्वितीयम् । तत्र प्रत्यक्षमिन्द्रियजन्यमनधिगतयथार्थज्ञानं प्रत्यक्षप्रमा । तत्करणं प्रत्यक्षप्रमाणम् । इन्द्रियजन्यानधिगतयथार्थान्तःकरणवृत्तिरिति द्वितीयम् । यथार्थलिङ्ग-

ज्ञानाज्जायमानं ज्ञानमनुमितिस्तत्करणमनुमानमित्येकम्। लिङ्गज्ञानाज्जायमाना साध्यविशिष्टपक्षाकारान्तःकरणवृत्तिरिति द्वितीयम्। आप्तवचनजन्यज्ञानं शब्दप्रमा तत्करणं शब्दप्रमाणमित्येकं लक्षणम । आप्तवचनजन्या पदार्थसंसर्गाकारान्तःकरणवृतिरिति द्वितीयं शब्दप्रमाणलक्षणम् ।

आप्तस्तु स्वकर्मण्यभियुक्तो रागद्वेषरहितो ज्ञानवान् शीलसम्पन्नः । इदं तु ज्ञानोपदेष्टुरेवाप्तलक्षणम् वस्तुतो यथाभूतार्थस्योपदेष्टा पुरुष इत्येव ॥

उक्तपदार्थेषु केचित्प्रत्यक्षसिद्धाः केचिदनुमानसिद्धाः। उभाभ्यां यन्न सिद्धं तच्छब्दप्रमाणेन सिध्यति यथेन्द्रो देवानां राजा उत्तराः कुरवः सौवर्णो मेरुः स्वर्गेप्सरसः एते पदार्था न प्रत्यक्षानुमानगम्याः किन्तु शब्दैकगम्याः ।

अत्र चैषा ज्ञानप्रक्रिया। अन्तःकरणस्येन्द्रियाणा चाविभक्तः सङ्कोचविकासशाल्यग्रभागो वृत्तिरभ्युपेयते भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति सांख्यप्रवचनसूत्रात्। भागो विभक्तोवयवस्तस्माद्गुणाच्च तत्त्वान्तरं पदार्थान्तरमविभक्तोऽवयव इत्यर्थः। तथा चान्तःकरणवृत्तिरिन्द्रियवृत्तिद्वारार्थसन्निकृष्टा भवति तत

इन्द्रियवृत्त्या सहार्थाकारा परिणमते सा चार्थाकारा वृत्ति-र्गुणरूपा सर्वात्मनां विभुत्वेपि स्वस्वामिन्येवात्मनि प्रति-बिम्बते नान्यत्र अबादिस्वस्वामिभावस्य प्रतिबिम्बनियामकत्वात् अन्यथातिप्रसङ्गात् प्रतिबिम्बश्चाधिष्ठानगताया बुद्धेर्विकारः परिणामः स्वत्वं च स्वामिप्रकाशितवृत्ति-जन्यसंस्कारवत्त्वम् । स्वामित्वं च स्वनिष्ठसंस्कारजनक-वृत्तिप्रकाशकत्वं सा च वृत्तिरात्मनि स्थिता सती अर्था-कारा आत्माकारा च स्वसमानाकारं परिणामान्तरं धत्ते स एवात्मनि वृत्तिप्रतिबिम्बो विषयताख्यः सम्बन्ध इति तदवच्छिन्नं चैतन्यं प्रत्यक्षप्रमा घटमहं जानामी-त्याकारार्थात्मविषयिणी तदुक्तम् ॥

अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना ।
तथानुभवमात्रात्मा दृश्येनात्मावलोक्यते ॥

दृश्येन वृत्त्या । इयं च प्रत्यक्षा वृत्तिर्विषयदेशे जायमाना तत्रैवात्मनि प्रतिबिम्बते आत्मनो विभुत्वात् यत्र चेन्द्रियद्वारं विना मनः स्ववासनावशाद्यत्रार्थेन सम्बध्यते तत्र तदाकारा वृत्तिर्मानसं प्रत्यक्षम् । उक्तं च ।

शरीरलयमुत्सृज्य यत्र चित्तविहङ्गमः ।
स्ववासनावशाद्याति तत्रैवात्मानुभूयते ॥

इति वासिष्ठे ।

इति प्रत्यक्षप्रक्रिया ॥

एवं व्याप्तिप्रमाजन्यसाध्यविशिष्टपक्षाकारा वृत्तिरनुमानम् तत्प्रतिबिम्बावच्छिन्नचैतन्यमनुमितिः । इत्यनुमानप्रक्रिया ॥

यथार्थपदस्मृतिजन्या पदार्थसंसर्गाकारा वृत्तिः शब्दप्रमाणम् तत्प्रतिविम्बावच्छिन्नचैतन्यं शाब्दी प्रमा इदं प्रमाणद्वयमान्तरमेव । अपरोक्षत्वं परोक्षत्वं स्मृतित्वं संशयत्वं विपर्ययत्वं प्रमात्वमप्रमात्वं च सर्वे वृत्तिधर्मा एव तत्प्रतिविम्बवशाच्चैतन्येप्युपचर्यन्ते तत्रापरोक्षत्वपरोक्षत्वस्मृतित्वानि जातयः संशयश्च भासमानविरोधोभयकोटिस्पृग्वृत्तिः । यत्र यन्नास्ति तत्र तन्निश्चयो विपर्ययः यथार्थवृत्तिः प्रमा अयथार्थवृत्तिरप्रमा अत्र प्रमात्रादित्रिभागविषये विज्ञानाचार्याणां कारिका ।

प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव च ।<br>
प्रमार्थाकारवृत्तीनां चेतने प्रतिबिम्बनम् ॥<br>
प्रतिविम्बितवृत्तीनां विषयो मेय उच्यते ।<br>
वृत्तयः साक्षिभास्याः स्युः करणस्यानपेक्षणात् ॥<br>
साक्षाद्दर्शनरूपं च साक्षित्वं सांख्यसूत्रितम् ॥ इति ।

ज्ञानस्य च जन्यत्वं विनाशित्वमात्मधर्मत्वं

च प्रतिबिम्बावच्छिन्नत्वेनोपपादनीयम् आत्मरूपस्य ज्ञानस्य नित्यत्वात् । विशिष्टे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाध इति न्यायात् । आधाराधेयभावोऽपि खे खगोदय इनिवदुपपादनीयः वृत्तीनामात्मनि प्रतिबिम्बे प्रमाणम् ।

तस्मिंश्च दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥

इति वासिष्ठम् । इति समासतो ज्ञानप्रक्रिया ॥

अत्र शास्त्रेऽनुक्ताः स्वाऽविरोधिनः शास्त्रान्तरीया अपि पदार्था ग्राह्याः सारादानं षट्पदवदिति सांख्यप्रवचनसूत्रात् । सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पद इति स्मृतेश्च । एते च प्रकृत्यादयः पदार्थाः संहतत्वपदार्थत्वजडत्वप्रतिक्षणपरिणामित्वादिदोषैर्दुष्टत्वाद्धेयास्तेभ्योप्यधिकं हेयमाह ।

त्रिविधं दुःखमिति ॥२४॥ आध्यात्मिकमाधिभौतिकमाधिदैविकं चेति । तत्राध्यात्मिकं द्विविधं शारीरं मानसं च । तत्र शारीरं वातपित्तश्लेष्मणां वैषम्येणोत्पन्नं ज्वरातिसारादि । कामक्रोधलोभादिजन्यं मानसं मानुषमृगसर्पादिजन्यमाधिभौतिकं शीतोष्णवातवृष्टिजन्यमाधिदैविकम् । अनेन त्रिविधदुःखेनाभिभूतस्य तरति शोक-

मात्मवित्‌ इति श्रुत्वा आत्मनि जिज्ञासा जायते। यथा तृषितस्य पानीयपिपासा।

कृतस्य तत्त्वनिरूपणस्य पुरुषार्थसम्बन्धं दर्शयति। एतत्परं याथार्थ्यम् एतज्ज्ञात्वा कृतकृत्यः स्यान्न पुनस्त्रिविधदुःखेनाभिभूयते ॥ २५ ॥ एतद्याथार्थ्यं परं शास्त्रान्तरोक्ताद्याथार्थ्यादुत्कृष्टं न्यायवैशेषिकोक्तयाथार्थ्यस्याष्टप्रकृत्यकथनादपूर्णत्वम् इदं तु तत्कथनेन पूर्णं श्रुतिसम्मतत्वाच्च परं सर्वोत्कृष्टमित्यर्थः। श्रुतिश्च गोपालतापनीये एकमेवाद्वितीयं ब्रह्मासीत् तस्मादव्यक्तादव्यक्तमेवाक्षरं तस्मान्महन्महतोऽहङ्कारस्ततः पञ्चतन्मात्राणि तेभ्यो भूतानि इति स्पष्टमेव सांख्ययोगोक्तमहदादिक्रमेण सृष्टिः श्रूयत इति। एतज्ज्ञात्वा आत्मानात्मविवेकसाक्षात्कारद्वारा कृतकृत्यः स्यान्निष्प्रयोजनः स्यादित्यर्थः। किं पुनस्तत्प्रयोजनं तत्राह। न पुनस्त्रिविधदुःखेनाभिभूयत इति। पूर्वोक्तत्रिविधदुःखेन न युज्यते दुःखात्यन्तनिवृत्तिरूपो मोक्षो भवतीत्यर्थः। ननु दुःखं तावत् त्रिविधम् अनागतं वर्तमानमतीतं चेति। सांख्ययोगवेदान्तानां सत्कार्यवादाश्रयणात् सर्वमेव कार्यमवस्थात्रयेण नित्यम्। अनागतो घटो वर्त्तमानो घटोऽतीतो घट इ-

त्यवस्थात्रयेऽपि घटस्यावस्थाधर्मिणोऽनुगतप्रत्ययात् । प्रागभावप्रध्वंसयोश्चानङ्गीकारात् । न च तत्काले कथमभावप्रत्यय इति वाच्यम् वर्त्तमानप्रतियोगिकसामयिकात्यन्ताभावेनैव तदुपपत्तेरिति । एवं चानागतातीतदुःखयोरभावेऽपि न पुरुषार्थः भोग्यदुःखाभावस्यैव पुरुषार्थत्वात् । वर्तमानदुःखं च भोग्यमपि भोगेनैव नङ्क्ष्यतीति तदभावो न पुरुषार्थः पुरुषप्रयत्ननिरपेक्षत्वात् पुरुषप्रयत्नसापेक्षस्यैव पुरुषार्थत्वात् । तथा. च कथं दुःखाभावस्य पुरुषार्थत्वमिति चेदुच्यते । अनागतदुःखस्य भोग्यहेतुतया तदभावस्य च पुरुषकृतिसाध्यतया पुरुषार्थत्वं दुःखहेतूच्छेदे पुरुषव्यापारात् प्रायश्चित्तवदिति । तदुक्तं पतञ्जलिना । हेयं दुःखमनागतं विवेकख्यातिरविप्लवा हानोपाय इति सूत्रद्वयेन ।

साख्यानां च सर्वात्मनामवैधर्म्याभेद एव तत्त्वमसिवाक्यार्थो नाविभागादिः तदज्ञानस्यैवाभिमाननिवर्त्तकत्वात् । तद्वाक्यस्य च श्वेतकेतोरनूचानत्वाद्यभिमाननिवृत्त्यर्थमेव प्रवृत्तेः तथा च त्वयावशिष्टचित्सामान्यं तत्पदार्थः तदुक्तं विज्ञानाचार्यवर्यैरस्मद्गुरुभिर्भाष्याद्यश्लोकेन ।

एकोऽद्वितीय इति वेदवचांसि पुंसि
सर्वाभिमानविनिवर्तनतोस्य मुक्त्यै ।
वैधर्म्यलक्षणभिदा विरहं वदन्ति
नाखण्डतां ख इव धर्मशताविरोधात् ॥ इति ।

तथा च प्रकृत्यादिविविक्तसर्वात्मनामवैधर्म्यभेदसाक्षात्कारात् कर्तृत्वाद्यभिमाननिवृत्तौ तत्कार्यरागद्वेषधर्माद्यनुत्पादात् पूर्वोत्पन्नकर्मणां(१) चाविद्यारागादिसहकार्युच्छेदेन जन्माद्यनारम्भकत्वाद्भोगेन प्रारब्धसमाप्त्यनन्तरं पुनर्जन्माभावेन भोगापवर्गसमाप्त्या चान्तःकरणस्य नाशेनैव त्रिविधदुःखात्यन्तनिवृत्तिरूपो मोक्षो भवतीति परमकृतकृत्यता । इदं चात्रावधेयम् । गुरूपदेशशास्त्राभ्यामुत्पन्नमपि ज्ञानमपरोक्षत्वायाभ्यसनीयमेव । तेन विनाऽपरोक्षाविद्यानिवृत्त्यसम्भवात्(२) । अपरोक्षभ्रमे हि समानविशेष्यकाऽपरोक्षविपरीतनिश्चयस्यैव निवर्तकत्वावधारणात् तदुक्तं वासिष्ठे ।

अपि विज्ञाततत्त्वेन नेत्यभ्यस्यमिदं सदा ।
न नाममात्रात् कतकफलमम्बुप्रसाधकम् ॥

---

(१) पूर्वोक्तकर्मणां—पा० १ पु० ।
(२) अपरोक्षज्ञानं विना परोक्ष्याविद्यानिवृत्त्यसम्भवात्–पा० १ पु० ।

अन्तर्ध्वान्तविनाशाय शाब्दबोधो न हि क्षमः ।
न नश्यति तमो राम कृतया दीपवार्तया ॥ इति ।

एवमभ्यासात् कोमलकण्टकन्यायेन ज्ञाने जाते योगारूढ इत्युच्यते योगी अस्मात् पूर्वस्तु युञ्जानः ततः परमहंसाश्रमेण विक्षेपकाणि कर्माणि त्यक्त्वा ज्ञाननिष्ठापर्यन्तमभ्यसेत् । सवासनाविद्योच्छेदो ज्ञाननिष्ठा । ततः स युक्तो जीवन्मुक्तो गुणातीत इति चोच्यते । गुणाभिमानशून्यत्वमेव गुणातीतत्वं जीवन्मुक्तस्य च लक्षणम् ।

नोदेति नास्तमायाति सुखदुःखे मुखप्रभा ।
यथापूर्वस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥
रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदस्वच्छः स जीवन्मुक्त उच्यते ॥
एतावदेव खलु लिङ्गमलिङ्गमूर्त्तेः
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य ।
तज्ज्ञस्य यन्मदनकोपविषादमोह-
लोभापदामनुदिनं निपुणं तनुत्वम् ॥ इति ।

अन्यच्चात्र सांख्यविद्यायां भगवद्भक्तेरेवासाधारणकारणत्वं ज्ञेयम् अन्यथा देवकृतविघ्नैर्योगध्वंसो(१) भवत्येव यथोक्तं भागवते ।

(१) योगभ्रंशो–पा० १ पु० ।

येऽन्येऽरविन्दाक्ष विमुक्तमानिन-
स्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥
श्रेयःश्रुतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूलतुषावघातिनाम् ॥ इति ।

इदानींतनाः केचन वैष्णवा एतादृशवाक्यैर्भगवद्भक्तिं पुरस्कृत्य सामान्यतो ज्ञानमार्गं खण्डयन्ति ते तु विद्याविवेकानभिज्ञाः स्थूलमतय एव । नारदीये च सांख्यविद्याधिकारे ।

मायाप्रवर्तके विष्णौ कृता भक्तिर्दृढा नृणाम् ।
सुखेन प्रकृतेरन्यं स्वं दर्शयति दीपवत् ॥
चित्ते हि स्ववशे योगः सिध्येत् तत्तु जगत्पतिम् ।
कोऽनाश्रित्य निगृह्णीयादव्यक्तमतिचञ्चलम् ॥
तस्मान्मुमुक्षोः सुसुखो मार्गः श्रीविष्णुसंश्रयः ।
चित्तेन चिन्तयानेन वञ्च्यते ध्रुवमन्यथा ॥ इति ।

गीतायां चतुर्दशाध्याये ।

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैव(१) ब्रह्मभूयाय कल्प्यते ॥ इति ।

ब्रह्मभूयाय पूर्णत्वेनाभिव्यक्तये गुणाभिधानं तत्तदवच्छिन्नत्वेनैवाभिव्यज्यते(?) तस्माद् भगवद्भक्तिरेव मुख्यं साधनं सांख्ययोगविद्यायामिति सिद्धम् ।

कृतं परोपकाराय तत्त्वयाथार्थ्यदीपनम् ।
तेन मे प्रीयतां कृष्णः परमात्मा जगद्गुरुः ॥
स्वतन्त्रत्वात् स एवैकः कर्ता गोपालबालकः ।
श्रीकृष्णाख्यो महेशानो दारुयन्त्रसमस्त्वहम् ॥
पुराणार्थं बुभुत्सूनां*** च मयेरितम् ।
तेभ्यः समर्पितं चैतत् तेनापि प्रीयतां हरिः ॥

इति श्रीभाववविश्वनाथदीक्षितसूनुभावागणेशविरचितं तत्त्वयाथार्थ्यदीपनं समाप्तम् ॥

---

(१) समतीत्यैतान्–पा० १ पु० ।

श्रीगणेशाय नमः ।

अथ समाससूत्र—

# सर्वोपकारिणी टीका ।

यद्वाग्विभूतिरमलाखिलतत्त्वजाता-
ज्ञानाद्य तत्त्वममलं परिबोधयन्ती ।
श्रेयः करोति जगतां भगवन्तमाद्यं
तं श्रीमहर्षिकपिलं प्रभुमानतोऽस्मि ॥ १ ॥
उद्दिधीर्षुस्तदुर्ज्ञातसूत्रतत्त्वार्थबुद्धये ।
सर्वोपकारिणीं कुर्वे टीकां गुणवशंवदः ॥ २ ॥

अथात्रानादिक्लेशकर्मवासनासमुद्रनिपातितानाथ-दीनानुद्दिधीर्षुः परमकृपालुः स्वतःसिद्धतत्त्वज्ञानो महर्षिर्भगवान् कपिलो द्वाविंशतिसूत्राण्युपादिक्षत् । सूचनात् सूत्रमिति हि व्युत्पत्तिः । तत एतैः समस्ततत्त्वानां सकलषष्टितन्त्रार्थानां च सूचनं भवति । इतश्चेदं सकलसांख्यतीर्थमूलभूतं तीर्थान्तराणि चैतत्प्रपञ्चभूतान्येव । सूत्रषडध्यायी तु वैश्वानरावतारमहर्षिभगवत्कपिलप्र-

सूचितम् । तदा च समानपरिणामत्वेन वैलक्षण्यानाविर्भाव इति भावः ॥

अथ जायमानस्य सुखदुःखादेर्विवेकार्थं त्रैविध्यं वक्तुमेकेनादावान्तरमाह । अध्यात्मम् ॥ ६ ॥ आत्मानमधिकृत्येत्यधात्मम् तद्द्विविधं शारीरं मानसं चेति शारीरं वातपित्तश्लेष्मवैषम्यनिमित्तं मानसं कामक्रोधलोभमोहेर्ष्याविषयविशेषदर्शनादर्शननिमित्तम् । एतदुभयमपि आन्तरोपायसाध्यत्वादध्यात्ममित्युच्यते ॥

वाह्यभेदद्वयमाह द्वाभ्याम् । अधिभूतम् ॥ ७ ॥ मानुषपशुपक्षिसरीसृपस्थावरादिभूतान्यधिकृत्य तदधिभूतमित्यर्थः ॥

आधिदैवम् ॥ ८ ॥ यक्षराक्षसविनायकग्रहाद्यावेशनिमित्तमेतत् । इदं द्वयमपि वाह्योपायसाध्यत्वाद्वाह्यमित्युक्तम् ॥

ननु सत्स्वपि विलक्षणेषु वहुषु पदार्थेषु पुरुषस्य तत्सम्वन्धाभावात् कथं ततो दुःखमतस्तत्सामग्रीं निरूपयिषुरादौ वुद्धीन्द्रियाण्याह । पञ्चाभिवुद्धयः ॥ ९ ॥ अभितो वुध्यन्ते ज्ञायन्ते वस्तून्याभिरित्यभिवुद्धयः वुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि रूपशब्दगन्धरसस्पर्शबोधकानि ॥

(१५) शिवस्तोत्रावली । उत्पलदवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) १

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) १

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । ११

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता१

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया।ऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... १

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ३

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम्२

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः। प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १६

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासंवलितम् ।४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः—प्रकाशः गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित १

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।
श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता । १०

(४७) व्याकरणसिद्धान्तसुधानिधीः । पर्वतीय विश्वेश्वरसूरिविरचितः । १

(४८) वीरमित्रोदयः । लक्षणप्रकाशः ।
महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकया समलंकृतः । ६

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृता । १

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशङ्करमिश्रविरचितम् १

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेता २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः । ४

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द (क्षेमेन्द्र) विरचितम् ।
सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेशविरचितम् । समाससूत्रव्याख्या सर्वोपकारिणी च ।

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी

October 1921.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 286.

# सांख्यसङ्ग्रहः ।

तत्र

कपिलसूत्रसंक्षिप्तवृत्तिः । तत्त्वसमाससूत्रविवरणम् । तत्त्वसमाससूत्रवृत्तिः । सांख्यतत्त्वप्रदीपिका । सांख्यतत्त्वप्रदीपः । तत्त्वमीमांसा । सांख्यपरिभाषा च ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयभूतपूर्वपुस्तकालयाध्यक्षेण विन्ध्येश्वरीप्रसादद्विवेदिना न्यायोपाध्यायढुण्ढिराजशास्त्रिणा च परिशोधितः ।

# SÂṂKHYA SAṂGRAHA,

a collection of the works of Sâṃkhya Philosophy,

*Edited by M. M. Vindheyśvarî Prasâda Dvivedin,*
*Late Librarian, Government Sanskrit College, Benares.*

FASCICULUS II—२.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE, BENRAES.
AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1920.

॥ श्रीः ॥

—*—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२८६

अनेन च ज्ञानद्वारा योगं दर्शयितुं कर्मेन्द्रियाण्याह । पञ्च कर्मयोनयः ॥ १० ॥ पञ्च इन्द्रियाणि कर्मयोनयः कर्मणां वचनादानविहरणोत्सर्गानन्दानां योनयः कारणानि तानि च वाक्पाणिपादपायूपस्थाख्यानि । अनेन कर्मणा तत्तद्विषयसान्निध्येन तत्तत्सम्बन्धः सूचितः ॥ १० ॥

अथ महदहङ्कारमनसामध्यवसायाभिमानसङ्कल्पा असाधारण्यो वृत्तयः ताभिर्विनेन्द्रियद्वारा विषयग्रहासम्भवात् तैस्तद्ग्रहोक्त्या तासां निरूपितप्रायत्वेन तत्साधारणी वृत्तिराह । पञ्च वायवः ॥ ११ ॥ पञ्चसंख्याकाः प्राणापानसमानोदानव्यानाख्याः वायवः महदहङ्कारमनसां साधारणवृत्तयः जीवनसाधनानि । तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः अपानः कृकाटिकापृष्ठपायुपार्श्वोपस्थवृत्तिः समानो हृन्नाभिसर्वसन्धिवृत्तिः उदानो हृत्कण्ठतालुमूर्द्धभ्रूमध्यवृत्तिः व्यानस्त्वग्वृत्तिरिति ॥ ११ ॥

पञ्चानामुपयोगमाह । पञ्च कर्मात्मानः ॥१२॥ भुक्तपीताहारजलादेरसरुधिरादेश्च यथायथं प्रापणमेषां कर्म तदेकानुमेयत्वेन तत्स्वरूपात्मकता (?) इत्यर्थः ॥१२॥

नन्वस्तु ज्ञानक्रियाद्वारा महदभिमानसर्वसङ्कल्पानां

-विषययोगित्वं पुरुषस्य स्वपरिणामितया तन्न घटते इत्या-शङ्कां विनिवर्तयिषुराह । पञ्चपर्वाविद्या ॥ १३ ॥ अना-त्मस्वात्मख्यातिरविद्या सा च विद्याविरोधिनी पञ्चप-र्वा भवति तानि च पर्वाणि अविद्यास्मितारागद्वेषाभि-निवेशाख्यानि । तथा च यदविद्यया विपर्ययेणावधार्यते वस्तु अस्मितादयस्तत्स्वभावास्तदभिनिविशन्ते ततश्चा-त्मनो विवेकेन तत्सम्बन्ध इति भावः ॥ १३ ॥

पञ्चाशद्भेदेषु प्रत्ययसर्गेषु पञ्चविपर्यया निरूपिताः अधुना विशिष्टेष्वष्टाविंशतिमशक्तिमाह । अष्टाविंशतिधा-ऽशक्तिः ॥ १४ ॥ इन्द्रियवधा एकादश बुद्धिवधाश्च सप्तदश इत्येताः अशक्तय उच्यन्ते । इन्द्रियवधा यथा ।

वाधिर्यं १ कुष्ठता २ न्धत्वं ३ जडता ४
ऽजिघ्रता ५ तथा ।
मूकता ६ कौण्य ७ पङ्गुत्व ८ क्लैब्योदावर्त १०
मन्दताः ११ । इति

बुद्धिवधास्तु नवतुष्टीनामष्टसिद्धीना च विपर्य-याद्भवन्ति तदित्थं जाता अशक्तयोऽष्टाविंशतिधेति ॥ १४॥

प्रसक्ते तुष्टिसिद्धी एवाह द्वाभ्याम् । नवधा तुष्टिः ॥ १५॥ यथोक्तम् ।

आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।

वाह्याः विषयोपरमात् पञ्च नव तुष्टयोभिहिताः ॥
इति ।

अस्यार्थः विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः तं च सैव करोतीति कृतं ध्यानाभ्यासेनेति केनचिदुपदिष्टे तत्र तुष्टिः प्रकृत्याख्या १, अथ प्रकृतेः सर्वान् प्रत्यविशेषान्न केवलं तत एव विवेकसाक्षात्कारः किन्तु प्रव्रज्ययेत्युपदिष्टे तुष्टिरुपादानाख्या २, प्रव्रज्यापि कालविशेषादरेणैव विवेकं जनयत्यलमुत्तसतया इत्युपदिष्टे तुष्टिः कालाख्या ३, भाग्येनैव विवेकख्यातिरिति तुष्टिर्भाग्याख्या ४, इत्येताश्चतस्रः प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य जायन्त इत्याध्यात्मिक्य उच्यन्ते। विषयाः शब्दस्पर्शरूपरसगन्धाख्याः पञ्च तेषु अर्जनरक्षणक्षयभोगहिंसादोषदर्शनं तत उपरमा विरतयोपि पञ्च ते च महदहङ्कारादीननात्मन आत्मनोभिमन्यमानस्य वैराग्ये सत्युत्पद्यन्ते ऽतो वाह्या उच्यन्ते । इमाश्च नव उक्तविपर्ययाः ५ अशक्तिभिः २८ सह द्विचत्वारिंशत् ४२ सिद्धिपरिपन्थित्वाद्धेयाः ॥ १५ ॥

अष्टधासिद्धिः ॥ १६ ॥ तद्यथा

ऊहः शब्दोध्ययनं ३ दुःखविघातास्त्रयः ६ सुहृत्प्राप्तिः ७ दानञ्च ८ सिद्धयोष्टाविति तत्रोपदेशमन्तरेण तत्त्व-

ज्ञानस्य स्वयमूहाद्या असिद्धिः सा प्रथमा १ अन्यदीय-शास्त्रपाठमाकर्ण्य ज्ञानोत्पत्तौ शब्दाख्या द्वितीया २ अध्ययनतस्तत्त्वज्ञाने तृतीया ३ आध्यात्मिकाधिदैविकाधिभौतिकदुःखत्रयविघातेन तत्त्वज्ञाने जाते सिद्धित्रयम् ६ ज्ञानवत्सुहृदो लाभेन तत्त्वज्ञाने सुहृत्प्राप्त्याख्या सप्तमी ७ धनादिनाराधिते ज्ञानिनि तत्त्वज्ञानेऽष्टमी ८ अत्र दुःखविघातरूपाणां तिसृणां सिद्धीनां मुख्यत्वमितरासां तदुपायत्वादगौणत्वं बोध्यम्। पञ्चविपर्ययादारभ्याष्टसिद्धिपर्यन्तमेते प्रत्ययसर्गाः तेषु प्रकृतिप्रत्ययान्यताख्यातिप्रेप्सुभिर्द्विचत्वारिंशदादितो हेयाः सिद्धयस्तु उपादेया इति तत्स्वरूपव्याक्रिययैव सूचितं भवति॥१६॥

प्रत्ययसर्गमभिधाय प्रकृतिसर्गमाह। दश मूलिकार्थाः॥१७॥ दश अर्थाः पदार्थाः मूलिकाः सन्ति मूलं प्रकृतिः पुरुषश्च तावाश्रयत्वेन विद्येते येषाम् अथवा मूलं स्वभावः स प्रयोजकत्वेनास्ति येषामिति मूलिका मूलप्रकृतौ पुरुषे च विद्यमाना इति यावत् तथा च राजवार्त्तिकम्।

प्रधानास्तित्व १ मेकत्व २ मर्थवत्त्व ३ मथान्यता ४।
पारार्थ्यं ५ च तथा नैक्यं ६ वियोगो ७ योग ८ एव च॥
शेषवृत्ति ९ रकर्तृत्वं १० मौलिकार्थाः स्मृता दश॥

अत्रैकत्वमर्थवत्त्वं पारार्थ्यं ३ प्रधाने अन्यत्वं प्रकृत्य-

पेक्षया अकर्तृत्वं बहुत्वं ६ पुरुषे अस्तित्वं ७ योगो ८ वियोग ९ श्चोभयोः । शेषवृत्तिः १० अङ्गाङ्गिभावेन गुणानां वृत्तिः स्थूलसूक्ष्मशरीरयोरिति । अत्र प्रकृतिपुरुषयोः साधर्म्यवैधर्म्यनिरूपणेन द्वयोः पार्थक्येन ज्ञानं प्रकृतिपुरुषान्यताख्यातिबीजमिति सूचितं भवति । तथा चैतेषां धर्माणां तत्तत्स्वभावभूतत्वेन प्रकृतिसर्गताव्यवहार इति ॥ १७ ॥

ननु बुद्ध्यादिभिरेव त्रिगुणात्मकैः सकलकार्यसिद्धौ किमधिकप्रकृत्यङ्गीकारेण अत आह । अनुग्रहसर्गः ॥ १८ ॥ बुद्ध्यादिभिः स्वकार्येऽहङ्कारादौ जनयितव्ये प्रकृतेरनुग्रहसहायोपेक्ष्यते अन्यथा बुद्धिः क्षीणा सती नालमहङ्कारं जनयितुमिति सकलोपि सर्गस्तदनुग्रहमूलक एवेत्यर्थः । अयमेव प्रकृत्यापूर इत्युच्यते तथा च प्रकृत्यैवायं सर्गो नेश्वरेण नापि ब्रह्मोपादानो नाप्यकारणो नेश्वराधिष्ठितप्रकृतित इति सूच्यते ॥१८॥

तन्मात्रसर्गमाह । चतुर्दशविधो भूतसर्गः ॥१९॥ दैवतैर्यग्योनमानुष्यभेदेन भूतसर्गश्चतुर्दशप्रकारको भवति । तच्चेत्थम् ब्राह्म १ प्राजापत्यै २ न्द्र ३ पैत्र ४ गान्धर्व ५ याक्ष ६ राक्षस ७ पैशाच ८ भेदेनाष्टविधो दैवः पशु ९ मृग १० पक्षि ११ स्थावर १२ सरीसृप १३ भेदेन

पञ्चविधस्तैर्यग्योन एकविधो मानुष्य १४ इति ॥१९॥

ननु पुरुषार्थशिरोमणीभूतमोक्षतत्त्वाकाङ्क्षा सति बन्धस्वरूपज्ञान एवोपपद्यतेऽतो बन्धानेवाह । त्रिविधो बन्धः ॥२०॥ विपर्ययादतत्त्वज्ञानाज्जायमानो बन्धस्त्रिविधः। प्राकृतो १ वैकृतो २ दाक्षिण ३ श्चेति । तत्र पुरुषधिया प्रकृत्युपासनं प्राकृतो बन्धः । तथा भूतेन्द्रियाहङ्कारबुद्ध्युपासनं वैकृतः पुरुषतत्त्वमजानतः केवलमिष्टापूर्तकारिणो दाक्षिण इति त्रयाणामपि पुरुषस्वरूपवेदकत्वाभावे बन्धकत्वम् ॥ २० ॥

नन्वेतदज्ञानत्रयनिवृत्तौ कीदृशो मोक्षो जायत इत्याह। त्रिविधो मोक्षः ॥२१॥ इष्टापूर्तादिकर्मस्वसारतां पुरुषस्वरूपोपलब्धेरेव सारतां बुध्यमानस्य प्रथमः ततो भूतेन्द्रियादिष्वपि विकारतां(१) ततः पृथगात्मानं जानतः प्रकृतिरूपस्तृतीयः । यद्यपि प्रथमद्वितीयौ न तात्त्विकमोक्षौ तथाप्यैकदेशिकान्यताख्यत्या तावद्बन्धापगमेन मोक्षत्वव्यवहार इति द्रष्टव्यम । अत्र बन्धमोक्षसंसाराः प्रकृतावेव न पुरुषे सवासनक्लेशकर्माशयानामपरिणामिनि पुरुषेऽसम्भवात् तथा च भृत्यजयपराजययोः स्वामिन्युपचारात् प्रकृतिगतानां बन्धादीनां पुरुषे उपचार एव भोगा-

(१) अत्र कश्चिदंशो निपतितः ।

पवर्गयोः प्रकृतिगतयोरपि विवेकाग्रहात् पुरुषसम्बन्धः सुसाधितो भवति। एवं च धर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यैःसप्तभीरूपैः प्रकृतिर्भोगापवर्गरूपपुरुषार्थं प्रत्यात्मानं बध्नाति तत्त्वज्ञानेन विवेकख्यात्या एकेन रूपेण विमोचयति इतीदृशस्य तत्त्वज्ञानस्याभ्यासादादरनैरन्तर्यदीर्घकालसेवितात् सत्त्वपुरुषान्यतासाक्षात्कारि केवलं ज्ञानमुत्पद्यते तेनानादिरपि विपर्ययवासना प्रतिबध्यते ततश्चाध्यवसायाभिमानसङ्कल्पालोचनानि अन्तराणि वाह्याश्च सर्वे व्यापारा आत्मनि प्रतिषिद्धा भवन्ति अयमेव मोक्ष इति राद्धान्तः॥ २१॥

ननु पुरुषप्रकृत्यादीनामलक्ष्याणां लक्ष्याणां च घटपटादीनामखिलप्रमेयाणां लौकिकैः कथमनुभवो विधेयोऽत आह। त्रिविधं प्रमाणम्॥ २२॥ असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिर्बोधश्च पौरुषेयः फलं प्रमा तस्याः करणं प्रमाणम्। तत् त्रिविधं प्रत्यक्षानुमानशब्दभेदात्। एतेनाधिकान्युपमानादीनि नैयायिकाद्यभ्युपगतानि प्रमाणानि एष्वेवान्तर्भवन्तीति नातिरिक्तान्युपयुज्यन्ते। तत्रार्थसन्निकृष्टमिन्द्रियं प्रत्यक्षम्। व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानम्। आप्तवचनाद्देश-

दिरूपाच्छब्दमिति । विशेषत एषां लक्षणोदाहरणान्याकरादवसेयानीति शिवम् ॥२२॥

एकस्मिंस्त्रिगुणात्मतत्त्वयुतितो जाता द्विधा साप्यतो
द्वित्वं प्राप्य प्रकाशयत्यविरतं भोगापवर्गौ स्वतः ।
इत्येवं परिसूचयन् मतिमतां मोहापहं कापिलं
सूत्राणाममलं द्विकद्वयमिदं जीयाच्चिरं चेतसि ॥

इति सर्वोपकारिणी संक्षिप्तकापिलसूत्रवृत्तिः समाप्ता ॥

# सांख्यसूत्रविवरणम् ।

श्रीकपिलाय नमः ।

प्रकृतिं पुरुषं नत्वा सांख्यसूत्रे विधीयते ।
संक्षेपतो विवरणमविवेकापनुत्तये ॥

इह खलु भगवान् कपिलो मुनिरासुरये ऽनुकम्पया पञ्चविंशतितत्त्वान्युपदिश्य सूत्रयामास । अष्टौ प्रकृतय इत्यादि । काः पुनस्ता इत्युच्यन्ते । प्रधानं महानहंकारस्तन्मात्राणि च । प्रधानं प्रकृतिरव्यक्तमव्याकृतं चेत्यनर्थान्तरम् । महान् महत्तत्त्वं बुद्धिरध्यवसायलक्षणम् । अहंकारोऽभिमानलक्षणो वैकृतिकस्तैजसो भूतादिश्चेति त्रिविधः । तन्मात्राणि तु पञ्च शब्दतन्मात्रमाकाशहेतुः । स्पर्शतन्मात्रं वायुयोनिः । रूपतन्मात्रं तेजोयोनिः । रसतन्मात्रमप्प्रकृतिः । गन्धतन्मात्रं पृथिवीहेतुः । इति पञ्चतन्मात्राणि इत्यष्टौ प्रकृतयः ।

के पुनर्विकाराः कति । षोडशविकाराः । एकादशेन्द्रियाणि पञ्च महाभूतानि च । तत्र श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि बुद्धीन्द्रियाणि शब्दस्पर्शरूपरसगन्धालोचनवृत्तीनि । वाक्पाणिपादपायूपस्थानि कर्मेन्द्रिया-

णि वचनादानविहरणोत्सर्गानन्दवृत्तीनि । ज्ञानक्रियाशक्तिद्वयात्मकं सङ्कल्पविकल्पलक्षणं मन इत्येकादशेन्द्रियाणि । भूतानि चाकाशवायुतेजःसलिलपृथिवीलक्षणानि पञ्चेति षोडशविकाराः ॥

अथ कः पुरुष इत्युच्यते । पुरुषोऽनेकस्त्रिगुणरहितो विवेकी अविषयोऽसाधारणोऽप्रसवधर्मा चेतनः साक्षी केवलो मध्यस्थो द्रष्टाऽकर्ता च ॥

अथ के पुनस्त्रयो गुणा इत्युच्यन्ते । त्रैगुण्यं सत्त्वं रजस्तम इति । त्रय एव गुणास्त्रैगुण्यम् । सत्त्वं नाम पाटवमार्दवलाघवप्रसन्नताभिसङ्गप्रीतितुष्ट्यनीहासन्तोषादिलक्षणमनन्तभेदं समासतः सुखावहम् । रजो नाम शोकतापखेदस्तम्भोद्वमोद्वेगरोषमानादिलक्षणमनन्तभेदं समासतो दुःखावहम् । तमो नामाच्छादनावरणबीभत्सदैन्यगौरवालस्यनिद्राप्रमादादिलक्षणमनन्तभेदं समासतो मोहात्मकम् एतत् त्रैगुण्यं व्याख्यातम् ॥

सत्त्वं प्रकाशकं विन्द्याद्रजो विन्द्यात् प्रवर्तकम् ।
विनाशकं तमो विन्द्यात् त्रैगुण्यं नाम सञ्ज्ञितम् ॥

अत्राह कः सञ्चरः प्रतिसञ्चरश्चेति । उच्यते । उत्पत्तिः सञ्चरः । प्रलयः प्रतिसञ्चरः । तत्रोत्पत्तिर्नामाव्यक्तात् समुपदिष्टात् सर्वजगतः परेण रूपेणाधिष्ठानात्म-

कात् महान् महतोऽहंकारः । स च त्रिविधः । वैकृतिको भूतादिस्तैजसश्चेति । तत्र वैकृतादिन्द्रियाण्युत्पद्यन्ते भूतादेस्तन्मात्राणि तैजसादुभयम् इन्द्रियाणि तन्मात्राणि चेति । तन्मात्रेभ्यो भूतानि । अयं सञ्चरः । प्रतिसञ्चरो नाम भूतानि तन्मात्रेषु लीयन्ते । तन्मात्राणीन्द्रियाणि चाहंकारे । अहंकारो बुद्धौ । बुद्धिरव्यक्ते । ततोऽव्यक्तं तु क्वचिन्न लीयते कस्मात् अनुत्पन्नत्वात् । इत्येवं प्रतिसञ्चरः । एवमेतौ सञ्चरप्रतिसञ्चरौ व्याख्यातौ ॥

अत्राह किंविधमध्यात्ममधिभूतमधिदैवतं च । अत्रोच्यते । बुद्धिरध्यात्मम् । बोधयितव्यमधिभूतम् । ब्रह्मा तत्राधिदैवतम् । अहंकारोऽध्यात्मम् । अभिमन्तव्यमधिभूतम् । रुद्रस्तत्राधिदैवतम् । मनोऽध्यात्मं संकल्पमधिभूतम् । चन्द्रस्तत्राधिदैवतम् । श्रोत्रमध्यात्मम् । श्रोतव्यमधिभूतम् । दिशस्तत्राधिदैवतम् । त्वगध्यात्मम् । स्पर्शयितव्यमधिभूतम् । वायुस्तत्राधिदैवतम् । चक्षुरध्यात्मम् । दर्शयितव्यमधिभूतम् । सूर्यस्तत्राधिदैवतम् । जिह्वाध्यात्मम् । रसयितव्यमधिभूतम् । वरुणस्तत्राधिदैवतम् । नासाध्यात्मम् । घ्रातव्यमधिभूतम् । पृथिवी तत्राधिदैवतम् । वागध्यात्मम् । वक्तव्यमधिभूतम् । अग्निस्तत्राधिदैवतम् ।

पाणिरध्यात्मम् । आदातव्यमधिभूतम् । इन्द्रस्तत्राधिदैवतम् । पादावध्यात्मम् । गन्तव्यमधिभूतम् । विष्णुस्तत्राधिदैवतम् । पायुरध्यात्मम् । उत्स्रष्टव्यमधिभूतम् । मित्रस्तत्राधिदैवतम् । उपस्थमध्यात्मम् । आनन्दयितव्यमधिभूतम् । प्रजापतिस्तत्राधिदैवतम् । एवमेव त्रयोदशकरणस्याध्यात्ममधिभूतमधिदैवं च व्याख्यातम् । कानि चत्वारीत्यत आह चेति । त्रीणि गुणरूपाणि चतुर्थमधिदैवतमित्यर्थः ॥

चत्वारि यो वेदयते यथावद्
गुणस्वरूपाण्यधिदैवतं च ।
विमुक्तपाप्मा गतदोषसङ्गो
गुणांस्तु भुङ्क्ते न गुणैः स भुज्यते ॥

अथ कास्ता अभिबुद्धय इत्युच्यन्ते । पञ्चाभिबुद्धयः । बुद्धिरभिमान इच्छा कर्तव्यं तत्क्रिया चेति । अभिमुखी बुद्धिरभिबुद्धिः । इदं करणीयमित्येतदध्यवसायो बुद्धिः क्रियात्मपरामर्शस्वरूपप्रत्ययः । अभिमुखो मानोऽहं करोमीत्यहंकारोऽभिमानः । बुद्धिक्रिया इच्छा वाञ्छा । कर्तव्यं संकल्पो मनसो वृत्तिः । क्रिया एतद्वस्तुस्वरूपमिति कर्तव्यालोचनं यद्बुद्धीन्द्रियाणां सा क्रिया । इत्थमेतत् कर्तव्यमिति यत्प्रवृत्तिः कर्मेन्द्रियाणां

सा क्रियेति । एवमेताः पञ्चाभिबुद्धयो व्याख्याताः ॥

अथ काः पञ्चकर्मयोनयः उच्यन्ते । धृतिः श्रद्धा सुखा अविविदिषा विविदिषा चेति पञ्च कर्मयोनयः ।

वाचि कर्मणि काये च प्रतीतिर्याभिरज्यते ।
तन्निष्ठस्तत्प्रतिष्ठश्च धृतेरेतद्धि लक्षणम् ॥
अनसूया ब्रह्मचर्यं यजनं याजनं तपः ।
प्रतिग्रहोऽग्निहोमश्च श्रद्धाया लक्षणं स्मृतम् ॥
सुखार्थी यस्तु सेवेत विद्याकर्मतपांसि च ।
प्रायश्चित्तपरो नित्यं सुखेयं परिकीर्त्तिता ॥

विषधूममूर्छितवदविविदिषा । विविदिषा ध्यानिनां प्रज्ञायोनिः ।

एकत्वं च पृथक्त्वं च नित्यं चेदमचेतनम् ।
सूक्ष्मं सत्कार्यमक्षोभ्यं ज्ञेया विविदिषा हि सा ॥

कार्यकारणक्षमकरा विविदिषा प्राकृतिका वृत्तिः । धृतिः श्रद्धा सुखा अविविदिषा चतस्रो बन्धाय विविदिषैका मोक्षाय इति पञ्च कर्मयोनयो व्याख्याताः ॥

अत्राह के ते पञ्चवायवः । उच्यन्ते ।

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
इत्येते वायवः पञ्च शरीरेषु शरीरिणाम् ॥

तत्र प्राणो नाम वायुर्योऽयं मुखनासिकाधिष्ठान-

प्राणनात् क्रमेणाननात् प्राण इत्यभिधीयते । अपानो नाम वायुर्नाभेरधिष्ठाता अपनयनादधोगमनाच्चापान इत्यभिधीयते । समानो नाम वायुर्हृदधिष्ठाता समनात् समगमनाच्च समान इत्यभिधीयते । उदानो नाम वायुः कण्ठाधिष्ठाता ऊर्ध्वं गमनाच्च उदान इत्यभिधीयते । व्यानो नाम वायुः सन्ध्यधिष्ठाता प्राणादिजृम्भणाच्च व्यान इत्यभिधीयते । इति पञ्चवायवो व्याख्याताः ॥

आह के ते पञ्चकर्मात्मानः उच्यन्ते । वैकारिकस्तैजसो भूतादिश्च सानुमानो निरनुमानश्चेति । तत्र वैकारिकः शुभकर्मकर्ता । तैजसोऽशुभकर्मकर्ता । भूतादिर्मूढकर्मकर्ता । सानुमानः शुभमूढकर्मकर्ता । निरनुमानोऽशुभमूढकर्मकर्ता । इत्येते पञ्चकर्मकर्तारो व्याख्याताः ॥

आह का सा पञ्चपर्वाविद्येति । उच्यते । तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्रश्चेति । तत्र तमोमोहावुभावेतावष्टात्मकौ । महामोहो दशात्मकः । तामिस्रान्धतामिस्रौ चाष्टादशात्मकौ । तत्र तमो नामाष्टासु प्रकृतिष्वव्यक्तबुद्ध्यहंकारपञ्चतन्मात्रसञ्ज्ञितासु अनात्मस्वात्मज्ञानाभिमानस्तम इत्यभिधीयते । मोहो नामाणिमाद्यष्टगुणैश्वर्यप्राप्तये योऽभिमान उत्पद्यते स मोह इत्यभिधीयते । महामोहो नाम दृष्टानुश्रविकेषु त्रि-

षयेषु दशसु निवृत्तेषु मुक्तोऽहमिति मन्यते स महामोह इत्यभिधीयते। तामिस्रो नाम अष्टगुणैश्वर्येऽणिमाद्ये दशविधे च विषये प्रतिहतस्य दुःखमुत्पद्यतेऽसौ तामिस्र इत्यभिधीयते। अन्धतामिस्रो नाम अणिमाद्यष्टगुणैश्वर्ये दशविधे च विषये सिद्धे मरणकाले च यो विषादः प्रत्यपद्यते सोऽन्धतामिस्र इत्यभिधीयते। एवमेषा पञ्चपर्वाऽविद्या द्विषष्टिभेदा व्याख्याता॥

अत्राह काष्टाविंशतिधाशक्तिः। अत्रोच्यते। एकादशेन्द्रियवधाः सप्तदशबुद्धिवधाः। एषाष्टाविंशतिधाशक्तिः। तत्रेन्द्रियवधास्तावत्। वधिरस्त्वक्कुवधिरः अन्धः जडजिह्वः अजिघ्रः मूकः कुणिः पङ्गुः नपुंसकः ऊर्ध्ववायुयुक्तः अमनाः। तदुक्तम्।

वाधिर्यं कुष्ठितान्धत्वं जडताऽजिघ्रता तथा।
मूकता कौण्यपङ्गुत्वं क्लैब्योदावर्तमत्तताः॥

एतदिन्द्रियद्वारा बुद्धेरेव वधाः। साक्षाद्बुद्धिवधा यथा। नवविधतुष्टिवैकल्यात् अष्टविधसिद्धिवैकल्याच्च सप्तदशबुद्धिवधा इत्यष्टाविंशतिधाशक्तिः॥

का पुनर्नवधा तुष्टिः उच्यते। चतस्र आध्यात्मिक्यस्तुष्टयः वाह्याः पञ्च। आद्याः प्रकृत्युपादानकालभाग्याख्याः। प्रकृत्यैव मुक्तिः किं पुनः

साधनैरिति तुष्टिः प्रकृत्याख्या अम्भो नाम । साधनैः संन्यासादिभिरुपात्तैस्तुष्टिः साधानाख्या सलिलं नाम । कालेनैव मुक्त्यादिकं सेत्स्यति किं दुःखैः संन्यासादिसाधनैरिति तुष्टिः कालाख्याऽघो नाम । या तु भाग्यादेव सर्वं सेत्स्यति किं साधनादिध्यानादिक्लेशैरिति सा भाग्याख्या तुष्टिर्नाम । बाह्याः शब्दादिविषयवैराग्यास्तुष्टयः अर्जनरक्षणक्षयभोगहिंसादोषदर्शनं वैराग्यहेतुः पञ्चविधस्तद्भेदेन पञ्चतुष्टयः ॥

अथ काः सिद्धयः उच्यन्ते । अष्टौ सिद्धयः । उच्यन्ते । अध्ययनं तारं नाम सिद्धिः । ततोऽर्थज्ञानं सुतारं नाम । ततस्तर्केणार्थपरीक्षणं तारतरं नाम सिद्धिः । ततः परीक्षकसंवादनं रम्यकं नाम । ततो विवेकख्यातिः सदामुदितं नाम । एताः पञ्च गौण्यः सिद्धयः । दुःखत्रयविघातास्तास्त्रयो मुख्याः सिद्धयः । प्रमोदमुदितमोदनामाख्याः फलमित्यष्टौ सिद्धयः । तुष्टिसिद्धीनां विपर्ययात् सप्तदशधा बुद्धिवधाः ॥

के पुनर्मौलिकार्थाः कतिधा उच्यन्ते । दशधा मौलिकार्थाः । एकत्वमर्थवत्त्वं पारार्थ्यं प्रधानस्य । अन्यत्वमकर्तृत्वं बहुत्वं पुरुषस्य । अस्तित्वं योगो वियोगश्चेत्युभययोः । शेषवृत्तिः परिशिष्टत्वं प्रलये तदुभययोः । तदुक्तम्

प्रधानास्तित्वमेकत्वमर्थवत्त्वं यथार्थता ।
पारार्थ्यं च तथा नैक्यं त्रियोगो योग एव च ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ॥ इति ।

अत्राह कोऽनुग्रहसर्गः । अनुगृह्णाति प्रत्ययभूतादिसर्गं यः सर्गः सोऽनुग्रहसर्गः । तन्मात्रसर्ग एवासौ विशेषापरनामा ।

के विशेषाः कियन्तश्च । उच्यन्ते । लिङ्गदेहाः स्थूलदेहाः स्थूलभुतानि च । तत्र लिङ्गं स्थूलदेहात् पूर्वमुत्पन्नमव्याहतं स्थूलनाशे ऽप्यनश्वरम् । महदहंकारेन्द्रियतन्मात्रात्मकम् । धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याख्यभाववासितं संसरति । स्थूलभूतानि तु भूगोलसमुद्रवह्निशिशुमारब्रह्माण्डविराटादीनि । स्थूलदेहाः के कतिविधाश्चेति उच्यते ॥ चतुर्दशविधो भूतसर्गः । तत्राष्टविकल्पो दैवस्तैर्यग्योनः पञ्चधा मानुष्य एकविधः ब्राह्मः प्राजापत्यः पैत्रो गान्धर्वो याक्षो राक्षसः पैशाचश्च दैवसर्गः पशुमृगपक्षिसरीसृपस्थावराः तिरश्चां सर्गः । ब्राह्मणादिजातिभेदेऽपि संस्थाने विशेषाभावात् एकविधो मानुष्य इति चतुर्दशविधाः स्थूलदेहाः । कः पुनर्बन्धः कतिधा च । त्रिविधो बन्धः । काः पुनस्ता विधा उच्यन्ते । प्राकृतिको

वैकृतिको दाक्षिणकश्च बन्धः । प्रकृतिमात्मानं ज्ञात्वा तच्चिन्तनात् प्राकृतिकः अत्रोच्यते पूर्णवर्षसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तका इति । महदादीनात्मत्वेन ज्ञात्वा तच्चिन्तनाद्वैकारिकः । अत्रोच्यते ।

दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं चाभिमानिकाः ।
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः ।

अमी विदेहाः ।

इष्टापूर्त्तौ दक्षिणा तन्निमित्तो दाक्षणिकः अत्रोच्यते ।
स्वर्गस्था नरकं यान्ति नारकाश्च त्रिविष्टपमिति ।

गतागतं कामकामा लभन्त इति च । अत एव हि त्रिष्वपि बन्धेषु एकैकापाये ततस्ततो मोक्ष इति ।

त्रिविधो मोक्षः । कर्मणो विकारात् प्राकृतश्च मोक्षः । यदुक्तम् ।

प्राकृतेन च बन्धेन तथा वैकारिकेण च ।
दक्षिणाभिस्तृतीयेन बद्धो नान्येन मुच्यते ॥ इति ।

अथ कुतस्त्यानां तत्त्वानां सिद्धिः । प्रमाणादिति ब्रूमः । तत्र प्रमाणं किं कतिविधं वा उच्यते त्रिविधं प्रमाणम् । तिस्रो विधा यस्येति त्रिविधम् । कास्ता विधाः ।

उच्यते । दृष्टमनुमानमाप्तवचनं च । अर्थसन्निकृष्टेन्द्रियजो निश्चयो दृष्टम् । इन्द्रियाणि पञ्च चक्षुरादीनि मनश्च । व्याप्तिपक्षधर्मताज्ञानपूर्वकमनुमानम् । तच्च त्रिविधम । पूर्ववत् शेषवत् सामान्यतो दृष्टं च । पूर्ववद्यथा कर्दमेन पूर्ववृत्तवृष्ट्यनुमानम् । शेषवद्यथा । समुद्रात्पलमुदकं(?) क्षारमुपलभ्य शेषस्यापि क्षारत्वानुमानम् । सामान्यतो दृष्टं च यथा । रूपाद्युपलभ्य तदुपलब्धेः कारणस्यानुमानम् । रूपाद्युपलब्धयः करणसाध्याः क्रियत्वात् छिदिक्रियावत । आप्तश्रुतिराप्तवचनं च । यथार्थवाक्यजार्थविषयोऽध्यवसाय इति यावत् । प्रावादुकोद्भावितानां तु उपमानार्थापत्तिसंम्भवाभावैतिह्यप्रतिभानामित्युक्तेष्वेवान्तर्भावः । यत् तद्यथा गौर्गवयस्तथेति वाक्यम् । तद्ज्ञानिधीरागम एव । गवयेपि गोसदृशस्य गवयशब्दो वाचक इति प्रत्ययः सोयमनुमानमेतत्संङ्केतग्रहरूपत्वात । यद् गवयस्य चक्षुःसन्निकृष्टगोसादृश्यज्ञानं तत्प्रत्यक्षमेव । अत एव स्मर्यमाणायां गवि सादृश्यज्ञानं प्रत्यक्षम् । गोगवययोः सादृश्यस्य गवयान्तरवर्त्तिभूयोवयवसामान्यरूपस्य योगरूपस्यैकत्वादित्युपमानं न मानान्तरम् । जीवतो गृहाभावदर्शनेन वहिर्भावकल्पनादित्यर्थापत्तिरनुमानमेव ।

सम्भवोपि खार्यादौ द्रोणाढकप्रस्थाद्यवगमरूपोऽनुमान-मेव । इह भूतले घटो नास्तीत्यादिरभावावगमोपि प्रत्यक्षमेवेति नाभावः पृथक् प्रमाणम् । अनिर्दिष्टप्र-वक्तृकं प्रवादमात्रमैतिह्यमपीह वटे यक्षः प्रतिवसती-त्यप्रमाणमेव । आप्तमूलत्वे त्वागम एव । द्वारवती पुण्य-भूमिरिति श्रुतेः तत्र वसतः श्रेयांसस्तत्र गमने पुण्यं भवतीत्यादिबुद्धिर्जायमाना प्रतिभा । यत्रोच्यते । अनुक्तमप्यूहति पण्डितो जन इति । सा तु प्रायेणप्र-माणमेव । आर्षं तु दर्शनं प्रत्यक्षमेव । या प्रतिभा सा-प्यनुमानमेव ॥

त्रयोविंशतिसूत्रैर्हि सर्वशास्त्रार्थसंग्रहः ।
कृतो मुनिवरेणात्र यथामति सचीवृतः(?) ॥

इति सांख्यसूत्रविवरणाख्या
कापिलसूत्रवृत्तिः समाप्ता ॥

॥ श्रीः ॥

# तत्त्वसमाससूत्रवृत्तिः ।

पञ्चविंशतितत्त्वेषु जन्मना ज्ञानमाप्तवान् ।
आदिसृष्टौ नमस्तस्मै कपिलाय महर्षये ॥ १ ॥

अथातस्तत्त्वसमासाख्यसाङ्ख्यसूत्राणि व्याख्यास्यामः । इह कश्चिद्ब्राह्मणस्त्रिविधेन दुःखेनाभिभूतः साङ्ख्याचार्यं कपिलमहर्षिं शरणमुपागतः । स्वकुलनामगोत्रस्वाध्यायं निवेद्याह । भगवन् किमिह परं किं याथातथ्यं किं कृत्वा कृतकृत्यः स्यामिति । कपिल उवाच कथयिष्यामि । अष्टौ प्रकृतयः ॥ १ ॥ षोडश विकाराः ॥ २ ॥ पुरुषः ॥ ३ ॥ त्रैगुण्यम् ॥ ४ ॥ सञ्चरः ॥ ५ ॥ प्रतिसञ्चरः ॥ ६ ॥ अध्यात्मम् अधिभूतम् अधिदैवतं च ॥ ७ ॥ पञ्चाभिबुद्धयः ॥ ८ ॥ पञ्चकर्मयोनयः ॥ ९ ॥ पञ्चवायवः ॥ १० ॥ पञ्चकर्मात्मानः ॥ ११ ॥ पञ्चपर्वाऽविद्या ॥ १२ ॥ अष्टाविंशतिधाऽशक्तिः ॥ १३ ॥ नवधा तुष्टिः ॥ १४ ॥ अष्टधा सिद्धिः ॥ १५ ॥ दशधा मूलिकार्थाः ॥ १६ ॥

अनुग्रहसर्गः ॥ १७ ॥ चतुर्दशविधो भूतसर्गः ॥ १८ ॥ त्रिविधो धातुसर्गः ॥ १९ ॥ त्रिविधो बन्धः ॥ २० ॥ त्रिविधो मोक्षः ॥ २१ ॥ त्रिविधं प्रमाणम् ॥ २२ ॥ त्रिविधं दुःखम् ॥ २३ ॥ (१)एतत् परम्परया याथातथ्यमेतत् सम्यग् ज्ञात्वा कृतकृत्यः स्यान्न पुनस्त्रिविधेन दुःखेनाभिभूयते । इति तत्त्वसमासाख्यसाङ्ख्यसूत्राणि ॥

अथ का अष्टौ प्रकृतय इत्यत्रोच्यते । अव्यक्तं बुद्धिरहङ्कारः पञ्च तन्मात्राणीत्येता अष्टौ प्रकृतयः । तत्राऽव्यक्तं तावदुच्यते यथा लोके व्यज्यन्ते घटपटकुड्यशयनकाद्या न तथा व्यजत इत्यव्यक्तम् । श्रोत्रादिभिरिन्द्रियैर्न गृह्यत इत्यर्थः । कस्मात् अनादिमध्यान्तत्वान्निरवयवत्वाच्च ॥

अशब्दमस्पर्शमरूपमव्ययं
तथा च नित्यं रसगन्धवर्जितम् ।
अनादिमध्यं महतः परं ध्रुवं
प्रधानमेतत् प्रवदन्ति सूरयः ॥

सूक्ष्ममलिङ्गमचेतनमनादिनिधनं तथाप्रसवधर्मि निरवयवमेकमेव हि साधारणमेतदव्यक्तम् । अव्यक्त-

(१) एतेषु सूत्रेषु व्याख्याकारमतभेदाद्बहूनि पाठान्तराण्युपलभ्यन्ते इति तत्रतत्र द्रष्टव्यानि ।

स्यामी पर्यायशब्दा भवन्ति । अव्यक्तं प्रधानं ब्रह्म परं ध्रुवं बहुधानकमक्षरं क्षेत्रं तमःप्रसूतमिति ।

का बुद्धिरत्रोच्यते। अध्यवसायो बुद्धिः। सोयमध्यवसायो गवादिषु द्रव्येषु यस्मात् प्रतिपत्तिः। एवमेतन्नान्यथा। गौरेवायं नाश्वः। स्थाणुरेवायं न पुरुषः। इत्येषा बुद्धिः। अस्यास्तु बुद्धेरष्टौ रूपाणि भवन्ति धर्मो ज्ञानं वैराग्यमैश्वर्यमिति। तत्र धर्मो नामाऽधर्मविपर्ययः श्रुतिस्मृतिविहितः शिष्टाचाराऽविरुद्धः शुभलक्षणः। ज्ञानं नामाऽज्ञानविपर्ययस्तत्त्वभावभूतानां सम्बोधः। वैराग्यं नामाऽवैराग्यविपर्ययः शब्दादिविषयेष्वप्रशक्तिः। ऐश्वर्यं नामाऽनैश्वर्यविपर्ययोऽणिमादयोऽष्टगुणाः। एतानि सात्त्विकानि चत्वारि। अधर्मोऽज्ञानमवैराग्यमनैश्वर्यमिति अधर्मो नाम धर्मविपर्ययः श्रुतिस्मृतिविरुद्धः शिष्टाचारविरुद्धोऽशुभलक्षणः। अज्ञानं नाम ज्ञानविपर्ययस्तत्त्वभावभूतानामनवबोधः। अवैराग्यं नाम वैराग्यविपर्ययः शब्दादिविषयेष्वभिषङ्गः। अनैश्वर्यं नामैश्वर्यविपर्ययोऽणिमादिरहितत्वम्। एतानि तामसानि चत्वारि। तत्र धर्मेण निमित्तेनोर्ध्वगमनम्। ज्ञानेन निमित्तेन मोक्षः। वैराग्येण निमित्तेन प्रकृतिलयः। ऐश्वर्यनिमित्तेनाऽप्रतिहतगतिर्भवति। एवमेषा-

ष्टरूपा बुद्धिर्व्याख्याता । बुद्धेरमी पर्यायशब्दा भवन्ति ।

मनो मतिर्महान् ब्रह्मा ख्यातिः प्रज्ञा श्रुतिर्धृतिः ।
प्रज्ञानं सन्ततिः स्मृतिर्धीर्बुद्धिः परिकथ्यते ॥

अत्राह कोऽहङ्कार इत्युच्यते । अभिमानोऽहङ्कारः ।

अहं शब्दे अहं स्पर्शे अहं रूपे अहं रसे ।
अहं गन्धे अहं स्वामी धनवानहमीश्वरः ॥ १ ॥
अहं भोगी अहं धर्मे ऽभिषिक्तो ऽसौ मया हतः ।
अहं हनिष्ये बलिभिः परैरित्येवमादिकः ॥ २ ॥

योऽयमभिमानप्रत्ययो सोऽहङ्कारः । अहङ्कारस्याऽमी पर्यायशब्दाः । अहङ्कारो वैकारिकस्तैजसो भूतादिः सानुमानो निरनुमानश्चेति ॥

अत्राह कानि पञ्चतन्मात्राणीत्युच्यते । अहङ्कारान्वितानि पञ्चतन्मात्राणि शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेति पञ्चतन्मात्राणि । तत्र तावच्छब्दतन्मात्राणि शब्देष्वेवोपलभ्यन्ते उदात्तानुदात्तस्वरितकम्पितषड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादादयः शब्दविशेषास्तूपलभ्यन्ते । तस्माच्छब्दतन्मात्रे ऽविशेषः । अथ स्पर्शतन्मात्राणि स्पर्शेष्वेवोपलभ्यन्ते तत्र मृदुकठिनकर्कशपिच्छिलशीतोष्णादयः स्पर्शविशेषा उपलभ्यन्ते ।

तस्मात् स्पर्शतन्मात्रे ऽविशेषः । रूपतन्मात्राणि रूपेष्वेवोपलभ्यन्ते । तत्र शुक्लरक्तकृष्णहरितपीतहारिद्रमाञ्जिष्ठादयो रूपविशेषा उपलभ्यन्ते । तस्माद्रूपतन्मात्रे ऽविशेषः । तथा रसतन्मात्राणि रसेष्वेवोपलभ्यन्ते । तत्र कटुतिक्तकषायक्षारमधुराम्ललवणादयो रसविशेषा उपलभ्यन्ते । तस्माद्रसतन्मात्रेऽविशेषः । अथ गन्धतन्मात्राणि गन्ध एवोपलभ्यन्ते । तत्र सुरभिरसुरभिश्च गन्धविशेषा उपलभ्यन्ते(१) । तस्माद् गन्धतन्मात्रेऽविशेषः । एवमेतत्पञ्चतन्मात्राणि सूचितानि । अथैषां पर्यायशब्दाः । तन्मात्राण्यविशेषाणि महाभूतप्रकृतयो भोग्यान्यणवः शान्तघोरमूढानीति । एवमेता अव्यक्तबुध्यहंकारतन्मात्रसञ्ज्ञिता अष्टौ प्रकृतयो व्याख्याताः । अथ कस्मात् प्रकृतयः । प्रकुर्वन्तीति प्रकृतयः ।

अथ ते के षोडशविकारा इत्यतोच्यते । एकादशेन्द्रियाणि पञ्चमहाभूतान्येते षोडशविकाराः । तत्रेन्द्रियाणि तावदुच्यन्ते । श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमिति पञ्च बुद्धीन्द्रियाणि । श्रोत्रं स्वविषयं शब्दं गृह्णाति त्वक्स्पर्शविषयं चक्षू रूपविषयं रसना रसविषयं

(१) गन्धतन्मात्राद् गन्ध एवोपलभ्यते न सुरभिरसुरभिश्च गन्धविशेषः—पा० २ पु० । एवमेव पूर्वं सर्वत्र पाठान्तराणि वर्तन्ते ।

घ्राणं गन्धविषयमिति । वाक्पाणिपादपायूपस्था-ख्यानि पञ्च कर्मेन्द्रियाणि स्वंस्वं कर्म कुर्वन्ति । तत्र वाग्वचनमुच्चरति । हस्तौ कर्म कुरुतः । पादौ विहरणम् । पायुर्विसर्गम् । उपस्थमानन्दम् । उभयात्मकं मनः । स्वसंकल्पविकल्पवृत्ती कुरुते । एवमेकादशेन्द्रियाणि व्याख्यातानि । अथैषां पर्यायाः । इन्द्रियाणि करणानि वैकारिकाणि खानि नियतानि पदानि अवधृतानि अणूनि अक्षाणीति ।

अथ कानि पञ्चमहाभूतानीत्यत्रोच्यते । पृथिव्यप्तेजोवाय्वाकाशानीति महाभूतानि । तत्र पृथिवी धारणभावेन प्रवर्तमाना चतुर्णामुपकारं करोति । आपो जलानि संग्रहभावेन प्रवर्त्तमानाश्चतुर्णामुपकारं कुर्वन्ति । तेजः पाचकभावेन प्रवर्तमानं चतुर्णामुपकारं करोति । वायुर्वाहनभावेन प्रवर्त्तमानश्चतुर्णामुपकारं करोति । आकाशमवकाशदानेन प्रवर्तमानं चतुर्णामुपकारं करोति । शब्दस्पर्शरूपरसगन्धवती पञ्चगुणा पृथिवी । शब्दस्पर्शरूपरसवत्यश्चतुर्गुणा आपः । शब्दस्पर्शरूपवत् त्रिगुणं तेजः । शब्दस्पर्शवान् द्विगुणो वायुः । शब्दवदेकगुणमाकाशम् । एवमाख्यातानि पञ्च महाभूतानि । अथैषां पर्यायाः । भूतानि भूतविशेषाः

विकाराः आकृतयः तनवः विग्रहाः शान्ताः घोराः मूढाः इत्येते षोडशविकारा व्याख्याताः ।

अथाह कः पुरुष इत्युच्यते। पुरुषोऽनादिः सूक्ष्मः सर्वगतश्चेतनोऽगुणो नित्यो द्रष्टा भोक्ताऽकर्त्ता क्षेत्रविदमलोऽप्रसवधर्मी चेति । अथाह कस्मात् पुरुषः पुराणात् पुरिशयनात् पुरोहितवृत्तित्वाच्च पुरुषः । अथ कस्मादनादिः । नास्यादिरन्तो मध्यो वा विद्यत इत्यनादिः । कस्मात् सूक्ष्मः । निरवयवत्वादतीन्द्रियत्वात् सूक्ष्मः । कस्मात् सर्वगतः । सर्वं प्राप्तमनेन नास्य गगनमस्तीति सर्वगतः । कस्माच्चेतनः । सुखदुःखमोहोपलब्धिमत्त्वात् । कस्मादगुणः । सत्त्वरजस्तमांस्यस्मिन्न सन्त्यतोऽगुणः । कस्मान्नित्यः अकृतकत्वादनुत्पादकत्वाच्च । कस्माद् द्रष्टा । प्रकृतिविकारानुपलम्भेन इति । कस्माद्भोक्ता । चेतनभावात् सुखदुःखपरिज्ञानाच्च । कस्मादकर्ता । उदासीनत्वादगुणत्वाच्च । कस्मात् क्षेत्रविद् । क्षेत्रेभ्यो गुणान् वेत्तीति क्षेत्रविद् । अथ कस्मादमलः । शुभाऽशुभकर्माण्यस्मिन् पुरुषे न सन्तीत्यमलः । कस्मादप्रसवधर्मी । निर्बीजत्वात् । न किञ्चिदुत्पादयतीत्यर्थः । एवमेष सांख्यपुरुषो व्याख्यातः । अथास्य पुरुषस्य पर्यायाः । पुरुषः आत्मा पुमान् पुंगुणः

बहुलः जन्तुः जीवः क्षेत्रज्ञः नरः कविः ब्रह्म अक्षरः प्राणः अजः यः कः सः एषः। एवमेतानि पञ्चविंशतितत्त्वानि व्याख्यातानि। अष्टौ प्रकृतयः षोडशविकाराः पुरुषश्चेति॥

पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे रतः।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥

अत्राह पुरुषः किं कर्ता अकर्त्ता वेति। यदि कर्त्ता पुरुषः स्यात् तदा शुभानि कुर्यात्। ननु वृत्तित्रयं लोके दृष्टं पुरुषस्य ततः किं गुणानां कर्तृताऽसिद्धा ?।

धर्माख्यं सौहित्यं यमनियमनिषेवणं प्रख्यानम्।
ज्ञानैश्वर्यविरागाः प्रकाशनामिति सात्त्विकी वृत्तिः॥
रागः क्रोधो लोभः परपरिवादोऽतिरौद्रता ऽतुष्टिः।
विकृताकृतिपारुष्यं.प्रख्यातैषा तु राजसी वृत्तिः॥
प्रमादमदविषादा नास्तिक्यं स्त्रीप्रसङ्गिता निद्रा।
आलस्यं नैर्घृण्यमशौचमिति तामसी वृत्तिः॥

एतद्वृत्तित्रयं दृष्ट्वा लोके गुणानां कर्तृत्वं सिद्धमिति चाकर्त्ता पुरुषः सिद्धो भवति॥

प्रवर्त्तमानान् प्रकृतेरिमान् गुणान्
रजस्तमोभ्यां विपरीतदर्शनात्।
अहं करोमीत्यबुधोऽभिमन्यते
तृणस्य कुब्जीकरणे ऽप्यनीश्वरः॥

सर्वमिदं मया कृतं ममेदमिति वदन्नभिमानादबुध उन्मत्तः कर्तृवद्भवति अत्राह ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥
अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥

एवम् ।

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥

तत्राह किमयमेकः पुरुषो बहवो वेत्युच्यते ।

सुखदुःखमोहसङ्करविशुद्धकरणपाटवजन्ममरणकरणानां नानात्वात् पुरुषबहुत्वं सिद्धं लोकाश्रमवर्णभेदाच्च । यद्येकः पुरुषः स्यादेकस्मिन् सुखिनि सर्व एव सुखिनः स्युः । एकस्मिन् दुःखिनि सर्व एव दुःखिनः स्युः । एकस्मिन् करणपाटवे सर्वेषामेव करणपाटवं स्यात् । एकस्मिञ्जाते सर्व एव जायेरन् । एकस्मिन् मृते सर्व एव म्रियेरन्निति । न चैवम् इतश्च बहवः पुरुषाः सिद्धाः । आकृतिगर्भाशयभावसङ्गतिशरीराविभागे लिङ्गबहुत्वात् । एवं तावत् सांख्याचार्याः कपिलासुरिपञ्चशिखपतञ्जलिप्रभृतयो बहून् पुरुषान् वर्णयन्ति । वेदान्तवादिन

आचार्या हरिहरहिरण्यगर्भव्यासादय एकमेवात्मानं वर्णयन्ति । कस्मादेवं तदाह ।

पुरुष एवेदꣳ सर्वं भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्येनातिरोहति ॥
तदेवाग्निस्तदादित्यस्तद्वायुस्तद्धि चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म तदापः सः प्रजापतिः ॥
तदेव सत्यममृतं स मोक्षः सा परा गतिः ॥
तदक्षरं तत् सवितुर्वरेण्यं
यस्मात्परं नापरमस्ति किञ्चित् ॥

यस्मान्नाणीयो न ज्यायोऽस्ति कश्चिद् वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ।

सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वेषां प्रभुमीशानं सर्वस्य शरणं महत् ॥
सर्वतः सर्वतत्त्वानि सर्वात्मा सर्वसम्भवः ।
सर्वं विलीयते यस्मिन् तद्ब्रह्म मुनयो विदुः ॥
एक एव हि भूतात्मा देहेदेहे व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च ।

वसत्येको महानात्मा येन सर्वमिदं ततम् ॥
एकोऽयमात्मा जगतामेकेन बहुधा कृतः ।
पृथग् वदन्ति चात्मानं ज्ञानादिकप्रवर्तने(?) ॥
ब्राह्मणे कृमिकीटेषु श्वपाके शुनि हस्तिनि ।
पशुगोदंशमशके समं पश्यन्ति पण्डिताः ॥
एक एव यथा सूत्रं सुवर्णे वर्तते पुनः ।
मुक्तामणिप्रवालेषु मृण्मये रजते तथा ॥
तद्वद् गोषु मनुष्येषु तद्वद्धस्तिमृगादिषु ।
एकोऽयमात्मा विज्ञेयः सर्वत्रैव व्यवस्थितः ॥

अत्राह किं त्रैगुण्यं नामोच्यते । सत्त्वरजस्तमांसीति त्रिगुणा एव त्रैगुण्यम् । सत्त्वं नाम प्रसादलाघवप्रसन्नताभिषङ्गप्रीतितुष्टितितिक्षासन्तोषादिलक्षणमनन्तभेदं समासतः सुखात्मकम्। रजो नाम शोकतापस्वेदस्तम्भोद्वेगरोपमानादिलक्षणमनन्तभेदं समासतो दुःखात्मकम् । तमो नामाऽऽच्छादनावरणबीभत्सदैन्यगौरवालस्यनिद्राप्रमादादिलक्षणमनन्तभेदं समासतो मोहात्मकम् । एतत् त्रैगुण्यं व्याख्यातम् ।

सत्त्वं प्रकाशकं विद्याद्रजो विद्यात् प्रवर्तकम् ।
तमोऽप्रकाशकं विद्यात्त्रैगुण्यन्नाम संज्ञितम् ॥

अत्राह कः सञ्चरः प्रतिसञ्चरश्च । अत्रोच्यते ।

उत्पत्तिः सञ्चरः प्रलयः प्रतिसञ्चरः । तत्रोत्पत्तिर्नामा- ऽव्यक्तात् प्रागुपदिष्टात् सर्वतः पुरुषेण परेणाधिष्ठि- ता बुद्धिरुत्पद्यते । अष्टगुणा बुद्धिः । बुद्धितत्त्वादह- ङ्कार उत्पद्यते । स चाऽहंकारस्त्रिविधो वैकारिकस्तैजसो भूतादिरिति । तत्र वैकारिकादहंकारादेव इन्द्रिया- णि चोत्पद्यन्ते । भूतादेस्तन्मात्राणि । तैजसादुभयम् । तन्मात्रेभ्यो भूतानीति सञ्चरः । प्रतिसञ्चरो नाम भूतानि तन्मात्रेषु लीयन्ते । तन्मात्राणीन्द्रियाणि चाहंकारे । अहंकारो बुद्धौ । बुद्धिरव्यक्ते । तदव्यक्तं क्वचिन्न लीयते । कस्मादनुत्पद्यमानत्वात् प्रकृतिं पुरुषश्चैव त्रि- ज्ञानादि इत्येवं प्रतिसञ्चरो व्याख्यातः । तत्राह किं तद- ध्यात्ममधिभूतमाधिदैवतं चेति । तत्रोच्यते । बुद्धिरध्या- त्मम् बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतम् । अहंकारो ऽध्यात्मं मन्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम् । मनो- ऽध्यात्मं संकल्पितव्यमधिभूतं चन्द्रस्तत्राधिदैवतम् । श्रोत्रमध्यात्मं श्रोतव्यमधिभूतमाकाशस्तत्राधिदैवतम् । त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम् । चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतम् । जिह्वाऽध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैव- तम् । घ्राणमध्यात्मं घ्रातव्यमधिभूतं पृथ्वी तत्राधि-

दैवतम् । वागध्यात्मं वक्तव्यमधिभूतम् अग्निस्तत्राधि-
दैवतम् । पाणी अध्यात्मं ग्रहीतव्यमधिभूतमिन्द्रस्तत्रा-
धिदैवतम् । पादावाध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्रा-
धिदैवतम् । पायुरध्यात्ममुत्स्रष्टव्यमधिभूतं मित्रस्तत्राधि-
दैवतम् । उपस्थमध्यात्ममानन्दयितव्यमधिभूतं प्रजा-
पतिस्तत्राधिदैवतम् । एवमेतत् त्रयोदशविधस्य करण-
स्याध्यात्ममधिभूतमधिदैवतं व्याख्यातम् ।

तत्त्वानि यो वेदयते यथावद्
गुणस्वरूपाण्यधिदैवतं च ।
विमुक्तपाप्मा गतदोषसङ्घो
गुणाँस्तु भुङ्क्ते न गुणैः स भुज्यते ॥

अथ कास्ताः पञ्चाभिबुद्धय उच्यते । व्यवसायोऽभिमानेच्छा कर्तव्यता क्रियेति । अभिमुखी बुद्धिरिदं करणीयं मयेति व्यवसायो बुद्धिक्रिया । आत्मपरात्मस्वरूपप्रत्ययाभिमुखोऽभिमानोऽहंकारो बुद्धेः क्रिया । इच्छा वाञ्छा सङ्कल्पो मनसो बुद्धिक्रिया । शब्दादिविषयालोचनश्रवणादिलक्षणकर्तव्यता बुद्धीन्द्रियाणां बुद्धिक्रिया । वचनादिलक्षणबुद्धिक्रिया कर्मेन्द्रियाणां सा क्रियेति । एवमेताः पञ्चाभिबुद्धयो व्याख्याताः ।

अथ कास्ताः पञ्चकर्मयोनय उच्यन्ते । धृतिः

श्रद्धा सुखाऽविविदिषा विविदिषा च पञ्चकर्मयोनयः ।

वाह्यकर्माणि संकल्प्य प्रतीतं योऽभिरक्षति ।
तन्निष्ठस्तत्प्रतिष्ठश्च धृतरेतद्धि लक्षणम् ॥
स्वाध्यायो ब्रह्मचर्यं च यजनं याजनं तपः ।
दानं प्रतिग्रहो होमः श्रद्धाया लक्षणं स्मृतम् ॥
सुखार्थं यस्तु सेवेत ब्रह्मकर्मतपांसि च ।
प्रायश्चित्तपरो नित्यं सुखेयं परिकीर्तिता ॥

विषयमधुमिश्रितान्तःकारणत्वमविविदिषा । विविदिषा च ध्यानिनां प्रज्ञानयोनिः ।

एकत्वं च पृथक्त्वं च नित्यं चैवमचेतनम् ।
सूक्ष्मं सत्कार्यमक्षोभ्यं ज्ञेया विविदिषा च सा ॥

कार्यकारणक्षयकरी विविदिषा प्राकृतिकी वृत्तिः । धृतिः श्रद्धा सुखाऽविविदिषा चतस्रो बन्धाय विदिषैका मोक्षाय । एवमेताः पञ्च कर्मयोनयो व्याख्याताः ।

अत्राह के पञ्चवायव उच्यन्ते ।

प्राणोपानः समानश्च उदानो व्यान एव च ।
इत्येते वायवः पञ्च शरीरेषु शरीरिणाम् ।

तत्र प्राणो नाम वायुर्मुखनासिकाधिष्ठाता प्रणयनात्प्रक्रमणाच्च प्राण इत्यभिधीयते । अपानो नाम वायुर्नाभ्यधिष्ठाताऽपनयनादधोगमनाच्चापान इत्य-

भिधीयते। समानो नाम वायुर्हृदधिष्ठाता समंनयनात् सङ्गमनाच्च समान इत्यभिधीयते। उदानो नाम वायुः कण्ठाधिष्ठाता ऊर्ध्वगमनादुत्क्रमणाच्चोदान इत्यभिधीयते। व्यानो नाम वायुः सन्ध्यधिष्ठाता विक्षेपणाद्विजृम्भणाच्च व्यान इत्यभिधीयते। इति पञ्चवायवो व्याख्याताः।

अत्राह के ते पञ्चकर्मात्मान इत्युच्यते। वैकारिकस्तैजसो भूतादिः सानुमानो निरनुमानश्च। तत्र वैकारिकः शुभकर्मकर्ता। तैजसोऽशुभकर्मकर्ता। भूतादिर्मूढकर्मकर्ता। सानुमानः शुभमूढकर्ता। निरनुमानोऽशुभमूढकर्ता चैवं पञ्चकर्मात्मानो व्याख्याताः।

अत्राह का सा पञ्चपर्वाऽविद्येत्युच्यते। तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्रश्चेति। तत्र तमोमोहावुभावष्टात्मकौ। महामोहो दशात्मकः। तामिस्रोन्धतामिस्रश्चाष्टादशात्मकौ। तमो नामाष्टसु प्रकृतिष्वव्यक्तबुद्ध्यहंकारपञ्चतन्मात्रसंज्ञितास्वनात्मस्वात्माभिमानस्तम इत्यभिधीयते। मोहो नामाणिमाद्यष्टैश्वर्यप्राप्तये योऽभिमान उत्पद्यते स मोह इत्यभिधीयते। महामोहो नाम दृष्टानुश्रविकेषु शब्दादिविषयेषु दशसु वृत्तिषु मुक्तोहमिति मन्यते स महामोह इत्यभिधीयते। तामिस्रो नामाष्टगुणैश्वर्ये-

ऽणिमाद्ये दशविधे च विषये यो द्वेषोऽप्रतिहतस्तत्र यद्
दुःखमुत्पद्यतेऽसौ तामिस्र इत्यभिधीयते । अन्धता-
मिस्रो नामाष्टगुणैश्वर्ये ऽणिमाद्ये दशविधे च विषये सिद्धे
मरणकाले यो विषाद उत्पद्यते सोऽन्धतामिस्र इत्यभि-
धीयते । एवमेषा पञ्चपर्वाऽविद्या द्विषष्टिभेदा व्याख्याताः ।

अत्राह का साऽष्टाविंशतिधाऽशक्तिरत्रोच्यते ।
एकादशेन्द्रियवधाः सप्तदश तुष्टिसिद्धि(बुद्धि)वधाः ।
एषाष्टविंशतिधाऽशक्तिरिति । तत्रेन्द्रियवधास्तावदुच्यन्ते ।
श्रोत्रे बाधिर्यं जिह्वायां जडत्वं त्वचि कुष्ठित्वं चक्षु-
ष्यंरूपत्वं नासिकायामघ्राणत्वं वाचि मूकत्वं हस्तयोः
कुणित्वं पादयोः पङ्गुत्वं वागिन्द्रिय उदावर्त्त उ-
पस्थेन्द्रिये क्लैब्यं मनस्युन्माद इत्येकादशेन्द्रियवधाः ।
सप्तदशतुष्टिसिद्धिवधा नाम विपर्ययास्तुष्टिसिद्धीनाम् ।
तुष्टिविपर्ययास्तावदुच्यन्ते । तत्र नास्ति प्रधानमिति
या प्रतिपत्तिरनन्ता । एवमहमित्यात्मज्ञाने तामसलीना
तथाहंकारस्याऽदर्शनमविद्या । नैव सन्ति तन्मात्राणि
भूतकारणानीत्यवृष्टिः । विषयाणामर्जने प्रवृत्तिरसुतारा ।
रक्षणे तु प्रवृत्तिरसुपारा च । क्षयदोषमदृष्ट्वाऽर्थे प्रवृत्ति-
रसुनेत्रा । भोगा शक्तिरसुमरीचिका । हिंसादोषमपश्यतो
भोगारम्भोऽनुत्तमाम्भसिका । इति तुष्टिविपर्यया नव-

धाऽतुष्टयो व्याख्याताः । अथ सिद्धिविपर्यया असिद्ध-योऽष्टौ चाभिधीयन्ते । नानात्वं भूतमात्रस्यैकत्व-माविर्भूतमतारमुच्यते । शब्दमात्रश्रवणाद्विपरीतग्रहण-मासुतारं यथा नानात्वज्ञो मुक्त इति श्रुत्वा विपरीतं प्रतिपन्नो नानात्वज्ञो ह्यमुक्त इति । अध्ययनश्रवणाभि-निविष्टस्यापि जडत्वादसच्छास्त्रोपहतबुद्धित्वाद्वा पञ्च-विंशतितत्त्वज्ञानसिद्धिर्न भवति तदाऽतारतारं तदज्ञा-नम् । कस्यचिदाध्यात्मिकेन दुःखेनाभिभूतस्यापि संसारे-ऽनुद्वेगादजिज्ञासोर्न ज्ञानं तदप्रमादम् । एवमप्रमुदिता-प्रमोदमानयोश्चान्योन्ययोर्द्वयमपरं द्रष्टव्यम् । सुहृदुप-दिष्टेऽप्यनिश्चयबुद्धेरज्ञानम् परस्परमसम्पा । असम्पा-वचनादथवा पराङ्मुखे गुरौ दुर्भाग्यस्य ज्ञानासिद्धि-स्तदज्ञानमसत्प्रमुदितमिति । एवमेते सिद्धिविपर्यया अ-सिद्धयोऽष्टौ व्याख्याताः । एवमेषाऽष्टविंशतिधाऽशक्ति-र्व्याख्याता ।

अत्राह का सा नवधा तुष्टिरत्रोच्यते । प्रकृतिं परमार्थत्वेन परिकल्प्य परितुष्टे माध्यस्थं लभते तस्य तुष्ट्या सा तान्त्रिकी संज्ञाऽम्भ इति । अपरो बुद्धिं प-रमार्थत्वेन प्रतिपद्य परितुष्टस्तस्यास्तुष्टेः सलिला इति संज्ञा । अन्योऽहंकारं परमार्थत्वेनाभ्युपगम्य परितुष्टस्त-

स्यास्तुष्टेः रोध इति संज्ञा । इतरस्तन्मात्राणि भोग्यानि परमार्थत्वेन विनिश्चित्य परितुष्टस्तस्य तुष्टेर्वृष्टिरिति संज्ञा । एवमाध्यात्मिकयश्चतस्त्रस्तुष्टयो भवन्ति । चतसृष्वपि तुष्टिषु नास्ति मोक्षस्तत्त्वज्ञानस्यासम्भवात् । बाह्यार्थार्जनरक्षणक्षयसङ्गहिंसादिदोषदर्शनाद्विषयोपरमे पञ्चतुष्टयो भवन्ति । अर्थानामर्जने दोषदर्शनात् तुष्टः प्रव्रजितस्यापि नास्ति मोक्षस्तत्त्वज्ञानाभावात् । सा पञ्चमी तुष्टिः सुतारेत्यभिधीयते । अन्योऽर्थानां रक्षणे दोषदर्शनात् तुष्टः प्रव्रजितस्यापि नास्ति मोक्षस्तत्त्वज्ञानाभावात् सा षष्ठी तुष्टिः सुपारेत्युच्यते । अन्योऽर्थानां क्षयदोषदर्शनात् तुष्टः प्रव्रजितस्यापि नास्ति मोक्षस्तत्त्वज्ञानाभावात् सा सप्तमी तुष्टिः सुनेत्रेत्यभिधीयते । अन्योऽर्थानां सङ्गदोषदर्शनात् तुष्टः प्रव्रजितस्यापि नास्ति मोक्षस्तत्त्वज्ञानाभावात् साऽष्टमी तुष्टिः सुमरीचिकेत्यभिधीयते । अन्यो भूतानामर्थनिमित्तं हिंसादिदोषदर्शनान्निवृत्तस्तुष्टः प्रव्रजितस्यापि नास्ति मोक्षस्तत्त्वज्ञानाभावात् सा नवमी तुष्टिरुत्तमाम्भसिकेत्यभिधीयते । इत्येता नवतुष्टयो व्याख्याताः ।

अत्राह काऽष्टौ सिद्धय इत्यत्रोच्यते । यदूहेन ज्ञानमुत्पद्यते तत्त्वभावभूतेषु सा प्रथमा सिद्धिस्तारे-

त्यभिधियते । यच्छब्दमात्रेण ज्ञानमुत्पद्यते तत्त्वभात्रभूतेषु सा सिद्धिः सुतारेत्यभिधीयते । यदध्ययनेन ज्ञानमुत्पद्यते तत्त्वभात्रभूतेषु सा तृतीया सिद्धिस्तारयन्तीत्यभिधीयते । यदाध्यात्मिकस्य दुःखस्यापनोदनं कृत्वा ज्ञानमुत्पद्यते तत्त्वभात्रभूतेषु सा चतुर्थी सिद्धिः प्रमुदितेत्यभिधीयते । यदाधिभौतिकस्य दुःखस्यापनोदनं कृत्वा ज्ञानमुत्पद्यते तत्त्वभात्रभूतेषु सा पञ्चमी सिद्धिः प्रमुदितेत्यभिधीते । यदाधिदैविकस्य दुःखस्यापनोदनं कृत्वा ज्ञानमुत्पद्यते तत्त्वभात्रभूतेषु सा षष्ठी सिद्धिः प्रमोदमानेत्यभिधीयते । यत्तु स्निग्धसंसर्गाव्यपायाज्ज्ञानमुत्पद्यते तत्त्वभात्रभूतेषु सा सप्तमी सिद्धिः रम्यकेत्यभिधीयते । यत् परिचर्यादानेन ज्ञानमुत्पद्यते तत्त्वभात्रभूतेषु परितोषिते गुरौ साष्टमी सिद्धिः सत्प्रमुदितेत्यभिधीयते । इत्येता अष्टासिद्धयो व्याख्याताः ॥

अत्राह के दशमूलिकार्था इत्यत्रोच्यते ।

अस्तित्त्वमेकत्वमथार्थवत्त्वम्
परार्थमन्यत्वमकर्तृता च ।
योगो वियोगो बहवः पुमांसः
स्थितिः शरीरस्य च शेषवृत्तिः ॥

इत्येते दशमूलिकार्थाः ।

तेन्द्रियाणामज्ञानिनां काममोहितानां वैकारिकबन्ध इत्युच्यते। दक्षिणाबन्धो नाम ब्रह्मचारिगृहस्थभिक्षुवैखानसानां काममोहोपहतचेतसामभिमानपूर्विकां दक्षिणां प्रयच्छतां दक्षिणाबन्ध इत्युच्यते। इति त्रिविधो बन्धो व्याख्यातः। उक्तं च।

प्राकृतेन तु बन्धेन तथा वैकारिकेण च।
दक्षिणाभिस्तृतीयेन बन्धोयं च निगद्यते॥

अत्राह कस्त्रिविधो मोक्ष इत्यत्रोच्यते। ज्ञानोद्रेकादिन्द्रियरागोपशमात् कृत्स्नक्षयाच्चेति। ज्ञानोद्रेकादिन्द्रियरागोपशमात् स्वधर्माधर्मक्षयो भवति धर्माधर्मक्षयाच्च कैवल्यमिति। उक्तं च।

आद्यो हि मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात्।
कृत्स्नक्षयात् तृतीयस्तु व्याख्यातं मोक्षलक्षणम्॥

किं त्रिविधं प्रमाणमित्यत्रोच्यते। दृष्टमनुमानमाप्तवचनं चेति एतत् त्रिविधं प्रमाणम्(१)। दृष्टं तावद् व्याख्यायते यावदिन्द्रियाणां पञ्चेन्द्रियार्थाः प्रत्यक्षा

(१) प्रत्यक्षमेकमिति चार्वाकः। प्रत्यक्षानुमाने इति कणादसुगतमतानुयायिनः। शब्देन सह त्रीणीति सांख्याः। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति नैयायिकाः। अर्थापत्त्या सह पञ्चेति प्राभाकराः। अनुपलब्ध्या सह षडिति वेदान्तिनः। संभवेन सह सप्तेति आलङ्कारिकाः। ऐतिह्येन सहाष्टौ प्रमाणानीति पौराणिका इति प्रमाणनिर्णयः॥

एव दृष्टम्। अनुमानम् प्रमाणं लिङ्गदर्शने जायमानं ज्ञानम्। यथा मेघोदयेन वृष्टिः साध्यते बकपङ्क्तिभिः सलिलम् धूमेनाग्निः तदनुमानम्। प्रत्यक्षेणानुमानेन वा योऽर्थो न साध्यते स आप्तवचनात् साध्यते। यथेन्द्रो देवानां राजा उत्तराः कुरवः सौवर्णो मेरुः स्वर्गेऽप्सरस इति। त इन्द्रादयः प्रत्यक्षानुमानासाध्याश्च वसिष्ठादयो मुनयो वदन्ति सन्तीन्द्रादयः आगमोऽप्यस्ति।

स्वकर्मण्यभियुक्तो यो रागद्वेषविवर्जितः।
ज्ञानवान् शीलसम्पन्न आप्तो ज्ञेयस्तु तादृशः॥

एवमेतत् त्रिविधं प्रमाणमभिहितम्। अत्राह तेन त्रिविधेन प्रमाणेन किं साध्यते अत्रोच्यते। यथा लोके मानेन प्रस्थादिना धान्यानि मीयन्ते। तुलया चन्दनादीनि द्रव्याणि। एवमनेन तत्त्वभावभूतानि प्रमीयन्ते। त्रिविधेन दुःखेनाभिभूतो ब्राह्मणः कपिलमहर्षिशरणमुपागतः अत्राह।

किं त्रिविधं दुःखमित्यत्रोच्यते। आध्यात्मिकमाधिभौतिकमाधिदैविकमिति। तत्राध्यात्मिकं द्विविधं शारीरं मानसं चेति। शरीरे भवं शारीरम् मनसि भवं मानसमिति। तत्र शारीरं नाम वातपित्तश्लेष्मणां वैषम्याद्यद्दुःखमुत्पद्यते ज्वरातिसारविसूचिकामूर्छादिकं तच्छा-

रीरमुच्यते । कामक्रोधलोभमोहमदेर्ष्यादिकं प्रियत्रियोगादिकं तन्मानसमित्युच्यते । अधिभूतेभ्यो भवमाधिभौतिकम् । मानुषपशुमृगसरीसृपस्थावरेभ्यो यद्दुःखमुत्पद्यते तदाधिभौतिकम् । अधिदेवेभ्यो जातमाधिदैविकम् । शीतोष्णवातवर्षासन्निपातादिनिमित्तं(१) यद्दुःखमुत्पद्यते तदाधिदैविकम् । अनेन त्रिविधेन दुःखेनाभिभूतस्य ब्राह्मणस्य जिज्ञासोत्पन्ना । ज्ञातुमिच्छा जिज्ञासा । यथा तृषितस्य पानीयं पातुमिच्छा पियासा । एतत्समासतो निःश्रेयसं ज्ञानम् । यज्ज्ञात्वा पुनर्जन्म न स्यादिति ॥

एतन्महर्षेर्विज्ञानं कपिलस्य महात्मनः ।
यच्छ्रुत्वा ब्राह्मणः श्रेयः कृतकृत्योऽभवत् तदा ॥
सांख्यसूत्रक्रमेणैषा व्याख्याता क्रमदीपिका ।
अनुष्टुपछन्दसा चात्र ज्ञेयं श्लोकशतत्रयम् ॥

इति श्रीतत्त्वसमासाख्या सूत्रवृत्तिः समाप्ता(२) ॥

---

(१) वर्षाद्यावेशनिमित्तं–पा० ३ पु० ।
(२) इति सांख्यसूत्रप्रक्षेपिका–पा० ३ पु० ।

ॐ नमः परमात्मने ।

# सांख्यतत्त्वप्रदीपिका ।

दुर्निवारमनस्तापनिवारणपटीयसीम् ।
जगदानन्दसन्दोहजननीमहमाश्रये ॥ १ ॥
भट्टकेशवसम्भूतसदानन्दात्मजः सुधीः ।
यजुर्वित् केशवः प्राह किञ्चित् सांख्ये यथामति ॥२॥

इह द्विविधं तत्त्वं प्रकृतिः पुरुषश्चेति । प्रकृतिरेव प्रधानमित्यभिधीयते सत्त्वादित्रिगुणा नित्येति प्रकृतिस्वरूपलक्षणम् । विकाररहितत्वाच्च नित्यैवेयम् । पुरुषे अतिव्याप्तिवारणाय सत्त्वादित्रिगुणेत्युक्तम् । सत्त्वादयस्त्रयो गुणा यस्या इति विग्रहः । महदादितत्त्वानामपि त्रिगुणात्मकत्वात् तत्रातिप्रसङ्गवारणाय नित्येति । तटस्थलक्षणं तु जगदुपादानकारणं प्रकृतिरिति । तथाहि विमतं सुखदुःखमोहसामान्योपादानकं नियमेन तदन्वितस्वभावत्वात् यन्नियमेन यदन्वितस्वभावं तत् तत्सामान्योपादानकं यथा मृत्सामान्यान्वितस्वभावं घटशरावादि

तथाहि काचन तरुणी कस्यचित् कान्तस्य सुखमुत्पादयति कस्यचिन्मोहं कस्यचिद्द्वेषमिति तत्कस्य हेतोस्तं तं प्रति सुखदुःखमोहात्मकसत्त्वरजस्तमसामाविर्भावात् ।

सा च चतुर्विंशतिधा प्रकृतेः प्रथमो महानिति विकारः परिणाम इति यावत् महत्तत्त्वमेव बुद्धितत्त्वमित्यभिधीयते अहमित्यहंकाराख्यो महत्तत्त्वस्य प्रथमो विकारः तदनन्तरं पञ्चतन्मात्राः शब्दस्पर्शरूपरसगन्धाख्या भवति अथाकाशादिभूतपञ्चकं अथैकादशाक्षाणि श्रोत्रस्पर्शनचक्षूरसनघ्राणवाग्गुदलिङ्गकरचरणान्तःकरणान्येकादशेन्द्रियाणि भवन्ति । तत्र महत्तत्त्वमहंकारतत्त्वं शब्दाद्याः पञ्चतन्मात्रा इत्येतत् तत्त्वसप्तकं प्रकृतिविकृतिभावापन्नं पूर्वं पूर्वं प्रति कार्यत्वमुत्तरोत्तरं प्रति कारणत्वमित्यर्थः । तथाहि महत्तत्त्वं मूलप्रकृतेः कार्यं कारणं चाहंकारतत्त्वस्य अहंकारतत्त्वं तथा महत्तत्त्वस्य कार्यं कारणं च शब्दतत्त्वाख्यादितन्मात्रं प्रति तथाहि तदपि पूर्वं प्रति कार्यमुत्तरं प्रति कारणं चेति बोध्यम् । आकाशादिभूतपञ्चकमेकादशेन्द्रियाणीत्येते पुनः षोडशभावाश्च प्रकृतिजन्या एव न तु कस्यचित् प्रकृतिः तत्त्वान्तरोपादानरूपत्वाभावात् । सेयं प्रकृतिरचेतना परिणामित्वात् ॥

ननु विषयाणां घटादीनां चेतनसम्बन्धः साक्षादेवास्तु किं महदादिप्रणालिकयेति चेत। तत् किं चितिरेव विषयबन्धनस्वभावा तथा सति चैतन्यनित्यतया मोक्षः कदापि न स्यात् । अथ चैतन्यं प्रकृतौ प्रतिबिम्बितं प्रकृतिविषययोरस्तु साक्षात् सम्बन्धः स्यात् किं महदादिनेति चेत् तथाहि पुरुषवन्नित्यतया पुनरनिर्मोक्षापत्तिरेव। अथ चितिर्विषयसम्बद्धस्वभावा मास्तु विषया एव चिति सम्बद्धस्वभावाः सन्तु तथा च विषयतिरोभावे मोक्षः स्यादिति चेत् तर्हीदं दृष्टमिति न स्यात् सर्वथा चितिसम्बन्धस्वाभाव्येनाव्यवधानात । अथ विषया इन्द्रियद्वारा चितिसम्बद्धात्मानः सन्तु दृष्टादृष्टव्यवहारादि सन्निकर्षविप्रकर्षाभ्यामुपपत्स्यत इति चेन्न व्यासङ्गानुपपत्तेः इन्द्रियसम्बद्धे विषये ज्ञानोत्पत्तेरावश्यकत्वात । अथ व्यासङ्गानुपपत्त्या मनः कल्प्यतां किमहंकारेण मैवं एवं च सति स्वस्मिन् व्याघ्रोऽहं वराहोऽहमिति नारोपयेत किंत्विन्द्रियं मनोद्वारा चितिसम्बद्धं स्वकीयं नरत्वमेव गृह्णीयात् । अथैवमहंकारोऽस्तु स्वप्नदशायामारोपार्थं बुद्धितत्त्वे न मानमस्ति मैवं सुषुप्त्यवस्थायां मनोवदहंकारोऽपि निवृत्तव्यापार एव तथा च श्वासप्रयोजकजीवनयोनियत्नस्य व्यापारः स्यादिति तदनुरोधेन बुद्धितत्त्वस्या-

स्यावश्यकत्वात् तस्माद्बुद्धितत्त्वं परिगमेन(?) सम्बद्धो विषयो गजतुरगमहिषादिः पुरुषेण चैतन्येन सम्बध्यते तत आसंसारबुद्धितत्त्वनाशादेव च मोक्ष इति नानिर्मोक्षः।

अकारणमकार्यं च कूटस्थचैतन्यरूपः पुरुषः अत्रायं पुरुषः स्वयं ज्योतिरिति श्रुत्या तावत् स्वप्रकाशमात्मनोऽभिधीयते स्वप्रकाशं च विज्ञानमेव तेनात्मनः स्वप्रकाशत्वमभिदधतीयं श्रुतिर्विज्ञानात्मकतां पुरुषस्यावेदयति। न च क्षणिकस्य ज्ञानस्य नित्यपुरुषात्मकत्वं सम्भवतीति ज्ञानस्य क्षणभङ्गुरत्वासिद्धेः विनाशव्यवहारस्य तत्र घटाकाशादिविनाशव्यवहारवदौपाधिकत्वेनाप्युपपत्तेः पुरुषातिरिक्तचैतन्यस्वीकर्तुस्तत्रापि मते ज्ञानस्य क्षणिकत्वे मानाभावः अन्यथा कालान्तरेऽनुभूतस्मरणानुपपत्तिः। न च संस्कारो द्वारं तत्कल्पनापेक्षया ज्ञानस्य स्थैर्यकल्पनायां लाघवात् नित्यत्वाच्चासौ न कस्यचिद्विकारः न वा कारणं स्वप्रकाशत्वात् यदि हि स्वप्रकाशस्याप्यस्य प्रकृतित्वमाश्रीयते तर्ह्येतद्विकृतित्वेनाभिमतस्यापि स्वप्रकाशत्वमस्य वा जडत्वमापद्येत समानयोरेव प्रकृतिविकृतिभावोपलम्भात् भेदाग्रहाच्च निष्क्रियेपि पुरुषे कर्तृत्वाभिमानः एवं सुखदुःखादिव्यवहारोपि तथाहि परिशुद्धचैतन्यविग्रहः प्रकृतिविकृतिभावानपेततटस्थः

पुष्करपलाशवन्निर्लेपोऽप्यन्तःकरणाकारपरिणतप्रकृतिता-दात्म्यमविवेकलक्षणमविद्यया प्रतिपद्यते ततश्चेतरेतरा-ध्यासादन्तःकरणवृत्तीनां दुःखादीनां पुरुषे पुरुषधर्मा-णां चिच्चैतन्यादीनामन्तःकरणेऽध्यासादहं दुःखीत्यादि-व्यवहारो भवतीति। अविद्यानामाताविकी ख्यातिः सा च तमोगुणोद्रेकादाविर्भवन्ती विविक्तयोस्तादा-त्म्यमवभासयति। ततश्चोत्तरेषामस्मितारागद्वेषाभिनि-वेशानां क्लेशशब्दाभिधेयानां हेतुरविद्येति गी-यते। तत्सिद्धं निर्लेप एवायमिति। असङ्गो ह्यय-मिति श्रुतेरुपपद्यते च। न च कोप्यस्य व्यापार इति आलोचनं तावदिन्द्रियव्यापारः विकल्पस्तु म-नसः अभिमानोहंकारस्य कृत्यध्यवसायो बुद्धेः। अथ कृत्यध्यवसायः कृतिमत्तया ज्ञानं तत्कथमचेतनाया बुद्धेरिति बुद्धिरंशत्रयवती पुरुषोपरागो विषयोपरागो व्यापारावेशश्चेति। भवति हि ममेदं कर्तव्यमिति तत्र ममेत्यंशश्चेतनस्य दर्पणनिर्मलाया बुद्धेः प्रतिबि-म्ब उपधानं तच्चातात्विकमेव चैतन्येन बुद्धेर्वास्तवसम्ब-न्धाभावात् यथा दर्पणं मुखसम्बन्धमन्तरेणापि पुरुष-भ्रमस्तद्वदिहापि। इदमिति विषयोपधानं तच्च वास्त-वमेव इन्द्रियप्रणालिकया बुद्धौ ज्ञानरूपविषयसम्ब-

न्धात् दर्पणस्येव निश्वासाभिहतस्य मालिनिमा पारमार्थिकः पुरुषोपरागैः विषयोपरागमाहिम्ना च कृतिमत्त्वाध्यवसायः अयमेव व्यापारावेशः। अथ ज्ञानमेव चैतन्यं कथमनयोर्भेद इति उच्यते कृत्यध्यवसायलक्षणव्यापारविशिष्टा बुद्धिरिन्द्रियप्रणालिकया बुद्धेर्विषयस्य घटादेः सम्बन्धो वृत्तिविशेषस्तदेव ज्ञानं विषयोपरागेण सह यः पुरुषोपरागस्यातात्त्विकः सम्बन्धः स उपलब्धिः यथा दर्पणानिष्ठा मलिनिमा दर्पणप्रतिबिम्बितमुखे दृश्यते तथेति यावत्। तथा घटमहं जानामीत्यनुव्यवसायाख्योपलब्धिरिति विभावनीयम्।

तदेव ज्ञानं सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मरूपा अष्टौ भावा बुद्धेरेव अहं जाने सुखीत्यादिसामानाधिकरण्यप्रतीतेः। ननु यत्रैते धर्माः स एव चेतनः किं न स्यादिति चेन्न अनित्यधर्मरूपतया परिणामित्वात् धर्मधर्मिणोरभेदात्। ये पुनस्तयोर्भेदं प्रतिपन्नास्तार्किकप्रभृतयस्ते तावन्नीलो घट इत्याद्यभेदावगाहिप्रत्ययमपश्यन्त उपेक्षणीयाः। ननु प्रधानस्याचैतनस्य कथं जगत्कर्तृत्वं यत् खलु नाम्ना रूपेण च व्याक्रियते तच्चेतनकर्तृकं दृष्टं यथा घटादि। चित्राद्यध्यासितं च जगन्नामरूपेण व्याकृतं तस्माच्चेतनकर्तृ-

कमिति सम्भाव्यते चेतनो हि बुद्धावालिख्य नामरूपे घट इतिनाम्ना रूपेण च कम्बुग्रीवादिना वाह्यं घटं निष्पादयति । अत एव घटस्य निवर्त्यस्याप्यन्तःसंकल्पात्मना सिद्धस्य कर्मकारकभावो घटं करोतीति ।

अत्र वदामः चैतन्यस्य जगदुपानत्वे जगतो जडत्वानुपपत्तिः यत् कार्यं तच्चेतनकर्तृकमिति व्याप्त्या शरीरी कर्ता स्यात् किं च तथापि ज्ञानस्य चैतन्यविशिष्टस्य क्षित्यादिजनकत्वे मानाभावः कुलालादिज्ञानेच्छयोः कृतिजनकत्वेनैवान्यथासिद्धत्वात् ईश्वरकृतेश्च जन्यत्वात् । अथ यः कृतिमान् स ज्ञानवानिति व्याप्त्या तत्सिद्धिः एवं हि यो ज्ञानवान् स सुखीत्यादिव्याप्त्या सुखमपीश्वरे स्यात् अप्रयोजकत्वं चेत् तुल्यं तत्रापि । कर्मैव जगत्कारणमित्यपि ये प्रतिपन्नास्ते तावन्नात्यन्तं परिहर्तव्याः धर्माधर्मात्मकार्थानर्थलक्षणचोदनालक्षणस्य प्रकृत्यभेदात् बुद्ध्याकारपरिणताया एव प्रकृतेरष्टौ भावा इत्यभ्युपगमात् ।

अथेदानीं प्रमाणं विवेचयामः । तत् तावत् त्रिविधम् प्रत्यक्षानुमानागमभेदात् । प्रत्यक्षप्रमाकरणं प्रत्यक्षम् । लिङ्गमनुमानम् । अथातीतानागतयोः कथं लिङ्गभावः जात्या धर्माधर्मात्मना तत्सत्त्वात् । आप्तवचनं शब्दः

यथास्मिन्नरपतिनिलये गजरथतुरगाः सन्तीति । पान्थ-सकलाध्यायवचन(?)मनुमाने चरितार्थत्वान्नोपमानमर्हति।

अर्थापत्तिरभावश्च सम्भवश्चेष्टितं तथा ।
नैतिह्यमागमात्तद्धि व्यक्तमन्यत्र विस्तरात् ॥

स चायं पुरुषः प्रतिशरीरं भिन्नः । तथाहि विमतानि शरीराणि स्वसंख्यासंख्येयात्मवन्ति शरीरत्वात् सम्प्रतिपन्नवत् किं चैवं यथैकस्मिन्नेव जीवति देवदत्ते शरीरे जाते वा चेष्टावति वा मृते वा भावोपि जातचेष्टावान् मृतः किलेति लोको व्यवहरति तथा शरीरान्तरेपि तथैव व्यवहारात् तस्मात् पुरुषभेदोभ्युपेयः ।

एकमेवाद्वितीयमित्यादिश्रुतिश्च कथञ्चिदुपचरितार्थत्वेन तथा आत्मनो हि विभुनित्यत्वादभिन्नदेशकाला इत्येकत्वेनोच्यते अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इत्यादिश्रुतेश्च पुरुषभेदमवगच्छामः । किं पुनरस्य प्रयोजनं निःश्रेयसं किं तत् अखिलानर्थमूलभूताया अविद्यायाः सत्त्वातिशयविशेषाविर्भूतविद्यया विनाशे सति तत्पुरुषस्य सहजचैतन्यात्मनावस्थानं तन्मोक्षापरपर्यायं निःश्रेयसं प्रकृतिपुरुषविवेकज्ञानं च तद्धेतुः ।

ननु प्रकृतेर्नित्यत्वात् पुनरपि तमोद्रेकसम्भवाद्-

त्रिधाविर्भावसम्भवे मुक्तिप्रच्युतिः स्यादिति । नैतत् दृढतमचित्तवृत्तिनिरोधलक्षणयोगबलात् पुनरुद्रेकानुपपत्तेः । यदाहुः स तु दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिर्व्युत्थानसंस्कारेण न बाध्यत इति । अथ निर्लेपस्यास्य महापुरुषस्य सम्बन्ध एव न कुतोऽपवर्ग इति सत्यमाह किं तु प्रकृतेरेव बन्धमोक्षौ पुंस्युपचर्य्येते तदाहुः ।

रूपैः सप्तभिरेवं वध्नात्यात्मनमात्मना प्रकृतिः ।
सैव च पुरुषास्यार्थं विमोचयत्येकरूपेण ॥ इति ।

अयमर्थः धर्माधर्मवैराग्यावैराग्यैश्वर्यानैश्वर्यज्ञानाज्ञानान्यष्टौ प्रकृतिरूपाणि तत्र ज्ञानव्यतिरिक्तैः धर्माधर्माद्यैः सप्तभीरूपैः प्रकृतिरात्मनैवात्मानं बध्नाति एकरूपेण ज्ञानाख्येन च विमोचयतीति । यदाहुः ।

धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते वंन्धम् ॥ इति ।

शिष्टं सकलमकलङ्कं चाभ्युदयसिद्धान्तसिद्धमित्युपेक्षितमिति ।

दलितानर्थमूलाय सर्वतत्त्वार्थदर्शिने ।
करुणापूर्णचित्ताय कपिलाय नमो नमः ॥

इति सांख्यार्थतत्त्वप्रदीपिका समाप्ता ॥

# अथ सांख्यतत्त्वप्रदीपः ।

श्रीगणेशाय नमः ।

प्रकृतिं पुरुषं शुद्धं प्रणिपत्य प्रणीयते ।
प्रदीपः सांख्यतत्त्वस्य परोपकृतये मया ॥

इह खलु भवाद्दविच्छिन्नस्तोत्तरणोपाया इव सांख्यतन्त्राध्ययनपरिश्रमालसास्तत्प्रक्रियाज्ञानतरीविहीनाः शब्दोदधावनन्यावलम्बनाः सीदन्ति तत्तरणोपायः सकलसांख्यप्रक्रियाद्योतको बह्वर्थोऽल्पाक्षरो मया प्रकाश्यते । कापिलतन्त्राध्ययनालसैस्तत्प्रक्रियाजिज्ञासायामिदमेव प्रकरणं सम्यगवलोकनीयमस्युग्रशुभाशुभादृष्टफलवत् प्रयत्नं विनैव सर्वमत्रैवाधिगन्तव्यम् अयत्नलब्धेर्थे यत्नादर्शनात् । उक्तं च सांख्याचार्यैः ।

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥

ऋजुमार्गेण सिद्ध्यतोर्थस्य वक्रेण साधनायोगात् इति केचित् ।

दुःखत्रयाभिघातोद्विग्नचित्तास्तन्निवृत्त्युपायमेव तावदभिकामयन्ते । तं चाग्रे दर्शयिष्यामः । दुःखत्रयं च आध्यात्मिकमाधिभौतिकमाधिदैविकं च । तत्राध्यात्मिकं द्विधा शारीरं मानसं च वातपित्तश्लेष्मणां वैषम्यनिमित्तं शारीरम् कामक्रोधलोभमोहेर्ष्याविषादविषयविशेषादर्शनकारणकं मानसम् । आन्तरोपायसाध्यत्वादाध्यात्मिकं दुःखमिति व्यपदिश्यते । बाह्योपायसाध्यमपि दुःखं द्विविधम् । आधिभौतिकमाधिदैविकं च । तत्राधिभौतिकं मानुषपक्षिसरीसृपस्थावरनिबन्धनम् । आधिदैविकं यक्षराक्षसविनायकग्रहाद्यावेशनिमित्तम् । सर्वं मानसप्रत्यक्षम् । एतद् दुःखं रजःपरिणामविशेषो नित्यपरिणामित्वादिदमपि नित्यमिति न शक्यते बाधितुम् तथापि शक्य एव तदभिभवः कर्तुं साधनेन तच्च साधनं शास्त्रजनितं प्रकृतिपुरुषान्यताज्ञानं नान्यदिति तच्छास्त्रप्रतिपाद्यार्थश्चतुर्विधः तद्यथा कश्चिदर्थः प्रकृतिरेव न तु कस्यचित् विकृतिर्यथा मूलप्रकृतिः सा सर्वस्य मूलमादिकारणं न तु तस्याः कारणान्तरं किञ्चित् प्रमाणसिद्धं तथात्वे वा मूलक्षतिकारीत्यनवस्था स्यात् स्वस्यैव स्वकारणत्वे तु तस्यापेक्षया कारणत्वात् स्वस्यैव पूर्ववर्तित्वं कार्यत्वात् पश्चाद्वर्तित्वमित्यसंभवः । सकारण-

स्त्वे अजामेकां लोहितशुक्लकृष्णामित्यजत्वप्रतिपादनपर-श्रुतिविरोधः स्यात् । सा च प्रकरोतीति प्रकृतिः प्रधानं सत्त्वरजस्तमसां साम्यावस्था ।

कश्चिदर्थः प्रकृतिर्विकृतिश्च तच्च महत्तत्त्वमहङ्कारः पञ्चतन्मात्राणि चेति सप्तसङ्ख्याको गणः कस्यचित्प्रकृतिः कस्यचिद्विकृतिः । तद्यथा महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः तथा अहङ्कारः पञ्चतन्मात्राणामिन्द्रियाणां च प्रकृतिर्विकृतिर्महतः तथा पञ्चतन्मात्राणि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य । पञ्च महाभूतान्येकादशेन्द्रियाणि चेति षोडशसङ्ख्याको गणो विकृतिरेव न तु कस्यचित्प्रकृतिः । ननु पृथिव्यादीनामपि गोघटवृक्षादयो विकारा उपलभ्यन्ते तथा तद्विकारविशेषाणां पयोबीजादीनां दध्यङ्कुरादय इति कथं विकृतित्वमेव तेषामिति चेन्न तत्त्वान्तरोपादानत्वं प्रकृतित्वमिहाभ्युपगतम् न ह्येतेषां तदस्ति स्थौल्येन्द्रियग्राह्यतया गोघटादीनां समानत्वात् न तत्त्वान्तरता पृथिव्यादिभ्यः । उक्तं च तत्त्वकौमुद्याम् "सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति" न तत्त्वान्तरम् । पुरुषस्तु न कस्यचित् प्रकृतिरपरिणामित्वान्नापि विकृतिर्नित्यत्वादन्यथा साधनसाध्यासिद्धापत्तिः स्यात् घटवत् ।

प्रमाणविरहिणोऽर्थस्य नृशृङ्गसादृश्याभ्युपगमात् । उक्तप्रमेयसाधकं त्रिविधं प्रमाणमुररीकृतम् प्रत्यक्षमनुमानमाप्तवचनं चेति साङ्ख्याचार्यैः । अन्यत्राङ्गीकृतप्रमाणानामेतेष्वेव त्रिष्वन्तर्भावः । उक्तं च 'सर्वप्रमाणसिद्धत्वादिति' सर्वेषां वाद्यन्तराभ्युपगतानां प्रमाणानां सिद्धत्वात् त्रिष्वेवान्तर्भावादित्यर्थः । ननु यत्र यत्र प्रत्यक्षमप्रवर्तमानं तत्तदत्यन्ताऽसदिति व्याप्तिः सुप्रसिद्धा शशशृङ्गकूर्मलोमादौ एवं प्रधानस्यापि प्रत्यक्षासिद्धत्वात् तदत्यन्तासत्त्वमेव युक्तं गगनकुसुमादीनामिवेति चेन्न नहि यत् प्रत्यक्षागोचरं तदत्यन्तासदिति व्याप्तिग्रहो युक्तोऽन्यथा गृहान्निर्गतस्य गृहधनपुत्रपशुवनितादीन् सुखसाधनभूतानपश्यतस्तन्नाशनिश्चयजदुःखाविप्लुष्टान्तःकरणस्य रुदतो मरणं स्यात् न त्वेवमस्ति । किञ्च किं सर्वप्रत्यक्षविषयत्वं सत्त्वे हेतुः किञ्चित्प्रत्यक्षविषयत्वं वा ? नाद्यः नहि गृहान्तरदेशान्तरकालान्तरगतं वस्तु केनाप्ययोगिना प्रत्यक्षेण विषयीकर्तुं शक्यमन्यथा सर्व एव सर्वज्ञः स्यात् परबुद्धेरप्रत्यक्षतया सर्वैः सर्वं प्रत्यक्षेण गृह्यते नवेत्यसंवेदनेन निश्चेतुमशक्यतया संशयानिवृत्तेः । नापि चरमः व्यभिचारात् नहि नगरस्थेन स्वेनानुपलब्धो गवय एता-

वतैवारण्यकोपलब्धस्य तस्यापलापसम्भवः। उक्तञ्च लीलावतीकारेण "सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारत" इति । तस्मात् प्रत्यक्षप्रवृत्तिप्रतिकूलाभावविशिष्टं प्रत्यक्षं यत्र न प्रवर्तते तदत्यन्तासदिति निश्चेतुं शक्यम् न तु प्रत्यक्षाप्रवृत्तिमात्रात् अन्यथा पुरुषप्रधानमहत्तत्त्वगापूर्वदेवतादीनामतीन्द्रियाणामत्यन्ताभावः स्यात् । तेन वियति गच्छतः पतत्रिणो ग्रहणेऽतिदूरत्वमेव प्रतिकूलम् तथा नेत्रगतकज्जलग्रहणेऽतिसामीप्यम् एवं रूपशब्दादिग्रहणे आन्ध्यबाधिरत्वादयः तथा विषयग्रहणे मनसः कामाद्यभिव्याप्तिः यथा कामाद्यभिव्याप्तमनाः स्फीतालोकमध्यवर्तिनमिन्द्रियसन्निकृष्टमप्यर्थं न पश्यति । परमाण्वादिविषयतायां सौक्ष्म्यमेव प्रतिकूलम् यतः प्रणिहितमना अपि तं न पश्यति । भित्त्यादिवरवस्तुग्रहणे तद्व्यवधानमेव प्रतिकूलं सम्प्रतिपन्नपदार्थग्रहणे हस्तादिव्यवधानवत् । कचिदभिभवः यथा अहनि सौरीभिर्भाभिरभिभूतं नक्षत्रसूर्यादिग्रहे चक्षुः समर्थं न भवति । कचित् समानाभिहारः प्रतिकूलं यथा जलाशयेऽम्बुदविमुक्तजलबिन्दुग्रहणे नेत्रासामर्थ्यम् । कचिदनुद्भवः यथा क्षीरदध्याद्यवस्थायां दधिघृतादिविवेचनासामर्थ्यम् । एवं सति दृढतरप्रमाणान्तरप्रसिद्धे

वस्तुनि प्रत्यक्षाप्रवृत्तावेतदन्यतमं प्रतिबन्धकं कल्प्यते न तु तदभावादेवाप्रवृत्तिः। उक्तञ्च साङ्ख्यमूलकारेण "सौक्ष्म्यात् तदनुपलब्धिर्नाभावात्"। ननु क्वचित्प्रत्यक्षप्रसिद्धस्य क्वचित्सन्देहादनुमानविषयता न त्वस्य तदस्तीत्यभाव एव युक्त इति चेन्न कार्यं हि कारणानुमापकं भवतीति सर्वैर्वाद्यभिमतम् तथा च महदादिकार्यान्यथानुपपत्त्यैव प्रधानसिद्धिरिति न तदभावो युक्तः। ननु कार्यान्यथानुपपत्त्या कारणसिद्धौ तन्त्रान्तराभिमतकारणसिद्धिः सेत्स्यति न तु त्वदभिमतप्रधानसिद्धिरिति चेन्न मतपर्यालोचनेन यन्मतं कपिलसूत्रनिबद्धं प्रधानसाधनानुगुणं तदेव युक्तिसहमन्यत् तु बाह्यमतवत् मताभासत्वाद्बाध्यमेव। तद्यथा 'असतः सज्जायत' इति बौद्धमते प्रधानसिद्धिः 'सतः सज्जायत' इति साङ्ख्यमतविरुद्धत्वान्न पण्डितमुखमण्डनायालम् सदसतोः कार्यकारणभावासम्भवात् असदलीकं कारणं सत्त्वादिरूपशब्दाद्यात्मकं कथं स्यात् सदसतोस्तादात्म्यादर्शनात् कार्यं हि कारणसमवेतं तन्तुपटादिस्थलेषु प्रसिद्धम् तथा च घटोऽसन् पटोऽसन्नित्यसत्समवेतं सर्वो व्यवहर्ता व्यवहरेत न तु सदिदमिति सत्तावैशिष्ट्येन प्रतीतिः स्यात्।

अथ सद्विवर्तोऽयं प्रपञ्च इति यद्वेदान्तिमतम्।

तदप्यसाधु अनेनापि सतः सज्जायत इति मतसिद्धिर्न स्यात्। अद्वयस्य सद्वयतया भाने रज्जोः स्रक्खण्डसर्पा-द्यात्मना भानवत् भ्रान्तिरेव स्यात् बाधितविषयतया रज्जुसर्पप्रत्ययवत् प्रपञ्चज्ञानस्याप्रमाणतया प्रमारूपं ज्ञानमेवास्तमियात्। न चेष्टापत्तिर्गुरुशिष्योत्तरप्रश्नयोर-प्रमाणबुद्ध्या व्यवहारमात्रोच्छेदः स्यात् लौकिकवैदिक-व्यवहारानुष्ठाने च कस्यचित् प्रवृत्त्यनुपपत्त्या भोगापवर्गौ न स्यातामिति तच्छास्त्राप्रामाण्यं स्यात्। अपसिद्धान्तश्च नहि वेदान्तिमते ब्रह्म विवर्ति भवति। उक्तञ्च—

बालान् प्रति विवर्तोऽयं ब्रह्मणः सकलं जगत्।
अविवर्तितमानन्दमास्थिताः कृतिनः सदा॥ इति।

सतोऽसज्जायत इति सतः परमाणोरसद्द्व्यणुकाख्यं कार्यं जायत इति कणभक्षाक्षचरणमतमपि न युक्तिसहम् तथाहि परमाणुर्हि द्व्यणुकसमवायिकारणम् द्व्यणुकं चासदि-त्यसत्त्वाविशेषाच्छशशृङ्गादिसमवायिकारणतापि परमाणोः स्यात् सदसतोः समवायासम्भवाच्च असता तादात्म्ये सतोऽप्यसत्त्वं स्यात्। नन्वसत्त्वं नाम प्रागभावप्रतियोगित्वं न तु वायुरूपादिवत् त्रिकालासत्त्वमिति चेन्न किमिदं प्रागभावप्रतियोगित्वमसत्त्वम् किं प्रागभावप्रतियोगित्वाद-सत्त्वमसत्त्वाद्वा प्रागभावप्रतियोगित्वम्? नाद्यः सर्वेषां

कार्यपदार्थानामसत्त्वाविशेषेणाकाशपुष्पादिष्विवासत्त्वेनैव व्यवहारः स्यात् तेषामपि प्रागभावप्रतियोगित्वात् तथा च कार्यपदार्थगतगुणसामान्यादीनामुच्छेदः स्यात् तेषां भावधर्मत्वेनासत्त्वेनावस्थानात् । न च कूर्मलोमादेरस्यासतो विशेषः सामान्याद्यभावेन भेदकधर्माभावात् । नापि चरमः असत्त्वात्प्रागभावप्रतियोगित्वे नरशृङ्गादीनामपि प्रागभावप्रतियोगित्वं स्यात् प्रागभावस्य च स्वप्रतियोग्युत्पादकत्वनियमेन सर्वेषामसतां सत्त्वं स्यात् सदसद्विभागो जगति दत्तजलाञ्जलिः स्यादिति न तार्किकवैशेषिकमतं विचारसहम् । तस्मात् सतः सज्जायत इति साङ्ख्यमतमेव युक्तिसहम् । सतः कारणात् स्वोत्पत्तेः प्रागपि सदेव कार्यं कारणव्यापारादभिव्यक्तिमाप्नोति । न च सिद्धसाधनता कारणवैयर्थ्यं चेति वाच्यम् कार्यसत्त्वेऽपि तदभिव्यक्तौ कारणं प्रयोजनवदिति न किञ्चिदवद्यम् । असत्कार्यपक्षे तु कारणवैयर्थ्यं स्फुटमेव न ह्यसतः कारणसम्बन्धो निरूपयितुं शक्यते सम्बद्धमेव सम्बद्धेन जन्यते असम्बद्धस्य जन्यत्वे सर्वस्मात् सर्वं स्यात् कारणनियमोऽस्तमियात् । असच्चेत्कार्यं न कारणव्यापारात् सद्भवितुमर्हति उक्तञ्च तत्त्वकौमुद्याम्—नहि नीलं शिल्पसहस्रेणापि पीतं कर्तुं श-

कथम् । न च कारणव्यापारात् पूर्वं घटोऽसन् संश्च व्यापारानन्तरमिति घटस्य सत्त्वासत्त्वे धर्माविति वाच्यम् धर्मस्य भावधर्मत्वेन तेनैव धर्मिणः सत्त्वं स्वास्थित्यन्यथानुपपत्त्या साधितमिति सदेव कार्यं कारणव्यापारादूर्ध्वमिव प्रागपि । कारणव्यापारस्तु तदभिव्यक्तावनन्यथासिद्धः . अन्यत्रापि कारणव्यापारादभिव्यक्तिरेव दृश्यते यथाऽवघातेन धान्येषु तण्डुलानाम् अवपीडनेन तिलेषु तैलस्य दोहनेन सौरभेयीणां पयस इति । असदुत्पत्तौ तु न दृष्टान्तोऽस्ति तस्मात् सदेव कार्यं कारणव्यापारेणाभिव्यज्यते । असता कारणसम्बन्धासम्भवात् न तस्य तदुत्पादकत्वम् उक्तञ्च साङ्ख्याचार्यैः

असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः ॥
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥

किञ्च सम्बद्धमपि तदेव करोति यत्र यत् कारणं शक्तम् शक्तिश्च कार्यैकाधिगम्या यथा चक्षुषैव रूपज्ञानं भवति नेन्द्रियान्तरेणेतीदमेव तत्र शक्तमित्यधिगम्यते । तथा च सा शक्तिः शक्तकारणाश्रया शक्यकार्याश्रया सर्वत्र वा स्यात्? अन्त्ये सर्वस्मात् सर्वं स्यात् । अथ कार्ये सा शक्तिस्तदा कथमसतः कार्य-

स्य शक्त्याश्रयता तथा च शक्तेन शक्यमुत्पाद्यते शक्यं च कारणात्मकम् कारणं च सदिति कथं तदभिन्नं कार्यमसत्स्यात् 'उक्तञ्च शक्तस्य शक्यकरणादिति'। उपादानोपादेयभावग्रहणाच्च न भेदस्तन्तुपटयोर्ययोर्भेदो न तयोरुपादानोपादेयभावो यथाश्ववृक्षयोः। इतोऽपि नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यदर्शनात् अर्थान्तरत्वे संयोगो दृष्टो रज्जुघटकुण्डवदरादौ अप्राप्तिरपि दृष्टा सुमेरुविन्ध्ययोरिव इह च संयोगाप्राप्त्योरभावान्न तन्तुभ्योऽर्थान्तरं पटः। कार्यकारणयोरभेदसाधकं प्रमाणं चोक्तं साङ्ख्याचार्यैः तद्यथा न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वात् इह यद्यतो भिद्यते तत् तस्य धर्मो न भवति यथा गौरश्वस्य धर्मश्च पटस्तन्तूनान्तस्मान्नाथान्तरम्। गुरुत्वान्तराग्रहणादपि न कारणादर्थान्तरं कार्यम्। एवमभेदे सिद्धे तन्तव एव तेनतेन संस्थानविशेषेण परिणताः पटो न तु पटस्तन्तुभ्योऽर्थान्तरम्। न चात्माश्रयबुद्धिभेदादर्थक्रियाभेदाच्च भेदसिद्धिः कार्यकारणयोरिति वाच्यम् एकस्मिन्नपि विशेषान्तराविर्भावतिरोभावाभ्यामात्माश्रयार्थक्रियाबुद्धिभेदसम्भवान्न तदन्यथानुपपत्त्या भेदसिद्धिः। तत्र एकस्यापि कूर्मस्यावयवा निःसरन्त्याविर्भवन्ति त एव कूर्मशरीरे निविशमानास्तिरोभवन्ति नहि ते कूर्मावयवा

उत्पद्यन्ते ध्वंसन्ते वा एवमेकस्यापि सुवर्णस्य मृदो वा कटककुण्डलादयो घटादयो निःसरन्त उत्पन्ना इति व्यवहारं भजन्ते त एव निविशमानास्तिरोभवन्ति नश्यन्तीत्युच्यन्ते न पुनः सदसतोर्निरोधोत्पादयोर्निदर्शनमस्ति। उक्तं च भगवता नासतो विद्यते भावो नाभावो विद्यते सत इति । यथा सङ्कोचविकाशवद्भ्यः स्वावयवेभ्यः कूर्मो न भिद्यते तथा मृत्सुवर्णादिभ्योऽपि कटककुण्डलादयो न भिन्नाः । न च नाम बुध्यर्थक्रियाभेदात् कार्यकारणयोर्भेदासिद्धिरिति वाच्यम् नटे व्यभिचारात । नटो हि दशरथोहं रामोहं युधिष्ठिरोऽहमिति स्वयमनन्तनामा भूत्वा नामान्तरेण वेशान्तरमर्थक्रियान्तरञ्च कुरुते तथा च सत्यपि भेदत्रये नटभेदादर्शनात् यथाहुः—

रूपमथो अपि कार्यमथो
अभिधापि नटस्य पृथग्विदिता ।
न पृथक्त्वमुपैति नटः किमिति
प्रतिवाच्यमवश्यमिदं कुशलैः ॥

एकस्यापि वह्नेर्दाहकत्वपाचकत्वभेदेन नानार्थक्रियाकारित्वं दृश्यते न ह्येतावता वह्निर्भेदमधिगच्छति एकैकस्य तृणस्यातपवृष्ट्यादिनिवृत्तावसामर्थ्येऽपि बहूनि मिलित्वावस्थाविशेषमवाप्य यथा तान्येव तन्निवृत्तौ सामर्थ्यमधि-

गच्छन्ति तथैक एव तन्तुः प्रावरणाद्यर्थक्रियाऽसमर्थोऽपि मिलितास्त एवावस्थाविशेषं प्राप्याविर्भूतपटभावाः प्रावरणाद्यर्थक्रियां करिष्यन्ति तस्मात्सदेव कार्यं कारणात् तदभिव्यक्तिरिति । नन्वाविर्भावः कारणव्यापारात्पूर्वं सन्नसन् वा ? आद्ये कारणव्यापारासम्भवः नहि सदुत्पत्तौ केनापि कारणानि व्यापार्यन्ते । अन्त्ये प्राप्तमसदुत्पादनत्वमिति चेन्न तवापि केयमुत्पत्तिः सत्यसती वा ? आद्ये न कारणप्रयोजनं पश्यामः । अन्त्येऽसदुत्पत्तिरुत्पद्यत इति तदुत्पत्तेरप्युत्पत्त्यन्तरं तत्राप्यन्यदिति स्फुटैवानवस्था । अथ पटात् तदुत्पत्तिर्नातिरिच्यते तदा पट इत्युक्ते पुनरुत्पद्यते इति न वाच्यं पौनरुक्त्यात् तथोत्पद्यते इत्युक्त्वा पुनः पट इति न वाच्यं पूर्वोक्तदोषादेव पटो विनश्यतीत्यपि न वाच्यं विरोधात् तस्मात्स्वसत्तासमवायो वा स्वकारणसमवायो वा पटोत्पत्तिः समवायस्य च नित्यत्वेन सर्वथापि न पटोत्पत्तिः सम्भवति न तदर्थञ्च कारणानि व्यापार्यन्ते तथा च सत एव पटादेराविर्भावे कारणापेक्षेति न किञ्चिदवद्यम् । न च पटादिकार्यरूपेण कारणसम्बन्धस्तस्याक्रियत्वात क्रियासम्बधित्वात्काग्काणामन्यथा कारकत्वक्षतिः स्यात तस्मात्सत्कार्यमिति स्थितम् ।

दुःखत्रयाभिभवसाधनं प्रकृतिपुरुषान्यताज्ञानं तदु-

पयोगित्वात् व्यक्तत्रैरूप्यं प्रतिपादनीयम् । तच्च व्यक्तं पृथिव्यादि तच्चाव्यक्तात्प्रधानाद्विलक्षणम् यत इदं सकारणकं तत एवानित्यं पराभिमतविनाशसामग्र्या तिरोभवति । अव्यापकं च कारणं हि कार्यं व्याप्नोति न तु कार्यं कारणम् । सांक्रियं च बुद्ध्यादयः पूर्वपूर्वोपात्तं देहं परित्यजन्ति देहान्तरं चोपाददते सैव तेषां क्रिया पृथिव्यादीनां क्रिया परिणामरूपेण प्रसिद्धैव । प्रतिपुरुषं बुध्यादिभेदादनेकम् तथा घटशरीरादिभेदेन पृथिव्याद्यप्यनेकम् । स्वकारणाश्रितम् यद्यपि बुध्यादीनां प्रधानभेदाभावात् नाश्रयाश्रयिभावस्तथापि कथञ्चित् भेदाविवक्षयाश्रयाश्रयिभावो यथेह वने तिलकाः । सावयवमवयवावयविसंयोगसंयोगि बुद्धिप्रधानयोस्तु न संयोगस्तादात्म्यात् नापि सत्त्वरजस्तमसां संयोगः अप्राप्तिपूर्विका प्राप्तिः संयोगस्तदभावात् । नित्यमेव परतन्त्रं स्वकार्येऽहङ्काराख्ये जनयितव्ये प्रकृत्या पूरमपेक्षते अन्यथा क्षीणा सती नाहङ्कारं जनयितुं क्षमा भवति तथाहङ्कारोऽपि स्वकार्ये.. प्रकृत्या पूरमपेक्षते एवं कारणमात्रं स्वकार्ये जनयितव्ये तदपेक्षां कुरुते तथा च स्वकार्ये जनयितव्ये परतन्त्रं व्यक्तम् । यत इत्यभिव्याप्य यदुक्तं तद्विपरीतमव्यक्तम् यद्यप्यव्यक्तस्य परिणामलक्षणाक्रियास्ति तथापि न परिस्पन्दः ॥

इदानीं व्यक्ताव्यक्तयोः साधर्म्यं पुरुषाच्च वैधर्म्यं प्रतिपादनीयम्। व्यक्तं हि त्रिगुणं त्रयो गुणाः सुखदुःखमोहात्मका अस्येति। अत्र कार्यकारणयोरभेदात् सुखादिशब्दैः सत्त्वादयोऽभिधीयन्ते त्रिगुणमित्युक्त्या सत्त्वादीनामात्मगुणत्वं पराभिमतमपाकृतं वेदितव्यम्। तथा अविवेकि यथा प्रधानं सतो न विविच्यते तथा महदादयोऽपि प्रधानान्न विविच्यन्ते तत्स्वरूपत्वात्। यद्वा संभूयकारिताऽविवेकः नह्येकं किञ्चित्कार्यं जनयितुं क्षमं भवत्यपि तु संभूय सर्वैः सर्वं करोति। एवमचेतनं प्रधानबुद्ध्यादयः सर्वे अचेतना तथा प्रसवरूपधर्मवन्तः। एते व्यक्तधर्माः कथितास्त एवाव्यक्तस्यापीत्यवगन्तव्यमिदमेव व्यक्ताव्यक्तयोः साधर्म्यम्॥

एते साधर्म्यवैधर्म्याभ्यां व्यक्ताव्यक्ते निरूपिते तदुभयगतधर्मरहितत्वात् विपरीतः पुरुष इति पुरुषस्य व्यक्ताव्यक्तवैधर्म्यम्। नन्वहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यं पुरुषस्य प्रतीयते तथाचानेकत्वं व्यक्तसाधर्म्यमेवं सति कथं व्यक्ताव्यक्तविपरीतः पुरुष इति चेन्न अहेतुमत्त्वादिसाधर्म्येऽप्यत्रैगुण्याद्यस्यास्त्येव वैधर्म्यमिति न दोषः। न च त्रैगुण्यमप्रसिद्धम् प्रीत्यप्रीतिविषादात्मका गुणा इति सांख्याचार्य्याः। अत्र क्रमेण प्रीतिः सुखं

तदेव सत्त्वम् तथा अप्रीतिर्दुःखमप्रीत्यात्मको रजो गुणः एवं विषादो मोहो विषादात्मकस्तमो गुणः । यन्मते प्रीतिर्दुःखाभावः तथा दुःखमपि प्रीत्यभावस्तन्निवृत्त्यर्थं मूलकारणात्मग्रहणं कृतमात्मशब्दस्य भावतत्त्वेन नेतरेतराश्रयस्तथासत्येकस्यापि सिद्धिर्न स्यात् । प्रकाशप्रवृत्तिनियमनमेषां क्रमेण प्रयोजनमप्यवगन्तव्यम् । क्रियात्मकेन रजसा लघु सत्त्वं सर्वत्र नीतं स्यादतिवायुना तूलावयववद्यदि गुरुणा तमसा नियमनं न स्यात्तमोनियतं तु क्वचिदेव प्रवर्तयति ततस्तमो नियमार्थम् । अन्योन्याभिभववृत्तयः । एतेषामन्यतमेनार्थवशादुद्भूतेनान्यतममभिभूयते तद्यथा सत्त्वं रजस्तमसी अभिभूयाऽऽत्मनः शान्तां वृत्तिमधिगच्छति तथा रजः सत्त्वरजसी अभिभूय घोरां वृत्तिमेति एवं तमः सत्त्वरजसी अभिभूय मूढामिति । तथाऽन्योन्याश्रयवृत्तयः । यथाहुः सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति । तथा अन्योन्यजननवृत्तयः । अन्यतमोऽन्यतमं जनयति जननमत्र परिमाणः स च गुणानां सदृशरूपः । अत एव न हेतुमत्त्वं तत्त्वान्तरस्य हेतोरभावात् । नाप्यनि-

यत्सुखकारणं तत्सुखात्मकं सत्त्वम् एवं यत् दुःखकारणं तत् दुःखात्मकं रजः तथा यन्मोहहेतुस्तन्मोहात्मकं तमः । तस्मात्कारणव्यापारात्सदेव कार्यं पूर्वम् । तदेव पुनस्तद्व्यापारादाविर्भवति यथा सन्त्येव कूर्माङ्गानि निःसरन्ति विभज्यन्ते इदं कूर्मशरीरमेतानि तदङ्गानि तेन तानि सङ्कोचितानि तस्मिन्नव्यक्तीभवन्ति तथा मृत्सुवर्णादिभ्यः सन्त्येव घटकुण्डलादीन्याविर्भवन्ति विभज्यन्ते इयं मृदयं तत्कार्यो घट इत्यादि । तथा सन्त्येव पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते इदमस्य कारणमिदमस्य कार्यमिति तथा सन्त्येव तन्मात्राण्यहङ्कारादाविर्भवन्ति विभज्यन्ते एवं सन्नेवाहङ्कारो महतोऽभिव्यक्तिमेति सन्नेव च महान्मूलप्रकृतेरभिव्यक्तिं याति । एवं कारणभूतात्परमाव्यक्तात्साक्षात्पारम्पर्येण समन्वितस्य कार्यभूतस्य प्रपञ्चस्य विभागः । सर्गमात्रे मृत्पिण्डं हेमपिण्डं वा विशन्तो घटकुण्डलादयोऽव्यक्तीभवन्ति कारणरूपेणाभिव्यक्ता अपि कार्यरूपेणानभिव्यक्ती भवन्ति तथा पृथिव्यादयस्तन्मात्राणि विशन्तः स्वस्वरूपेण तन्मात्राण्यभिव्यक्तयन्ति स्वस्वरूपेण कारणमभिव्यक्तमपि कार्यस्वरूपं स्वकीयं स्वस्मिन्ननभिव्यक्तयति तन्मात्राणि तथाहङ्कारं वि-

शत्यहङ्कारं स्वापेक्षयाऽव्यक्तयन्ति तथाहङ्कारो महान्तं विशन् महान्तमव्यक्तयति महान्प्रधानं स्वकारणं विशन् तदव्यक्तयति प्रधानस्य तु न कचित्प्रवेशोऽकारणत्वाद-पि तु तत्सर्वकार्याणामव्यक्तम् कारणम् एवमविभागः। प्रकृतौ विश्वस्यैवं विभागाविभागौ।

केचन अव्यक्तं वा महान्तं वाहङ्कारं वा इन्द्रिया-णि वा भूतानि वा आत्मत्वेनादाय तानेवोपासते ते तु वक्ष्यमाणरीत्याऽऽकरणीयाः। अव्यक्तादेर्व्यतिरिक्तः पुरुषोऽस्ति अव्यक्तमहदहङ्कारादयः परार्थाः कुतः स-ङ्घातत्वात् यः सङ्घातो भवति स परार्थो दृष्टस्तैलता-म्बूलघृतदधिदुग्धान्नवस्त्रादिवत् सुखदुःखमोहात्मकत्वेन सर्वे सङ्घातास्तथाच यदर्थं सङ्घाताः स एव पुरुषः। ननु शयनासनादिः सङ्घातः सङ्घातशरीरादिपरार्थो दृष्टो न त्वात्मानं प्रति परार्थः तस्मात्सङ्घातान्तरमेव साधये-युर्नासंहतमात्मानमिति यदुक्तम् तन्न साधु सङ्घातस्य स-ङ्घातान्तरार्थत्वे तस्यापि सङ्घातत्वात्संघातान्तरार्थता तस्यापि सङ्घातत्वात्तथात्वं तस्यापि तथात्वमित्यनव-स्था दुस्तरा स्यात्। किञ्च सङ्घातस्य पारार्थ्यमात्रेण व्याप्तिर्न तु सङ्घातपारार्थ्येन। न च दृष्टान्तदृष्टत्वात्तथा कल्प्यत इति वाच्यम्। दृष्टान्तदृष्टयावद्धर्माणां दार्ष्टा-

न्तिके साधनायानुमानमिच्छतो दृष्टान्तमहानसादिगत-महानसत्वादेः पर्वतादावभावात्सर्वानुमानोच्छेदः स्यात्। यथाहुः त्रिगुणत्वादयो हि धर्मा सङ्घातत्वेन व्याप्ताः ते तु अस्मिन्परे व्यावर्तमानास्त्रैगुण्यादि व्यावर्तयन्ति ब्राह्मण्यमिव निवर्तमानं कठत्वादिकम्। अधिष्ठानादपि पुरुषास्तित्वं सिध्यति त्रिगुणात्मकानां बुद्ध्यादीनामधिष्ठीयमानत्वात् यथा रथादिर्यन्त्रादिभिरधिष्ठीयते तथा सुखदुःखमोहात्मकं बुद्ध्यादि परेणाधिष्ठातव्यम्। भोक्तृभावादपि पुरुषास्तित्वमवसेयम् भोग्ये हि सुखदु.खे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते तेनानयोरनुकूलतया प्रतिकूलतया वाऽनुभवित्रा केनचिद्भवितव्यम्। न च बुद्ध्यादिरेव तथेति वाच्यम्। तेषां सुखाद्यात्मकत्वेन स्वेनैव स्ववेदने आत्माश्रयः स्यात। कैवल्यार्थं प्रवृत्तेरपि पुरुषास्तित्वं सिद्धम् दुःखत्रयात्यन्तिकनिवृत्तिलक्षणं कैवल्यं न तावद्बुद्ध्यादीनां ते हि सुखदुःखमोहात्मकाः कथं स्वभावाद्वियोजयितुं शक्याः तस्मात्कैवल्यार्थमागमानां महाधियां च प्रवृत्तेरस्ति बुद्ध्याद्यतिरिक्त आत्मेति पुरुषास्तित्वं सिद्धम्। ननु भवत्वेवं बुद्ध्याद्यतिरिक्तात्मसिद्धिस्तथापि स किं प्रतिशरीरं भिन्न एक एव वेति चेद्भिन्न एवेति ब्रूमः जन्म-

मरणादिव्यवस्थान्यथानुपपत्त्या बहुत्वस्यैव सम्भवात्। उक्तं च सांख्याचार्यैः।

जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव॥

जातिविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धो जन्म न तु पुरुषस्य परिणामस्तस्यापरिणामित्वात् तेषामेव च देहादीनामुपात्तानां परित्यागो मरणं न त्वात्मनो विनाशस्तस्य कूटस्थस्य नित्यत्वात्। बुद्ध्यादीनि करणानि त्रयोदश तेषां जन्ममरणकरणानां प्रतिनियमो व्यवस्था सा त्वियं सर्वशरीरेष्वेकस्मिन्पुरुषे न सम्भवति तथासत्येकस्मिन्सुखिनि सर्वे सुखिनः स्युः दुःखिनि वा दुःखिनो भवेयुः तथा एकस्मिन् म्रियमाणे सर्वे म्रियेरन् जायमाने च जायेरन् एवमेकस्मिन्नन्धबधिरादौ सर्व एव तथा स्युः न त्वेवमस्ति तथा एकस्मिन्विचित्ते सर्वे विचित्ताः स्युरित्यव्यवस्था पुरुषभेदे तु सम्यगुपपद्यते व्यवस्था। नचैकस्मिन्नपि पुरुषे देहान्तरोपाधिवशात् उपपद्यत एव व्यवस्थेति वाच्यम् करचरणस्तनादिभेदेनापि जन्ममरणादिव्यवस्था स्यात्। गुणत्रयविपर्ययादपि पुरुषबहुत्वमवसेयम्। तद्यथा केचित्सत्त्वबहुलाः यथोर्द्ध्वस्रोत-

सः केचिद्रजोबहुलाः यथा मनुष्याः केचित्तमोबहुलाः यथा तिर्यग्योनयः ।

पुरुषस्य बहुत्ववदत्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वं साक्षित्वादिकमपि बोद्धव्यम् ।

प्रधानपुरुषयोः संयोगकृतोऽयं सर्गः स चापेक्षां विना भिन्नयोर्न सम्भवति अपेक्षा च स्वदर्शनार्थं पुरुषेण प्रधानस्य प्रधानं हि विषयात्मकतया भोग्यम् भोगश्च भोक्तारमन्तरेण न भवतीति भोक्रपेक्षा प्रधानस्य पुरुषस्य स्वकैवल्यार्थं प्रधानापेक्षा प्रधानेन हि भोग्येन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते तत्तु सत्त्वपुरुषान्यताख्यातिकारणकं सत्त्वपुरुषान्यताख्यातिश्च प्रधानमन्तरा न भवतीति पुरुषस्य प्रधानापेक्षा पङ्ग्वन्धवदुभयोः संयोगः भोगायानादिपरम्परासंयुक्तोपि कैवल्याय पुनः संयुज्यते स च संयोगो महदादिसर्गमन्तरेण भोगापवर्गयोः समर्थो न भवतीति संयोग एव महदादिसर्गं करोति । उक्तञ्च ।

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥

एकादशेन्द्रियाणि पञ्च तन्मात्राणि चेति षोडशसंख्या-

मितो गणः षोडशकः । उक्तश्च तत्र शब्दतन्मात्रादाकाशं शब्दगुणम्, शब्दतन्मात्रसहिताच्च स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणं, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्राच्छब्दस्पर्शरूपरसगुणं जलम्, शब्दस्पर्शरूपरसतन्मात्रासहिताद्गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायते ।

अध्यवसायो बुद्धिः क्रियाक्रियावतोरभेदविवक्षया व्यपदेशः । धर्मो ज्ञानं विराग ऐश्वर्यमिति सात्त्विकाः बुद्धिधर्माः एतद्विपरीतास्त्वधर्मादयस्तामसाः । बुद्धिधर्मादैश्वर्यादणिमादिप्रादुर्भावः । तच्च

अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥ इति ।

नन्वेकादशक इन्द्रियगणः पञ्चतन्मात्रकं चेति द्विविधः प्रवर्तते सर्गोऽहङ्कारात् तथा चैकस्मादहङ्कारात् कारणात्कथं प्रकाशजडात्मको विलक्षणः सर्ग इति यदुक्तं तन्न सुन्दरम् प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्त्विकादहङ्काराद्भवति भूतादेस्त्वहङ्कारात् तामसात्तन्मात्रगणः । यद्यप्येकोऽहङ्कारस्तथापि गुणोद्भवाभिभवाभ्यां भिन्नं कार्यं करोति । ननु यदि सत्त्वतमो-

भ्यामेव सर्गः कृतं तर्हि रजसा अकिञ्चित्करेणेति चेन्न तैजसादुभयमिति मूलकारः तैजसादुभयं गणद्वयं भवति सर्गद्वयं सत्त्वतमसोरिति । यद्यपि रजसो न कार्यान्तरमस्ति तथापि सत्त्वतमसी स्वयमक्रिये समर्थे अपि न कार्यं कुरुतो रजसा चालिते तु तत्प्रसादात् प्राप्तक्रिये स्वकार्योत्पादने समर्थे भवत इति राजसादुभयम् । यथाहुः उभयस्मिन्नपि कार्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज इति । इन्द्रियविचारस्तु तत्त्वदीपे कृत इति विस्तरभयान्नेह प्रतन्यते । महदहङ्कारमनांस्यन्तरिन्द्रियाणि तानि स्वलक्षणानि स्वमसाधारणं लक्षणं येषां तानि स्वलक्षणानि तच्च महतोऽध्यवसायः अहङ्कारस्याभिमानः सङ्कल्पो मनसो वृत्तिर्व्यापारः । एतेषां वृत्तिद्वैविध्यं साधारणत्वासाधारणत्वाभ्यामाह सैषा भवत्यसामान्या इति । एषोक्ताऽसाधारणी वृत्तिः साधारणी वृत्तिस्तु करणानां प्राणाद्या वायवः पञ्च करणत्रयस्य पञ्च वायवो वृत्तिर्जीवनं तद्भावे भावात् अभावे चाभावात् । तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः अपानः कृकाटिकापृष्ठपार्श्वपायूपस्थवृत्तिः समानो हृन्नाभिसर्वसन्धिवृत्तिः उदानो हृत्कण्ठतालमूर्धभ्रूमध्यवृत्तिः व्यान-

स्त्वग्वृत्तिरिति पञ्च वायवः ।

अविद्या पञ्चविधा तथाहि अविद्याऽस्मितारागद्वे-षाभिनिवेशा यथासंख्यं तमोमोहमहामोहतामिस्रान्धता-मिस्रसंज्ञका चेति पञ्चपर्वा ।

प्रत्ययसर्गतद्भेदास्त्वतिविस्तरभयात्सन्तोऽपि न नि-दर्श्यन्ते प्रत्ययसर्गो बुद्धिसर्गः उक्तश्च एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः । प्रतीयतेऽनेनेति प्रत्ययो बुद्धिस्तस्य सर्गः प्रत्ययसर्गः । दैवसर्गस्तु मूलकारेणैव स्पष्टो निरुक्तः । स च अष्टविकल्पो दैवः सर्गः ब्राह्म-प्राजापत्यैन्द्रपैत्र्यगान्धर्वयाक्षराक्षसपैशाच इत्यष्टवि-कल्पो दैवसर्गः । तिर्यग्योनयश्च पञ्चविधा भवन्ति पशु-मृगपक्षिसरीसृपस्थावराः । मानुषश्चैकविधः ब्राह्मणत्वा-द्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्वर्ण्यविशे-षादिति ॥

ननु प्राधानिकोऽयं सर्गः प्रधानं च जडं कथं स्वा-र्थं परार्थं वा प्रवृत्तिं कर्तुमर्हति तस्मात्केनचिच्चेतनेन प्रकृत्यधिष्ठात्रा भवितव्यम् । न च क्षेत्रज्ञास्तथा तेषां प्रकृतिस्वरूपानभिज्ञत्वात् तस्मादस्ति प्रकृतेरधिष्ठाता कश्चित्सर्वज्ञः स एवेश्वर इति चेन्न अचेतनमपि प्रयो-जनवशात् प्रवर्तमानं दृष्टं यथा वत्सविवृद्ध्यर्थमचेतनम-

पि क्षीरं प्रवर्तते तथा जडाऽपि प्रकृतिः पुरुषविमोक्षाय प्रवर्तिष्यते। किञ्चाभोक्तुरीश्वरस्य प्रवृत्तौ न करुणां विनाऽन्यत् प्रयोजनं पश्यामः। सा च निरुपाधिपरदुःखप्रहाणेच्छा सृष्टेः पूर्वं प्राण्यभावादेव तत्सम्बन्धिदुःखाभावात् कस्य निवृत्तौ प्रवृत्तिः स्यादीश्वरस्य। न च सर्गानन्तरमीश्वरप्रवृत्तिः सर्गस्य जातत्वादेव नेश्वरप्रयोजनं पश्यामः। न च दुःखनिवृत्तिः प्रयोजनं तदर्थं तत्प्रवृत्तौ जगति कोऽपि दुःखी न स्यात्। उक्तञ्च प्रेक्षावतः प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वात् ते च जगत्सर्गाद्व्यावर्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि निवर्तयतः न ह्यास्तसकलेप्सितस्य भगवतो जगत्सृजतः किमप्यभिलषितं भवति नापि कारुण्यादस्य सर्गे प्रवृत्तिः प्राक्सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति परस्पराश्रयः। अपि च करुणया प्रवृत्तः सुखिन एव जन्तून्सृजेत न दरिद्रान्। न च कर्मवैचित्र्यात् जगद्वैचित्र्यम् तर्हि कृतमीश्वरेण तत एव जगद्वैचित्र्योपपत्तेः प्रवृत्तिस्तु पारार्थ्यप्रयोजनवशात् जडस्यापि दृश्यते वत्सविवृद्धिनिमित्तं दुग्धस्येव।

ननु भवतु प्रकृतेः प्रवर्तकः पुरुषार्थो निवर्तकं

न तु कमपि पश्याम इति चेन्न यथा नर्तकी परिषद्भ्यो नृत्यं दर्शयित्वा स्वयमेव निवर्तते न तु तस्याः स्वनिवृत्तौ निवर्तकान्तरापेक्षा तथा शब्दाद्यात्मकं स्वस्वरूपं पुरुषाङ्गदेन प्रकाश्य साधितपुरुषप्रयोजना स्वयमेव निवर्तते प्रकृतिः। यथाहुः सांख्याचार्याः।

रङ्गस्य दर्शयित्वा निवर्तते यथा नर्तकी नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥

ननु यथा दर्शितनृत्या नर्तकी द्रष्टृकौतुहलात्पुनः प्रवर्तते तथा प्रकृतिरपि पुरुषायात्मानं दर्शयित्वा निवृत्तापि पुनश्चेत् प्रवर्तेत तदा मुक्तानामपि पुनः संसारप्राप्तिः स्यादिति चेन्न यथा परपुरुषदर्शनासहा सूर्यदर्शनवर्जितापि कुलवधूः प्रमादाद्विगलिताङ्गपटा चेदवलोक्यते परपुरुषेण तदाऽसौ तथा प्रवर्ततेऽप्रमत्ता यथैनां पुनः पुरुषान्तराणि न पश्यन्ति तथा प्रकृतिः कुलवधूतोऽप्यधिका दृष्टा विवेकेन पुनर्न दर्शनमागमेति। उक्तं च

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्येति॥

धर्मो ज्ञानं विराग ऐश्वर्यमिति सात्त्विका बुद्धिधर्माः अधर्माज्ञानावैराग्यानैश्वर्याभिधानाश्चत्वारस्तामसाः।
अत्र ज्ञानवर्जितैः सप्तभिः प्रकृतिर्बध्नात्यात्मानं विवेक-

ख्यात्या प्रकृतिपुरुषान्यताज्ञानेन सैव विमोचयति ।
उक्तञ्च ।

रूपैः सप्तभिरेवम्बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥

यथा विद्रुममणिमौक्तिकशुक्तिमकरकच्छपनागशंखकपर्दकादीन् विहाय परमकारुणिकेन लीलाविग्रहधारिणा भगवता रत्नान्येव समुद्धृतान्युदधेर्देवसमृद्ध्यर्थं तथा जल्पतर्काभासाख्याऽन्यत्रसुलभप्रमेयवितण्डादींश्च विहाय सांख्यमात्रैकलभ्यप्रमेयरत्नानि सांख्यतंत्राध्ययनपरिश्रमालसानां सांख्यतन्त्रोदधेर्मया समुद्धृतानि ।

रामकृष्णकथा यावद्यावच्चन्द्रदिवाकरौ ।
सांख्यतत्त्वप्रदीपोऽयं तावदस्तु महीतले ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीवैकुण्ठशिष्ययतिकविराजयतिप्रकाशितः सांख्यतत्त्वप्रदीपः समाप्तः ॥

ॐ श्रीगणेशाय नमः ॥

# तत्त्वमीमांसा ।

सुखैकविषया भूतानां प्रवृत्तिः । सुखं च सति दुःखहेतावसम्भवति । अतो भवति दुःखाऽभिघातके जिज्ञासा सा च तत्त्वज्ञानात् । अतस्तत्त्वमत्र निरूप्यते । ननु त्रिविधं दुःखम् आध्यात्मिकमाधिदैविकमाधिभौतिकं च । तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्च । शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं मानसं कामक्रोधादिनिबन्धनम् । आधिभौतिकं मानुषपशुपक्ष्यादिनिमित्तम् । आधिदैविकं यक्षराक्षसग्रहाद्यावेशनिबन्धनम् । तेषां चैषां लौकिकैरेवोपायैः प्रतीकारः शक्यते । तथा हि शारीरस्यौषधादिभिः मानसस्य मनोज्ञस्त्रीपानभोजनवस्त्रालङ्कारादिप्राप्त्या आधिभौतिकस्य नीतिशास्त्राभ्यासपुस्थानोपवेशादिना आधिदैविकस्य मणिमन्त्राद्युपयोगेनेति सुकर उपायः तत्त्वज्ञानं त्वनेकजन्मपरम्पराभ्याससाध्यम् । तथा च लौकिकानामाभाणकः ।

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संप्राप्तौ को विद्वान् यत्नमाचरेत् ॥ इति ।

अर्के गृहकोणे । मैवम् । न ह्येतैरुपायैः सर्वमेव

दुःखं निवर्तते । निवृत्तं पुनर्नोत्पद्यते । यद्यपि शास्त्रीयमपि अहोरात्रमासवर्षादिसाध्यमुपायान्तरं सुकरं श्रूयते अपाम सोमममृता अभूमेति तथापि एतदपि लौकिकोपायतुल्यमेव । तथाहि सोमयागः पशुवधादिसाधनत्वान्न विशेषतः शुद्धः । अकृते हि तद्वधप्रायश्चित्ते स्वर्गादिगत्यनन्तरं परिपच्यते एव तद्दुःखम् । न च न हिंस्यात्सर्वाभूतानीति सामान्यशास्त्रस्य विशेषशास्त्रेणाग्नीषोमीयं पशुमालभेतेत्यनेन बाधः शङ्क्यः भिन्नविषयत्वेन बाध्यबाधकभावासम्भवात् अग्नीषोमीयं पशुमालभेतेति वाक्येन हि वधस्य क्रतूपकारकत्वमेव बोध्यते न तु पुरुषप्रत्यवायाभावः । एवं स्वर्गादेरनित्यत्वमपि सत्त्वे सति कार्यत्वादनुमीयते । तथा च श्रुतिरपि

न कर्मणा न प्रजया धनेन
त्यागेनैकेनामृतत्वमानशुः ।
परेण नाकं निहितं गुहायां
विभ्राजते यद्यतयो विशन्ति ॥

कर्मणा ज्योतिष्टोमादिना प्रजया पुत्रेण धनेन देवताज्ञानेन पुत्रेणायं लोको जेयो विद्यया देवलोकः कर्मणा पितृलोक इति श्रुत्यन्तरात् एभिः पित्रादिलोकस्यैव प्राप्तिर्नामृतत्वस्येति भावः । तर्हि कथममृ-

तत्त्वमित्यत आह त्यागेनेति । सर्वकर्मसंन्याससाध्यज्ञानेनेत्यर्थः । तदमृतत्वं स्वर्ग एव चेत्तत्राह परेण नाकमिति । तर्हि दूरस्थत्वान्न प्राप्यमिति चेत्तत्राह निहितं गुहायामिति । तच्चासन्नत्वात्पृथक्जनैरपि लभ्यमिति चेत्तत्राह यद्यतय इति । अदूरभूतमप्यविवेकिनां दूरभूतमेव । तथा श्रुत्यन्तरम् ।

कर्मणा मृत्युमृषयो निषेदुः
प्रजावन्तो द्रविणमीहमानाः ।
तथाऽपरे ऋषयो ये मनीषिणः
परं कर्मभ्योऽमृतत्वमानशुरिति ॥

अपाम सोममसृता अभूमेत्यमृतत्वाभिधानं तु चिरस्थित्यभिप्रायम् । यदाहुः आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते इति । तदेतत्सर्वमभिप्रेत्योक्तं शास्त्रकृद्भिः

तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ।

अस्यार्थः । तस्मात्सोमपानादेरविशुद्धादनित्यात् विपरीतो हिंसाद्यसङ्कराद्विशुद्ध उपायः श्रेयान् । स च कथम् ? व्यक्तस्य कार्यजातस्य तत्कारणस्य अव्यक्तस्य प्रधानस्य ताभ्यां परस्य तस्यात्मनश्च विवेकेन ज्ञानाद्भवति इति । न च विवेकोत्पन्नफलस्यापि कार्यत्वादनित्यत्वं शंक्यम् । भावरूपकार्यस्यैवानित्यत्वात् दुःखध्वंसस्य

तु कार्यत्वेपि नित्यत्वात् ।

अथात्र शास्त्रे चतस्रो विधाः । प्रकृतिर्विकृतिरुभयमनुभयश्चेति । तत्र जगतो मूलकारणभूतं प्रधानं न विकारः किन्तु प्रकृतिरेव प्रकरोतीति प्रकृतिः सत्त्वरजस्तमसां साम्यावस्था । अस्याश्च मूलान्तरमनवस्थाभयान्नास्तीति मूलप्रकृतिरित्युच्यते । सैव शास्त्रान्तरे अविद्या मायाशब्देनोच्यते । एतदेवाव्यक्तं सत्त्वादीनां गुणानां वैषम्ये सति व्यक्तमित्युच्यते । यथाहि समुद्रजले चलिताचलितप्रदेशाः । एवं त्रिगुणात्मिके प्रधाने परिणामवांस्तद्विधुरश्च प्रदेशः । तत्र प्रकृतिविकारेषु मध्ये आद्यो विकारो महानित्युच्यते स एतद्बुद्धिलक्षणः । स च महान्सात्त्विको राजसस्तामसश्चेति त्रिविधः । बुद्धेस्तु प्रथमो विकारोऽहङ्कारः । एते च महदादयः प्रकृतयो विकृतयश्च । तथाहि महत्तत्त्वमहङ्कारस्यं प्रकृतिर्विकृतिश्च मूलप्रकृतेः । अयं हि क्रमः प्रकृतेर्महान् महतोऽहङ्कारः अहङ्कारात्पञ्च तन्मात्राः ताभ्यः पञ्च भूतानि तन्मात्राणि पुनः क्षीरदध्योरन्तराले कललपरिणामात्परिणतानि सूक्ष्मभूतानि कुसुमसौरभ्यन सूक्ष्मस्थूलतयोपलक्ष्यमाणं गुणवैषम्यमेव तन्मात्रशब्देन भूतशब्देन चोच्यते । पञ्च भूतानि एकादशेन्द्रियाणि चेति

एष षोडशको गणस्तु विकार एव न प्रकृतिः। पुरुषस्त्वात्मा न प्रकृतिर्न विकृतिः। तदेतदाहुः।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥

इति।

अथ शास्त्रपरिभाषा। दृष्टमनुमानमाप्तवचनञ्चेति त्रिविधं लौकिकं प्रमाणम्। आर्षं तु विज्ञानं योगिनामेवेति तदत्र नोक्तम्। तत्र पृथिव्यादयः सुखादयश्चास्मदादीनां विषयाः। तन्मात्रलक्षणास्तु देवानां योगिनां च विषया न त्वस्मदादीनाम् तेषां चेन्द्रियैः सम्बन्धः सन्निकर्षः। एवञ्च विषयसम्बद्धेन्द्रियाश्रितो यो बुद्धिधर्मोऽध्यवसायः स एव प्रमाणम्। अयं हि क्रमः। विषयसम्बद्धानामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तु तमोभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यव्यवसाय इति ज्ञानमिति वृत्तिश्चाख्यायते। तदिदं प्रत्यक्षप्रमाणम्। अस्माच्च यश्चेतनाशक्तेरनुग्रहस्तत्फलं प्रमा बोधः। बुद्धिसत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोध्यवसायोप्यचेतनः घटादिवत्। एवं हि बुद्धिसत्त्वस्य परिणामभेदाः सुखादयोप्यचेतनाः। पुरुषस्तु सुखाद्यननुषङ्गी चेतनः। सोऽयं बुद्धितत्त्ववर्त्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितो बुद्धिसादृश्यप्रा-

प्त्या ज्ञानसुखादिमानिव भवति चितिसादृश्यप्राप्त्या च अचेतनापि बुद्धिस्तदध्यवसायश्च चेतन इव भवति। चार्वाकास्तु प्रत्यक्षान्यत् न मानमिति वदन्ति। तन्मते संदिग्धविपर्ययस्तु पुरुषबोधनं नोपपद्येत। नहि पुरुषान्तरगतः संशयः अनुमानं कथनं विना वा ज्ञातुं शक्यः।

प्रमाणान्तराणि त्वत्रैवान्तर्भवन्ति। तथाहि उपमानं तावत् गोसदृशो गवय इति वाक्यं तज्जनितो बोधो शब्द एवान्तर्भवति चक्षुःसंनिकृष्टस्य गवयस्य यत् गोसादृश्यज्ञानं तत्प्रत्यक्षमेव। एवं जीवतश्चैत्रस्य गृहासत्त्वेन बहिःसत्त्वकल्पनमर्थापत्तिः साप्यनुमान एवान्तर्भवति। विमतश्चैत्रो बहिर्भवनुमर्हति गृहेष्वविद्यमानत्वात्। यदा त्वव्यापकः सन्नेकत्रास्ति तदान्यत्र नास्ति यदैकत्र नास्ति तदान्यत्रास्तीति व्याप्तिग्रहात्। एवमिह वटे यक्षः प्रतिवसति इति ऐतिह्यं न प्रमाणमनिर्दिष्टस्ववक्तृकत्वेन सन्देहात्। आप्तोक्तत्वनिश्चये त्वागम एव। एवमभावो नानुपलब्धिगम्यः किन्तु प्रत्यक्ष एव। न हि भूतलस्य कैवल्यलक्षणात्परिणामविशेषादन्यो घटाभावो नाम। सर्वे एव हि भावाः प्रतिक्षणं परिणामिनः स च परिणामभेद ऐन्द्रियक एवेत्यलम्।

तत्र सूक्ष्मस्याव्यक्तस्याप्रत्यक्षत्वेपि महदादिकार्येण

तदनुमीयते । तथाहि सदेव कार्यं कारणव्यापारात्प्रागपि । असतो हि सत्त्वं दुष्करम् । नहि नीलं शिल्पिसहस्रेणापि पीतं शक्यं कर्तुम् । किन्तु तिलेषु पीडनेन तैलस्येव आविर्भावमात्रमुत्पत्तिः तिरोभाव एव विनाशः । किञ्चासम्बद्धस्यापि कार्यस्य जन्यत्वे सम्बद्धत्वाविशेषात्सर्वं कार्यं सर्वस्माद्भवेदिति कार्यसम्बद्धस्यैव कारणस्य जनकत्वमुपेयम् । न च सदसतोः सम्बन्धोऽस्तीति सत्कार्यम् । किञ्च तन्तुधर्मत्वात्तन्तूपादेयत्वाच्च न पटस्यार्थान्तरत्वम् यन्नैवं तन्नैवं यथा घटपटौ । तथा अर्थान्तरयोः संयोगो वा भवति यथा कुंडबदरयोः अप्राप्तिर्वा भवति हिमवद्विन्ध्ययोः । तस्माद्यथा कूर्मशरीरे कूर्माङ्गानि निविशमानानि तिरोभवन्ति न तत्र तान्युत्पद्यन्ते न विनश्यन्ति वा एवमेकस्मात्सुवर्णादेर्मुकुटादिप्रादुर्भाव एवोत्पत्तिः । एवञ्च महदादिकार्यं प्रधानेऽभिनिविशते अव्यक्तं भवति इति । कारणे सत्त्येव कार्यस्य विभागाविभागाभ्यामव्यक्तं कारणमस्तीति गम्यते । तच्चाव्यक्तं नित्यं व्यापकं च सर्वं कार्यं व्याप्नोति तथा निःक्रियं क्वचिदप्यनाश्रितञ्च एवं निरवयवं स्वतन्त्रं च । एतद्विपरीतन्तु व्यक्तम् । एवं व्यक्तमव्यक्तं च सुखदुःखमोहरूपगुणत्रयान्वितमचेतनं प्रसवधर्मि च

तद्विपरीतः पुरुषः सुखादयश्च गुणाः सत्त्वरजस्तमोरूपाः। सत्त्वस्य प्रयोजनं तु प्रकाशः रजस्तु तस्य प्रवर्तकं तमस्तु नियामकं यदि हि तमसा गुरुणा न नियम्येत तदा रजः लघु सत्त्वं सर्वत्र प्रवर्त्तयेत् । यथा सत्त्वं रजस्तमसी अभिभूय शान्तां वृत्तिमधिगच्छति यथा च रजः सत्त्वरजसी अभिभूय घोरां तथा तमः सत्त्वरजसी अभिभूय मूढामिति । यद्यप्येते परस्परं विरोधशीलाः तथापि यथा वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणरूपैककार्यकारिणः एवमेतेऽपि । एवं सुखहेतुत्वात्सत्त्वं सुखात्मकं दुःखहेतुत्वाद्दुःखात्मकं रजः यन्मोहकं तत्तमः। ते च सुखदुःखमोहाः परस्पराविरोधिनः स्वानुरूपाण्येव परस्परं विरुद्धानि सुखदुःखमोहात्मकानि निमित्तानि कल्पयन्ति । तथाहि एकैव स्त्री स्वामिनं प्रति सुखरूपसद्भावाच्च सुखाकरोति सपत्नीस्तु दुःखाकरोति एवमत्राप्येकस्यापि निमित्तभेदाद्भेदः । सुखप्रकाशलाघवैस्तु परस्परमाविरोधान्न निमित्तभेदाः कल्प्यन्ते । सर्गादौ तु परिणामस्वभावा गुणाः क्षणमप्यपरिणमय्य न तिष्ठन्तीति सत्त्वं सत्त्वरूपतया रजो रजोरूपतया तमस्तमोरूपतया प्रवर्त्तते । यथाहि घनविमुक्तजलानां जम्बीरकरवीरनारिकेराद्याश्रयभेदादस्ति भेदः

एवमेकरूपाणामपि गुणानां प्रतिगुणाश्रयविशेषादने-करूपता । आत्मा तु व्यक्ताव्यक्तसंघातभिन्नः । परार्थो हि संघातो भवति । यथा शयनासनादयः संघाताः शरीरार्था दृष्टाः । किञ्च यथा रथादि यंत्र्यादिनाधिष्ठितं एवं त्रिगुणात्मकमपि परेण केनचिदधिष्ठीयमानं युक्तम् । स चात्मा प्रतिशरीरं भिन्नः न ह्येकस्मिन् सुखिनि सर्वे सुखिनः । स चायं पुरुषः साक्षी च भवति प्रकृतिर्हि स्वविषयचरितं पुरुषाय प्रदर्शयति । तथाहि लोके अर्थि-प्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः । एवं चायं द्रष्टापि भवति । तथा अत्रैगुणादस्य कैवल्यं च धर्मः । आत्यन्तिको हि दुःखत्रयाभावः कैवल्यम् । अतएवा-त्रिगुणत्वान्मध्यस्थोऽपि भवति सुखी हि सुखे तृप्यन् दुःखी द्विषन् मध्यस्थो न भवति । अत एवो-भयराहित्यादुदासीन इत्युच्यते । एवमप्रसवधर्मित्वाद-कर्तापि । यद्यपि चेतनोऽहं करोमीति कृतिचैतन्ययोरै-काधिकरण्यं प्रतीयते तथापि पुरुषप्रधानादिसम्बन्धात्पुरु-षचैतन्यमव्यक्ते गुणकर्तृत्वं च पुरुषे उपचर्यते । भोग्यं हि प्रधानं भोक्तारमन्तरेण न संभवति इति भवति तस्य भोक्त्रपेक्षा पुरुषस्तु भोग्येन प्रधानेन संयुक्तस्तद्गतं दुः-खमात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते । तच्च सत्त्वपु-

रुषान्यताख्यातिनिबन्धनम् न च सत्त्वपुरुषान्यताख्या-
तिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षत
इति तयोः संयोगः अत एव संयोगो न महदादि-
सर्गमन्तरेण भोगाय कैवल्याय च पर्याप्त इति संयोग
एव भोगापवर्गार्थं सर्गं करोतीति ॥

अथ विवेकज्ञानोपयोगिनी बुद्धिर्निरूप्यते । त-
स्याश्च व्यापारोऽध्यवसायः तदभिन्नः । एव बुद्धेर्लक्षणं
समानासमानजातीयव्यवच्छेदकत्वात । तथाहि सर्वोऽपि
व्यवहर्ताऽहमत्राधिकृत इति अभिमत्य मया एतत्कर्त-
व्यमिति अध्यवस्यति ततश्च प्रवर्तते । तत्र चितिसन्नि-
धानादापन्नचैतन्याया बुद्धेर्योऽयं कर्तव्यमिति विनिश्चयः
सोऽध्यवसायः । तत्र धर्मो यागाद्यनुष्ठानजनितः । ज्ञानं
गुणपुरुषान्यताख्यातिः । वैराग्यं रागाभावः । एवमैश्व-
र्यमपि बुद्धिधर्मो यतोऽणिमादिप्रादुर्भावः । अहमत्र शक्तः
मत्तो नान्योऽत्राधिकृतः अतोऽहमस्मि इत्यादिको योऽभि-
मानः सोऽहङ्कारव्यापारत्वादहङ्कारः । तमुपजीव्य हि बु-
द्धिरध्यवस्यति कर्त्तव्यमेतन्मयेति अहङ्काराच्च द्विविधः
सर्गः सात्त्विकादेकादशेन्द्रियाणि तामसात्तु पञ्चतन्मात्राः ।
राजसस्तु तत्प्रवर्तकत्वमात्रात्कारणत्वम् । सात्त्विकराजस-
तामसाहङ्काराणामेव क्रमेण वैकारिकस्तैजसो भूतादिरिति

संज्ञाः। चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि बुद्धीन्द्रियाणि। वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि। मन उभयात्मकं बुद्धीन्द्रियं कर्मेन्द्रियञ्च। चक्षुरादीनां च मनोधिष्ठितानां स्वविषयेषु प्रवृत्तेः। प्रथमं वस्तुदर्शनानन्तरं बालमूकादिवन्निर्विकल्पात्मकं सामान्यतो ज्ञानमुत्पद्यते। पश्चाच्च वस्तुधर्मैर्जात्यादिभिर्योऽध्यवसायः स सङ्कल्पाख्यो मनसो व्यापारः। एकस्मादहङ्कारादेकादशविधानि इन्द्रियाणि भवन्तीत्यत्र तु शब्दाद्युपभोगसम्प्रवर्तकादृष्टभेद एव नियामकः। अदृष्टभेदस्तु गुणपरिणाम एव। पञ्चबुद्धीन्द्रियाणां सम्बद्धवस्त्वालोचनं वृत्तिः वागादिकर्मेन्द्रियाणां तु वचनादयो वृत्तयः। एवं महतोऽध्यवसायः अहङ्कारस्याभिमानः सङ्कल्पो मनसो वृत्तिर्व्यापारः। कार्यकरणाभिमुखानां करणानां वृत्तिसङ्करस्तु न भवति। यथाहि परावस्कन्दाय प्रवृत्ताः शाक्तीकयाष्टीकादयः स्वं स्वं शक्त्यादिकमेवाददते न परस्परयष्ट्यादिकम्। ननु याष्टीकादीनां चेतनत्वादस्तु तथा प्रवृत्तिः करणानां त्वचेतनानां प्रवृत्तेरयुक्तत्वात्तत्स्वरूपसामर्थ्योपभोगाभिज्ञ अधिष्ठाता स्वीकार्य इति चेन्न तत्प्रवृत्तौ पुरुषार्थस्यैव हेतुत्वात् एतच्चोपपादयिष्यति। करणानि तु त्रयोदश। करणत्वं तु शब्दस्पर्शादिप्रकाशनं कर्मेन्द्रियाणां तु वचनादिव्यापारः।

एतद्वाह्यकरणं वर्त्तमानकालमन्तष्करणं तु त्रिकालम् । नदीपूरभेदादभूद्वृष्टिः अस्ति धूमादिहाग्निः पिपीलिकाण्डसंचरणाद्भविष्यति वृष्टिरिति प्रत्ययात् । ये तु वैशेषिकाः कालमेकमतिरिक्तं स्वीकुर्वते । तन्मतेऽप्यतीतानागतादिव्यवहारभेदः उपाधिभेदादेव भवति एवं च तैरतैरुपाधिभिरेवातीतानागतादिभेदसिद्धौ किमतिरिक्तकालस्वीकारेणेति सांख्याः । एषां चेन्द्रियाणां प्रधानाप्रधानभावोऽप्यस्ति । यथाहि ग्रामाध्यक्षा कर्षकादिभ्यः करमादाय विषयाध्यक्षाय प्रयच्छन्ति विषयाध्यक्षश्च सर्वाध्यक्षाय स च भूपतये एवं वाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति मनश्च सङ्कल्प्याहङ्काराय अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षायामिति । एते च बुद्धीन्द्रियमनोहङ्कारा गुणविशेषा गुणानां सत्त्वरजस्तमसां विकाराः परस्परं विरुद्धा अपि पुरुषार्थेनैकवाक्यतापन्नाः यथा सन्तमसापनयनेन प्रकाशाय मिलिता वर्त्तितैलवह्नयः प्रदीपो भवति । ननु कस्माद्बुद्धौ प्रयच्छन्ति न पुनरहङ्काराय मनसे वेति चेन्न पुरुषार्थस्य प्रयोजकतया साक्षात्साधनं प्रधानं बुद्धिरेव अहङ्कारादयस्तु तं प्रति गौणाः । अस्मदादिभिः परस्परव्यावृत्तानि नानुभूयन्ते इति शब्दादितन्मात्राणि अविशेषाः सूक्ष्माणि च । आकाशादिषु तु स्थूलेषु कश्चिरस-

त्त्वप्रधानतया शान्ताः सुखाः प्रसन्ना लघवः केचिद्रज-
स्तमःप्रधानतया घोरा मूढाश्च । ते विशेषाः पुनः त्रिधा
सूक्ष्मं शरीरं मातापितृजं महाभूतानि च। प्रधानेनादिसर्गे
प्रतिपुरुषमेकैकमुत्पादितं तथाऽव्याहतं शिलामप्यनुप्रवि-
शति । सर्गादामहाप्रलयमवतिष्ठते सूक्ष्मं शरीरं तच्च
महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रसमुदायः। एतच्च शरीरं
भोगानर्हं इति स्थूलं शरीरं षाट्कौशिकमाश्रयति ।
लोमलोहितमांसानि मातृतः स्नाय्वस्थिमज्जानः पितृत
इति षट् कोशाः । ननु धर्माधर्मनिमित्तः संसारः तस्य
च सूक्ष्मशरीरेऽभावात्कथं स्थूलशरीराश्रयणमिति चेत् न
धर्माद्यन्वितबुद्ध्या संयोगेन तस्यापि धर्माद्यभिवासितत्वात्
यथाहि सुरभिपुष्पादिसम्बन्धाद्वस्त्रमपि तदामोदवासितं
भवति। धर्माधर्मादिनिमित्तकं च स्थूलशरीरग्रहणं तयोः
संसर्गेण सूक्ष्मशरीरं स्थूलशरीरमाश्रित्य देवो वा मनुष्यो
वा पशुर्वा भवति। यथाहि नटस्तां तां भूमिकां विधा-
य धर्मराजो वा भवति वत्सराजो वा भवति इति ।
हेतुस्त्वत्र पुरुषार्थ एव । तत्रोर्ध्वगमनस्य निमित्तं धर्मः ।
एवमधर्मेणाधोगतिः। ज्ञानेन मोक्षोऽज्ञानेन बन्धः। तत्त्वा-
नभिज्ञस्य पुरुषस्य वैराग्यमात्रात्प्रकृत्यादिष्वात्मबुध्यो-
पास्यमानेषु तत्रैव लयः रागात्संसारः ऐश्वर्यादिच्छाया

अविघातः विघातश्चानैश्वर्यात्। अयं बुद्धिसर्गः चतुर्धा विपर्ययाशक्तितुष्टिसिद्धिभेदात्। तत्र विपर्ययोऽज्ञानमविद्या। विपर्ययः पञ्चधा अविद्यास्मितारागद्वेषाभिनिवेशा यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञाभेदात्। प्रकृत्यादिष्वनात्मस्वात्मबुद्धिरविद्या तमः। देवादीनामणिमाद्यैश्वर्येषु शाश्वतिकत्वाभिमानोऽस्मिता मोहः। शब्दादिषु विषयेषु राग आसक्तिर्महामोहः। देवादीनामसुरादिभ्यः स्वैश्वर्याणिमाभिघातभयमभिनिवेशोऽन्धतामिस्रः। अशक्तिस्तु अन्धत्वपङ्गुत्वादिरूपा करणवैकल्यहेतुका। तुष्टयो द्वेधा आध्यात्मिका बाह्याश्च प्रकृतिव्यतिरिक्त आत्मास्तीति निश्चित्य संन्यासादेव तत्रापवर्गो भविष्यतीति उपदेशाद्या तुष्टयस्ता आध्यात्मिक्यः पञ्चविषयोपरमात् या तुष्टयस्ता बाह्याः। आत्मविद्यानामध्ययनमननादयः सिद्धिभेदाः। एवं निरूपितो बुद्धिसर्गः। तन्मात्रसर्गोऽपि देवमनुष्यपश्वादिभेदाद्बहुधा। तत्रोर्ध्वाधोमध्यलोकाः सत्त्वरजस्तमोबहुलाः। ननु सुखदुःखादयः प्राकृता बुद्धिगुणाः कथं चेतने भवन्तीति चेत्सत्यम् पुरि लिङ्गे शेरते स पुरुषः। एवं च लिङ्गपुरुषयोः सम्बन्धाल्लिङ्गधर्मानात्मन्यध्यवस्यति। अयं च महदादिः पृथिव्यादिमहाभूतान्तः सर्गः प्रकृत्यैव कृतः। निष्कारणत्वे तु

सदैव स्यान्नैव वा स्यात् । ईश्वरस्तु न तत्रोपादानं चितिशक्तेरपरिणामात् । नापि ईश्वराधिष्ठितायाः प्रकृतेः कर्तृत्वं निर्व्यापारस्याधिष्ठातृत्वासम्भवात् । नहि निर्व्यापारस्तक्षा वास्याद्यधितिष्ठति । ननु प्रकृतेः कर्तृत्वे तस्या नित्यत्वेनानुपरमात्कदापि मोक्षो न स्यादिति चेन्न । यथाहि ओदनकामः पक्वौदनो न प्रवर्तते पुनस्तत्र एवं यं यं पुरुषं प्रकृतिर्मोचितवती न तं प्रति पुनः प्रवर्तते । नन्वचेतनायां प्रकृतौ कथं चेतनधर्मः प्रवृत्तिः तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः आत्मानस्तु प्रकृतिस्वरूपानभिज्ञत्वान्नाधिष्ठातुमर्हन्ति तस्मादस्ति सर्वार्थदर्शी प्रकृतेरधिष्ठाता स चेश्वर एवेति चेत्सत्यम् यथाहि वत्सविवृद्ध्यर्थमचेतनमपि क्षीरं प्रवर्तते तथा प्रकृतिरपि पुरुषमोक्षाय प्रवर्तिष्यते । न चेश्वराधिष्ठानत्वेन क्षीरे प्रवृत्तिः शङ्क्या । द्विधा हि प्रवृत्तिर्भवति स्वार्थाय कारुण्याय वा । न चाप्तसकलकामस्येश्वरस्य किमपि प्रार्थनीयमस्ति सर्गात्प्राक् दुःखाभावेन करुणाया असंभवात् । किञ्च करुणया प्रेरित ईश्वरः सुखिन एव सर्वान् प्राणिनः सृजेत् न विचित्रान् । प्रकृतेस्त्वचेतनतया नेदं द्वयं किन्तु परार्थैव प्रवृत्तिः यथा पारिषदान्प्रदर्श्य निवर्तते नटः एवं प्रकृतिः आत्मानं शब्दाद्यात्मना पुरुषाद्भेदेन

प्रकाश्य निवर्तते ।

फलाभावेपि निर्गुणे उपकारिण्यपि पुरुषे प्रकृति-स्तपस्विनी प्रवर्तते एव यथाहि गुणवानुपकार्यपि भृत्यो निर्गुणे उपकारिण्यपि स्वामिनि निष्फलाराधनः । यद्यपि नाट्यान्निवृत्तोपि नटः कालान्तरे पुनरपि प्रवर्तते एवं मुक्तं प्रति प्रकृतिस्तु न पुनः प्रवर्तते यथाहि विगलितवसना कुलवधूः कदाचित्केनचिद्दृष्टा चेत्तदासौ तथा यतते यथा न पुरुषान्तराणि पश्यन्ति एवं प्रकृतिरपि विवेकेन साक्षात्कृताऽतिलज्जावशात्पुनः स्वात्मानं न प्रदर्शयति । ननु सवासनक्लेशकर्माशयानां बन्धनसंज्ञितानामप्यपरिणामिनि पुरुषेऽसम्भवात्कथं मोक्षः मुचेर्बन्धनाविश्लेपार्थत्वात् । अत एव न संसारोपि सम्भवति निष्क्रियत्वात् । मैवम् । यथाहि भृत्यगतौ जयपराजयौ स्वामिन्युपचर्येते एवं प्रकृतिगतयोरपि भोगापवर्गयोर्विवेकाग्रहात्पुरुषे उपचारः । तत्र धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यरूपैः सप्तभिर्भावैर्बध्नाति तत्त्वज्ञानेन तु मोचयति । एवं च कृतादस्मात्तत्त्वाभ्यासान्नास्मि न मे नाहमिति शुद्धमुत्पद्यते ज्ञानं यद्विषयो अभ्यासस्तं साक्षात्कारयतीति । नास्मीत्यनेन क्रियामात्रन्निषिध्यते अस्तेः क्रियार्थत्वात् ।

नाहमित्यनेन कर्तृत्वं न मे इत्यनेन स्वामित्वं निषिध्यते । भोगविवेकसाक्षात्कारौ प्रकृतेः प्रसोतव्यौ तौ च प्रसूतावितिति निवृत्ता प्रकृतिस्तां निष्क्रियः स्वच्छपुरुषः पश्यति प्रकृतिपुरुषयोरसंसर्गोऽप्यविवेकख्यातिनिबन्धनः संसारः पुनर्न भवति इति । अन्ते तत्त्वज्ञानस्य तदानीमेव शरीरपातस्तु न भवति । यथा हि निवृत्ते कुलालव्यापारे संस्कारवशात् चक्रं भ्रमत्तिष्ठति एवं संस्कारवशात् शरीरमपि शरीरपातानन्तरं तु प्रधानस्य निवृत्तत्वादात्यन्तिकमपि दुःखं नश्यति दुःखाभावरूपं कैवल्यमाप्नोति ॥

इति श्रीमद्देवीदत्तात्मजगमसेवकसून्वाचार्यकृष्णमित्रकृता तत्त्वमीमांसा समाप्ता ॥

श्रीगणेशाय नमः ।

श्रीदक्षिणामूर्त्तिगुरुभ्योनमः ।

# अथ सांख्यपरिभाषा ।

स्वानुभवं यथामति व्याख्यास्यामः ।

ॐनमो नारायणाय प्रकृत्यै पुरुषाय च ।
वेदान्तसारगुह्याय साङ्ख्यतत्त्वस्वरूपिणे ॥ १ ॥
योगिनां परहंसानां तत्त्वज्ञानार्थदर्शनम् ।
अन्येषां च न दातव्यं मायया मोहितं जगत् ॥ २ ॥
शब्दश्रोता च व्याजेन निर्वाणार्थं च कथ्यते ।
यदा कश्चिन्महाभागस्तस्य विश्रान्तिकारकम् ॥
विभक्तिमत्र यो पश्येत्तस्य ज्ञानं च दूरतः ॥ ३ ॥

अथ गुरुः ।

गुरुयुक्त्या प्रसादेन ग्रन्थगर्भावलोकनम् ॥ ४ ॥
गुरुश्च द्विविधः प्रोक्तो वार्त्तिकाम्नाय एव च ॥
वार्त्तिको भक्तिभावेन आम्नायो मूलकारिका ॥ ५ ॥

किन्तु——

ब्राह्मणस्त्रीशूद्रमुखोपास्या ये ते तु वार्त्तिकाः ।
संन्यासादिपारम्पर्येण स आम्नायः प्रकीर्तितः ॥ ६ ॥

आदौ शिवस्तथा विष्णुर्ब्रह्मा वसिष्ठ एव च ।
शक्तः पाराशरो व्यासः शुको गौडस्तथैव च ॥
गोविन्दपादपूज्येभ्यः शङ्करः शङ्करो परः ।
इयं परम्परा प्रोक्ता गुरोराम्नायसिद्धिदा ॥ ७ ॥
गुरुर्गायत्र्युपदेशो गुरुश्चोदरपोषकः ।
सद्गुरुर्मोक्षदाता च गुरोस्त्रिविधलक्षणम् ॥ ८ ॥
मन्त्राध्ययनं च व्याख्यानं कर्मतन्त्राणि चेटकाः ।
वैदिकी शिल्पविद्या च श्रीगुरोस्तस्य उच्यते ॥ ९ ॥
कार्यकारणतां हित्वा समाधिः पूर्णबोधकः ।
तारको मोक्षदाता च सद्गुरुस्तस्य उच्यते ॥ १० ॥

अथ शिष्यः ।

रिक्तकामं मनो धृत्वा विश्वासं गुरुभक्तिदम् ।
आशामोक्षं विना नास्ति तच्छिष्यमुद्धरेद्गुरुः ॥११॥
भो भो स्वामिन् कृपासिन्धो प्रार्थयिष्यामि तेऽधुना ।
तप्तसंसारदावाग्नौ मुक्तिं कुरु दयानिधे ॥ १२ ॥
विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽखिलवेदार्थो अस्मिन् ।
तथा च श्रुतिः—
समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपाश्रित्य तमनुसरति ॥
तद्धि संप्रणिपातेन परिप्रश्नेन सेवया ॥
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ १३ ॥

'यज्ज्ञात्वा न पुनर्मोहः' इति गीतासु ।
मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यज ॥
लोलुपः साधुसङ्गस्य अत्यन्तं सुखमश्नुते ॥ १४ ॥

इति गुरुपरम्परा ।

अथ सांख्यसाम्प्रदायेन ज्ञानमाह । तत्र प्रथमं साधनचतुष्टयसम्पन्नस्य इहामुत्रार्थफलभोगविरागः । द्वितीयं शमदमादिषट्कम् । तृतीयं नित्यानित्यवस्तुविवेकः । चतुर्थं मुमुक्षुत्वं मोक्षेच्छा । किन्तु इह नाम स्रक्चन्दनवनितादिविषयभोगविरागः । अमुत्र नाम स्वर्गभोगादिअनिच्छा । शमो नाम मनोनिग्रहः । दम इन्द्रियनिग्रहः । तितिक्षा शीतोष्णादिपरोत्कर्षसहनम् । समाधानं सृष्ट्यादिमायाविलक्षणम् । श्रद्धा गुरावध्यात्मशास्त्रे रतिः । उपरमः कार्यकारणातीतम् । नित्य आत्मा । अनित्या दृश्यपदार्थाः । अतः परं मोक्षेच्छा ॥

इति साधनचतुष्टयम् ।

कम्बलो खर्परी वेणुर्बुद्धस्त्रिविधलक्षणम् ।
चित्तक्षिप्तगतायातालीनताभूमिकात्रयम् ॥ १ ॥

अथ भूमिका । विक्षेसा विषयपदार्थे रतिः । ग-

तायाता संशयात्मिका । सुलीनता प्रीतिरूपा तुरीया ।

अथ बुद्धयः । गुरुः शास्त्रादियुक्त्या बोधयति तथापि शून्यं कम्बलपेशीवत् । सा अधिकप्रकाशो न भवति खर्परच्छिद्रवत् । अनेकयुक्त्या विस्तारयति भग्न-वेणुवत् जले तैलवत् । तत्रादौ वैराग्यम् । तत्र प्रमाणं श्रुतिः—न वाऽरे सर्वस्य कामाय सर्वं प्रियं भवत्या-त्मनस्तु कामाय सर्वं प्रियं भवति इति ।

बृहदारण्यके 'त्यागेनैकेन अमृतत्वमानशुः' । तत्रादौ शवलत्यागः ॥

विष्ठामूत्रं च दुर्गन्धि कुम्यगारं च नश्वरम् ।
तत्सौख्यमानिनो मूढा अहंममेतिगर्विताः ॥ १ ॥
कस्य माता पिता कस्य कस्य भ्राता सहोदरः ।
कस्य स्त्री कस्य पुत्रस्तु नराणां कर्मबन्धनम् ॥ २ ॥
जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ।
उदासीनसमं पश्येत्सर्वं व्यर्थमिवात्मनि ॥ ३ ॥
स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ।
क्षमी विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ॥ ४ ॥
कायारण्यसमाविष्टो मनव्याघ्रो महाबली ।
भक्षते सकलांल्लोकान्देवानुरगमानवान् ॥ ५ ॥
ज्ञानखड्गं दृढं कृत्वा वैराग्यं भूमिशोधनम् ।

दुर्लभो यस्य संग्रामो कोसौ शूरश्च आत्मवान् ॥ ६ ॥

अथ शुद्धत्यागः ।

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रंथमशेषतः ॥ ७ ॥
पदमिच्छसि ब्रह्मत्वं तदा विज्ञानतः शृणु ।
सर्वार्थेषु च वैराग्यं सर्वभूतेषु चात्मता ॥ ८ ॥
मुक्तिमिच्छसि चेत्वन्तु विषयान् विषवत्त्यज ।
क्षमार्जवदयातोषसत्यं पीयूषवद्भज ॥ ९ ॥
मनसा ध्यायते योगी कृपणस्तु धनं यथा ।
मनसा येन पीत्वा च तेन जित्वा जगत्त्रयम् ॥१०॥
विहाय कामान्यः सर्वान्पुमांश्चरति निस्पृहः ।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ११ ॥
अकिञ्चनश्च दान्तश्च शान्तश्च सममानसः ।
स लिङ्गानाश्रमं त्यक्त्वा चरेदविधिगोचरः ॥ १२ ॥
देहे च शृणु तं तात गुप्तप्रकटलक्षणम् ।
दशगुप्तकरं मोक्षद्वादशं सहजस्थितिः ॥ १३ ॥
निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ।
अनुव्रजाम्यहं नित्यं पूयेयदङ्घ्रिरेणुभिः ॥ १४ ॥
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः ।

एकाकी निस्पृहः शान्तो पाणिपात्रो दिगम्बरः ॥१५॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥१६॥
निरालम्बपदं प्राप्य चित्ते तत्र लयं गते ।
निवर्तन्ते क्रियाः सर्वाः स योगी निर्गुणः परः ॥१७॥
विषयेन्द्रियकारणमाकर्षचित्तविभ्रमः ।
यथा बहुसपत्नीनां लुठन्ति पतिमेकतः ॥ १८ ॥
साधु साधु शृणु स्वार्थमस्थियन्त्राच्च दूरतः ।
अस्य भागकृता लोके ममत्वं श्वानवत्कृतम् ॥१९॥
शृणु तात द्वयं त्याज्यमाशा भेदस्तथैव च ।
आशया दीनतां कृत्वा भेदश्च भेदवर्धनम् ॥ २० ॥
रोदनहास्यकाऽऽननेन पिशाचस्थितिमाश्रयेत् ।
अस्य सङ्गं सदा त्यज्य भव चिन्मात्र सर्वदा ॥ २१ ॥
छायाकार्यं यथा नास्ति तथैवायं हि देहकः ।
तत्त्वं गृहरसं त्यज्य परमां स्थितिमाश्रय ॥ २२ ॥
गोष्पदं पृथिवी मेरुः स्थाणुराकाशमुद्रिका ।
तृणं त्रिभुवनं राम वैराग्यालंकृता कृतिः ।
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥ २३ ॥

इति वैराग्यम् ॥

अथ भक्तिद्वारा चतुर्विधा मुक्तिः।

वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते॥
प्रथमं चित्तशुद्धिं च मानसं पूजनद्वयम्।
तृतीयं च सदा ध्यानं व्यापकं च चतुर्थकम्॥ १॥
पञ्चमं तु निरालम्बं मोक्षभूमिर्यथाक्रमम्।
यत्नेन साधयेन्मर्त्यो तस्य मुक्तिर्न संशयः॥ २॥
जपानुष्ठानयोर्द्वारा चित्तशुद्धिर्विधीयते।
पश्चाच्चतुर्विधा मुक्तिः शृणु साधु द्विजोत्तम॥ ३॥
मानसे लोकसम्प्राप्तिस्तस्सदा च समीपता।
तथा तस्य स्वरूपं च निरालम्बेन शाश्वतम्॥ ४॥
ये ये यान् यान् यजन्देवांस्ते ते चत्वारमोक्षगाः।
आत्मज्ञानं विना मोक्षो न भवेत्सच्चिदात्मनि॥ ५॥

किन्तु—

मानसं नाम आसनस्थां सावयवमूर्त्तिं ध्यायेत्। निवातदीपवत्स्वस्थं यथाबुध्या षोडशोपचारैः पूजयेत्। तस्य गच्छतस्तिष्ठतश्च न समीपावभासः। स एव सर्वभूतस्थं स्वरूपं पश्यति। ततः सावकाशमिव भासते सा सायुज्यता।

इति चतुर्विधा उपासना मुक्तिः।

अथाद्वैतभक्तिः ।

सर्वेश्वरमयं भक्तिर्ज्ञानं चाभेददर्शनम् ।
निरपेक्षं च वैराग्यं मुक्तं निर्विषयं मनः ॥ १ ॥

किन्तु चाण्डालादिब्रह्मपर्यन्तं सर्वभूतेषु ईश्वररूपं भावयेत् । यथार्हं षोडशोपचारेण पूजयेत् । सा भक्तिः न तु प्रतिमा । ब्रह्मादिपिपीलिकापर्यन्तं स्वशरीरवदभेदं ज्ञात्वा तज्ज्ञानं परदेहादिस्वदेहावयवमेकीकृत्य सर्वत्र एकमेव पिण्डमवधारयेत् ब्रह्मादिस्थावरपर्यन्तमिहामुत्र निराशा । मुक्तो नाम वृत्तिशून्यम् । तत्र प्रमाणम्—

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि च भवत्यात्मलेषभागवतोत्तमः ॥ २ ॥

यदा भूतपृथक्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ३ ॥

प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मनस्तुष्टः स्वपतः स न खिद्यते ॥ ४ ॥

गीतासु ।

ब्रह्मादिस्थावरान्तेषु वैराग्यं यद्धि जायते ।
यथैव काकविष्ठायां वैराग्यं तद्धि निर्मलम् ॥ ५ ॥

इति अद्वैतभक्तिः ।

अथ विवेकज्ञाननिर्णयः ।

अक्रोधवैराग्यजितेन्द्रियत्वं क्षमादयाशान्तिजनप्रियत्वम् ।
निर्लोभदाता भवमुक्तिहेतुर्ज्ञानस्य चिह्नं दशलक्षणानि॥ १॥
कर्म अध्यात्मतत्त्वं च ब्रह्मज्ञानमतः परम् ।
इन्द्रं चत्वारि वाच्यार्थमात्मलक्षं सुखावहम् ॥ २ ॥
कर्मज्ञानी भवेज्जीवः पुरुषोऽध्यात्मसंज्ञकः ।
ईश्वरस्तत्त्ववेत्ता च सर्वं ब्रह्मेति ब्रह्मता ॥ ३ ॥
वर्णाश्रमं च धर्मं च होत्रादिकर्मतत्पराः ।
भजनं सर्वभूतेषु ज्ञानं च कर्मसंज्ञितम्॥ ४ ॥
वैराग्याध्यात्मशास्त्रं च यस्य माया विनिर्गता ।
जिज्ञासा मननाध्यासं ज्ञानमध्यात्मसंज्ञितम् ॥ ५ ॥
आलोक्य धर्मसांख्यादिभर्गकर्मक्रियाविधीः ।
तदर्थव्यतिरेकेण तत्त्वज्ञानं तदोच्यते ॥ ६ ॥
समाधिशब्दवाक्यार्थं ब्रह्माकारतया वृत्तिः ।
एकाकी निस्पृहः शान्तो ब्रह्मज्ञानं तदोच्यते ॥ ७ ॥
वाचो यस्मिन्निवर्तन्ते लिङ्गं गलितसर्वधीः ।
स्वयमेव स्वरूपस्थं खमिव स्वं विराजते ॥ ८ ॥
उक्ताचारविहीनस्य स्वबुद्धिर्वर्ततेऽखिलम् ।
द्रव्यादिविषयस्वार्थान्स जीवो नीचशब्दितः ॥ ९ ॥
सदाचाररतो नित्यं द्वन्द्वातीतश्च निस्पृहः ।

शुष्कञ्चाप्यशनं चैव पुरुषस्तस्य उच्यते ॥ १० ॥
दण्डकाशायमात्रं च कामक्रोधविवर्जितः ।
भ्रमरीभुक्तसन्तोषमीश्वरस्तस्य उच्यते ॥ ११ ॥
दिग्वासं च स्वसंवेद्यमानन्दं स्वपरं न हि ।
पाणिपात्रे च यद्भुंक्ते स ब्रह्म राजते महीम् ॥ १२ ॥
देहान्तितं सदाकालं वर्णाश्रमविवर्जितम् ।
यत्कृतं तत्सदाचारमात्मारामो विराजते ॥ १३ ॥
इति ।

अथ धर्मशास्त्रे—

अनिष्टमिष्टमिश्रं च त्रिविधं कर्मणः फलम् ॥
पशुमिश्रस्तथा ज्ञानी सिद्धज्ञयं च पञ्चकम् ।
एतैर्लक्षणसंयुक्तं वृत्तिभेदेन कथ्यते ॥ १४ ॥
उक्त्वा उक्त्वा च कार्येण द्रव्यं च साधयेत्ततः ।
शिश्नोदररताः स्वार्थे सत्पशोर्लक्षणं स्मृतम् ॥ १५ ॥
युगाचारेण वर्तन्ते संमतं वर्णमाश्रमम् ।
आत्मस्वार्थं न जानाति स मिश्रं लक्षणं स्मृतम् ॥ १६ ॥
वेदशास्त्रार्थसर्वज्ञो उक्ताचारश्च तत्परः ।
यथोक्त्वा च वदेद्वाक्यं स ज्ञानी लक्षणोच्यते ॥ १७ ॥
कार्यं च अन्यथाकर्तुं यद्वक्तुं तत्तु साधयेत् ।
सञ्चितार्थान्वदेत्प्राज्ञः स सिद्धिलक्षणोच्यते ॥ १८ ॥

कार्यकारणकर्तृत्वं विहाय विचरेन्महीम् ।
स्तुनादपी निकामी च आनन्दं ज्ञेयलक्षणम् ॥ १९ ॥

इति निर्वेदज्ञाननिर्णयः ।

देहवर्णाश्रया धर्मा कल्पनावेदनिर्मिताः ।
ता हि निर्मोकवत्त्याज्याः सोऽहमेको निरञ्जनः ॥२०॥

तस्माज्ज्ञानात्तु कैवल्यमित्यादिश्रुतेः ज्ञानाग्निदग्धकर्माणीति गीता ।

परोक्षं शास्त्रियज्ञानमपरोक्षं च शाश्वतम् ।
प्रथमं जन्मकर्माणि द्वितीयं सच्चिदात्मकम् ॥ २१ ॥
उत्पत्तिस्थितिसंहारभूतं भूतेषु युज्यते ।
आत्मा च तत्र साक्षी च जगद्द्रष्टा च सूर्यवत् ॥२२॥
भूतादिव्यक्तिरूपं च अचरं चरमेव च ।
तदिन्द्रजालवत्पश्येद्यथा नु वीचिवज्जगत् ॥ २३ ॥
कल्पनावद्धजन्तुश्च सदा जल्पति दोषवत् ।
वपुर्नृत्यति रथ्यायां यावत्पतति भूतले ॥ २४ ॥
जनो बालपिशाचत्वं किं लज्जायोगिवृन्दिनाम् ।
जल्पन्ति विविधा वाचो किमर्थं सुखदुःखयोः ॥२५॥
अस्ति भाति प्रियं स्थिरमस्थिरं नाम रूपकम् ।
चत्वार ईषणा त्याज्याः सोहमेको निरञ्जनः ॥ २६ ॥
मातृकाध्वनिरूपा च वर्तते विश्वमायया ।

जानीहि तत्र तन्नादं व्यर्थोऽर्थः प्रतिपाद्यते ॥ २७ ॥
अमनस्तु सदा देहो यथा ग्रामो विना जनात् ।
ब्रह्माद्योपि न कर्त्तव्यः स पशुश्चात्मघातकः ॥ २८ ॥
उत्तमा च लये लीना ध्यानधारणमध्यमाः ।
अधमा प्रतिमापूजा गीतनृत्यं धमोधमः ॥ २९ ॥
स्नानं मनो मलत्यागः शौचमिन्द्रियनिग्रहः ।
अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः ॥ ३० ॥
स्थूलपेशिवत् प्रत्यक्षं लिङ्गं वन्ध्यं यथा स्त्रियः ।
मनसात्मैकरूपेण स्वयं ब्रह्म सनातनम् ॥ ३१ ॥
श्रुतिस्मृत्यर्थपूर्णं च समाधेश्चित्तसौरसम् ।
यावद्देहाभिमानं च तावत्सो निष्फलाः क्रियाः ॥३२॥
संसारकर्म आसक्तो ब्रह्माहमिति मन्यते ।
कर्मब्रह्मोभयभ्रष्टस्तं त्यजेदन्त्यजं यथा ॥ ३३ ॥
समाधेर्विक्षेपो यस्य नानायुक्तिप्रकारकः ।
यावद्देहलयं नैतावन्तो मोहकारकाः ॥ ३४ ॥
एकोसौ योगवासी च द्वयं ग्रामस्तथैव च ।
तृतीयं नगरं चैव मन्ये यद्वनवासिनाम् ॥ ३५ ॥
वेदशास्त्रपुराणानि नानायुक्तिं च वल्गुना ।
व्यवसायात्मिका बुद्धिर्न तु साधनरूपका ॥ ३६ ॥
आलोड्य चतुरो वेदान् सर्वशास्त्राणि सर्वदा ।

यो वै तत्त्वं न जानाति दर्वीशाकरसं यथा ॥ ३७ ॥
शब्दब्रह्मणि निष्णातो स्नायात्स परमे यदि ।
श्रमस्तस्य श्रमफलं ह्यधेनुरिव रक्षकः ॥ ३८ ॥
आकाशदर्पणे यस्मिन्यज्जगद्भासतेऽखिलम् ।
तत्सर्वं ब्रह्मरूपं च मायामयविचेष्टितम् ॥ ३९ ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ४० ॥
नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च ।
न मनो हन्त बुद्धिश्च नैव चित्तमहङ्कृतिः ॥ ४१ ॥
नाहं मनुष्यो न च देव यक्षो न ब्राह्मणः क्षत्रियवैश्यशूद्रः ।
न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः ४२
कार्यकारणचेष्टा च त्रिविधं कल्पनाकृतम् ।
मनोहङ्कारसंयुक्तं व्यर्थं च शब्दमालिका ॥ ४३ ॥
शब्दे शब्दस्य ज्ञानार्थं योगी वदति निस्पृहः ।
यथा वाद्येषु नादश्च पारतन्त्र्येण वर्तते ॥ ४४ ॥
योगी च सर्वकार्याणि वर्तते देहकर्मणि ।
कौमारं क्रीडनं चैव सर्वं मिथ्यैव कारणम् ॥ ४५ ॥
यत्रावत्क्रियते जन्तुः स्वगृहे राजते पुमान् ।
यो यो यस्य यथा भावस्तत्तत्तेषां च सौख्यता ॥ ४६ ॥
तत्कामोपचेष्टितम् सर्वं वृथा भवति आयतौ ॥

न चास्य क्रिया काचिन्नेह नानास्ति कर्हिचित् ॥ ४७ ॥
अहं चेष्ट इतो देहे सर्वकर्मसु चेष्टते ।
इति ज्ञानं विजानीयाद्यज्ज्ञानं स्मरणेन हि ॥ ४८ ॥
तडागः पूर्णतो येन यद्वातुं बलं राजते ।
किंचिच्छिद्रेण आद्यं च मनसात्मोदकक्रियाः ॥ ४९ ॥
बन्धं विहाय पूर्णानि कुर्वन्तु स्वस्थमानसम् ।
ये हि युक्तिं सदाभ्यासात्स वै ज्ञानोत्तमोत्तमः ॥५०॥
देहादिसर्वकर्माणि ज्ञानाज्ञानेषु ज्ञायसे ।
सोऽहं चिन्मात्ररूपेण जानीहि ब्रह्मलक्षणम् ॥ ५१ ॥
अहं मूर्खमहं ज्ञाना यो धर्मः प्रतिपाद्यते ।
सोऽहं चिन्मात्ररूपेण जानीहि ब्रह्मलक्षणम् ॥ ५२ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि यस्मिन् दृष्टे परावरे ॥ ५३ ॥
जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किञ्चन ।
ब्रह्मण्याभाति चिन्मिथ्या यथा मरुमरीचिका ॥ ५४ ॥
ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
न चास्ति किञ्चित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥ ५५ ॥
न त्वं विप्रादिको वर्णो नाश्रमी नाक्षगोचरः ।
असङ्गोसि निराकारो विश्वसाक्षी सुखी भव ॥ ५६ ॥
देहाभिमानगलिते विदिते च चिदात्मनि ।

यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ५७ ॥
आत्मैकभावनिष्ठस्य या या चेष्टास्तदर्चनम् ।
यो यो जल्पः स संमन्त्रस्तद्ध्यानं च निरीक्षणम् ॥५८॥
न संकल्पविकल्पस्य न लीनोपाधिवासनाः ।
निजस्वरूपे निर्मग्नः स योगी परतत्त्ववित् ॥ ५९ ॥
देहादिसर्वेन्द्रियाणि सत्तामात्रेण चेष्टते ।
यथा दीपे प्रपंचस्य चुंबकं लोहमेव च ॥ ६० ॥
देहद्वयं तथा नाम वर्णाश्रमा च व्यर्थता ।
महीआकाशब्रह्माहमलमेतत्समाधिना ॥ ६१ ॥
अव्यक्तस्य कथं ध्यानं व्यापकस्य विसर्जनम् ।
अमूर्तस्य कथं पूजा स्वयं ब्रह्म सनातनम् ॥ ६२ ॥
फलस्य कारणं पुष्पं फले पुष्पं विनश्यति ।
ज्ञानस्य कारणं कर्म ज्ञाने कर्म विनश्यति ॥ ६३ ॥
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
आत्मना पूरितं सर्वं महाकल्पांबुना यथा ॥ ६४ ॥
भूतादिव्यक्तिरूपं च अचरं चरमेव च ।
तदिन्द्रजालवत्पश्येद्यथाम्बुवीचिवज्जगत् ॥ ६५ ॥
शब्दभागद्वयं कृत्वा व्यर्थो ज्ञानार्थयोगिनम् ।
कदाचिद्वक्तुं ज्ञानार्थं व्यर्थो वक्तुं न शक्यते ॥ ६६ ॥
गर्वं नो वहते न निन्दति पराञ्नो भाषते निष्ठुरं

प्रोक्तं केनचिदप्रियं च हसते कोपं च नालम्बते ।
श्रुत्वा काव्यमलक्षणं परकृतं सन्तिष्ठते मूकव-
द्दोषान्नाददते स्वयं न कुरुते चैतत्सतां लक्षणम् ॥ ६७॥
बीजमध्ये यथा वृक्षं वृक्षमध्ये च बीजता ।
व्याप्यव्यापकसर्वात्मा स पृथक् नैव दृश्यते ॥ ६८ ॥
एकात्मा सर्वभूतेषु बन्धमोक्षः कथं द्विधा ।
जन्मसंस्कारयोगेन भिन्नत्वं वर्त्तते सदा ॥ ६९ ॥
प्रतिबिम्बयथोपाधिं दीर्घन्तिर्यक् च वर्त्तुलम् ।
तस्माद्विलक्षणो जीवः कथमेकं भविष्यति ॥ ७० ॥
यथा योनिस्तथाचारपूर्वकर्म्मानुसारतः ।
तत्तज्ज्ञानाधिकारेण द्विविधा बन्धमोक्षयोः ॥ ७१ ॥
यथायमलमुत्पत्तिं प्रारब्धं विविधाकृतम् ।
तथैव सुखदुःखानि कथं भवति एकता ॥ ७२ ॥
द्रव्यं न भक्षयेत्प्राज्ञः स्वद्रव्यं नैव पोषयेत् ।
सन्तुष्टः सर्वदा नित्यं स नरो ज्ञानवान्भवेत् ॥७३॥
शरीरं नश्वरं सर्वं सम्बन्धः किन्तु शाश्वतः ।
वयसा सूत्रमार्गेण यथा स्थानेषु गच्छति ॥ ७४ ॥
यथा परगृहे वासो मार्गस्थं कुरुते सदा ।
तथैव सुखदुःखेन न स्पृशेत ज्ञानिनो नरः ॥ ७५ ॥
नटी च नटनाट्यं च नानाक्रीडा च रञ्जनम् ।

अहं प्रत्ययजानाति तथैव ज्ञो सदा नरः ॥ ७६ ॥

इति ज्ञाननिर्णयः ।

अथ श्रोता उवाच ।

इदं किं दृश्यते केन कथं जातम् ?

तं होवाच—

प्रथम अनादिवस्तु चैतन्य आत्मा । तस्य स्फुरणं जातं स इममेवात्मानं द्विधा पातयेत्ततः ।

पतिश्च पत्नी चाभवतामिति बृहदारण्ये ।

तत्त्वमसीति यस्मिन् त्रिपदानि भवन्ति । तत् त्वं असि । ब्रह्माहमस्मीति सकलब्रह्मान्तं निश्वसितम् । अथ तत्सर्वं त्वमेव । इदमाश्चर्यम् । तर्हि चित्त एकाग्रम् अतिसूक्ष्मतरं कुरु । परमार्थमित्युक्तम् । आत्मायं गुरुरचलधर्मव्यापकत्वादिति । अथ—

अन्धः पङ्गुरसङ्गे च सङ्गात्कर्म प्रतिष्ठितम् ।
यत्र पङ्गुस्वतन्त्रत्वं तत्रान्धो निःफलो भवेत् ॥ १ ॥
अन्धातीतं भवेत्पङ्गुरचलं च सनातनम् ।
सबाह्याभ्यन्तरं भूतं यथाकाशं च दृश्यते ॥ २ ॥

किन्तु माया अन्धा अविवेकित्वात् । उभयोरेकीभूत्वा मिथ्या जीवेश्वरौ व्याजेनापि ब्रह्माण्डयोः । सृष्टिर्निर्मिताः ।

तस्मान्मायापरित्यागेन स्वयमेव चिदाकाशे च वर्तते । तत्र प्रमाणं श्रुतिः । आकाश आत्मा खं ब्रह्म ।

अथ जीवेश्वरयोर्लक्षणम् । तत्र प्रमाणं श्रुतिः । द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । अथ वेदेति । कार्योपाधिचैतन्यं जीवशब्दवाच्यम् । कारणोपाधिचैतन्यम् ईश्वरशब्दवाच्यम् ।

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणतां हित्वा पूर्णबोधो विधीयते ॥ ३ ॥

तत्र कार्यं नाम अहङ्कारादिसृष्टिव्यापारः कारणं नाम साक्षी ह्यन्तःस्फुरणम् । इति वेदान्ते ।

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेस्मिन्पुरुषः परः ॥ ४ ॥

इति ईश्वरः ।

पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान् ।
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥ १ ॥

इति जीवः ।

मुखाभासको दर्पणे दृश्यमानो
मुखत्वात्पृथक् ते न हि वाऽस्ति वस्तु ॥

चिदाभासकोधीशजीवोऽपि तद्वत्
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १ ॥

इति हस्तामले । सलिल एको द्रष्टाद्वैतो भवति । इति बृहदारण्ये । तथाबिम्बप्रतिबिम्बन्यायेन जीवेश्वरौ कल्पितौ । तज्जीवस्य मोक्षसाधनमाह कर्मपरं अहरहः सन्ध्यामुपासिता यावज्जीवमग्निहोत्रं जुहुयात् । ज्योतिष्टोमौ स्वर्गकामो यजेत । ओमिति ब्रह्म । ओमितीद९ सर्वम् । ओमित्यग्निहोत्रमनुजानाति ।

इति कर्म ।

अथ ज्ञानपरम् । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।

प्रथमंमायाशबलसृष्ट्यादिपुत्रकलत्रद्रव्यादिलक्षणः । द्वितीयं स्थूलसूक्ष्मादिशरीरस्य विलक्षणम् । तृतीयं केवलमोक्षसङ्कल्पः । यथा शुकनालकान्यायेन मिथ्यारज्जुसर्पे भ्रममाणे सति तस्य मोक्षसाधनमाह । तत्र जीवस्वरूपं लक्षणं दृष्टिसम्बन्धेन सूर्यप्रभया प्रतिभाति तद्वासना महद्हृदि ग्रन्थिः ।

इति जीवलक्षणम् ।

जीवस्य मोक्षकामाय त्रिवर्गं च पुरा कृतम् ।
कर्म पातञ्जलिं साङ्ख्यं तत्समासेन कथ्यते ॥ १ ॥

पञ्चभूतात्मिका पूजा त्रिधिरेष समाश्रृणु ।
त्रयं कर्म पूजायोग्यं वा यो पातञ्जले स्मृतः ॥ २ ॥
द्वयं देहाभिमानेन एकं नाहं च सांख्यता ।
अहं नाहं द्वयं शब्दबन्धमोक्षं च कारकम् ॥ ३ ॥

तथा च श्रुतिः । अथातो धर्मजिज्ञासा । अथातो ब्रह्मजिज्ञासा । पूर्वपूर्वश्रुतियुक्त्यानुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यानुभवाभासबाधदर्शनात् ।

सामान्यशास्त्रं स्यान्न्यूनं विशेषो बलवान्भवेत् ।
परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ ४ ॥

इति वेदान्ते कर्मपरम् । ज्ञानादेव तु कैवल्यमित्यादिश्रुतेः ।

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
ज्ञानाग्निदग्धकर्माणि ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।

इति ज्ञानपरम् ।

अथ वेदोक्तकर्मयोगः ।

वर्णाश्रमं च धर्मं च वेदादिविधिपूर्वकम् ।
तच्च साध्यमसाध्यं वा जन्मकर्मफलप्रदम् ॥ १ ॥
ज्योतिष्टोमे भवेत्स्वर्गः श्योना स्यादिति कर्माणि ।
निषेधविधिनिघ्नानि न भवन्मोक्षसिद्धिदम् ॥ २ ॥

जपानुष्ठानयोर्द्वारा देवतानुग्रहो भवेत् ।
तत्सकाशाद् भवेत सिद्धिश्चैतन्योपाधिवर्जिता ॥ ३ ॥

तत्र भूतपूजा । पार्थिवस्थावरादितीर्थयात्रा अग्निहोत्रज्वालामुखीयागादि । आपः गङ्गायाः नैमिषारण्यादिजलपूजा । तथा च—

संहिता ब्राह्मणारण्यं छन्ददीक्षा निघण्टकम् ।
ज्योतिषं च निरुक्तं च दशग्रन्थानि सूत्रकम् ॥ ४ ॥
एकया लिङ्गग्रन्थ्या च बध्यते सकलं जगत ।
दशग्रन्थ्या यदा बद्धो तस्य मुक्तिः कथं भवेत ॥ ५ ॥
एवं पठति वेदानां हंकारं पिण्डपोषणम्(?) ।
एतज्ज्ञानपरं ज्ञात्वा स मुक्तो नात्र संशयः ॥ ६ ॥

किन्तु—

संहिता कार्यच्छन्दं च दृश्यब्रह्मेति ब्राह्मणम् ।
नभमारण्यमाश्रित्य छन्दस्ब्रह्मास्मि वाक्यता(?) ॥ ७ ॥
मन आदिरोधनं शिक्षा निघण्टं वृत्तिधारणम् ।
विवेकं ज्योतिषं चैव ममेदं सूर्यमुच्यते ॥ ८ ॥
निरुक्तं संशयच्छेद्यं सूत्रपाठं च ज्ञानधीः ।
अङ्गोपाधिश्च वेदाद्या यस्तं वेद स वेदवित ॥ ९ ॥

अस्यार्थः । संहिता नाम स्वहितम् । कार्यकारणातीतं न तु कर्मचोदना । ब्राह्मणं नाम सर्वस्वं ब्रह्मैव न तु

यागादि। आरण्यं नाम नभलक्ष्यं न तु आरण्यरोदनम्। छन्दो नाम ब्रह्मास्मीति स्मरणं न तु पिशाचवच्छलनम्। शिक्षा नाम शासनं मन आदिधारणा न तु पाठः निघण्टं नाम काठिन्यं वृत्तिसावधानता न तु देशान्तरम्। ज्योतिषं नाम विवेकता न तु गणकादिव्यापारः। सूत्रं नाम अभेदानुसन्धानं न तु कर्मप्रेरणा। निरुक्तं नाम संशयच्छेद्यं न तु वेदार्थप्रौढिः। सूत्रपाठं नाम ज्ञानदृष्टिः। न तु व्याकरणबलम्।

एतज् ज्ञानं परं ज्ञानमन्यत् संसारपोषणम्।

इति वेदोक्तकर्मयोगः। प्रमाणं वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुत इति श्रुतेः॥

अथ पातञ्जलहठयोगः।

अथ पातञ्जलयोगं कथयत्यङ्गानि वै क्रमात्।
देहसाध्यं भवेन्मोक्षं तज्ज्ञानं साधनं शृणु॥ १॥

तत्र हंसोपनिषदि—गुदमवष्टभ्याधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिःप्रदक्षिणीकृत्य मणिपूरकं गत्वा अनाहतमतिक्रम्य विशुद्धे प्राणान्निरुद्ध्य आज्ञामनु ब्रह्मरन्ध्रं ध्यायेत्। तत्र नादमनुभवति चिणिति प्रथमः १ चिणिचिणि २ घण्टा ३ शङ्ख ४ तन्त्री ५ ताल ६ वेणु ७ भेरि ८ मृदङ्ग ९ मेघ १० नवमं त्याज्यं दशमम-

भ्यसेत्। तस्मान्मनो विलीनं भवति। यस्य मनसि विष्टना मनसोऽन्तरायं मनो न वेद यस्य मनः शरीरं यो मनोन्तरो यमयति।

चक्रं सप्त त्रिकूटं च श्रीहठं गोहठं तथा।
भ्रूवोर्गुम्फा ब्रह्मरन्ध्रं सूलो यानं जलन्धरम्॥ १॥
टाली लोली तथा धोती लम्बिकाशोधनं क्रमात्।
खेचरी भूचरी चैव महाकाष्ठा तथैव च॥ २॥
उड्डानं लोपनं चैव गाठनं चावकाशकम्।
इडापिङ्गलयोर्नामान्यष्टाविंशत्यनुक्रमात॥ ३॥
प्रणवं व्याहरन् जाप्यं सोहं यामं मतान्तरे।
अस्य कर्ता भवेज्जीवो देहभाजनसम्मतम्।
साधनेन भवेत्सिद्धिरहं वृद्धोऽभिजायते॥ ४॥
अणिमादि भवेत्तेषां भूतं भविष्यं वर्तमानम्।
वाचां सिद्धिर्मृतं मोक्षं देहसङ्गेन मानिता॥ ५॥
यथा प्रेते क्षमा लिङ्गं तत्प्रकाशाच्च सौख्यता।
तथा देहसमीरेण अहं ममेति मानिता॥ ६॥
ब्रह्मरन्ध्रे गते प्राणे ह्यहं मोक्षोऽपि जायते।
यथा दग्धगृहस्वामी पलायन् सौख्यमानिता॥७॥
पुनरहङ्कृतो वासो वासना जन्मदायिनी।
तथा देहगतो मोक्षो बुद्धिरर्भकसंमता॥ ८॥

तत्र गीता—

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरो पराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ ९ ॥

द्रष्टा दृश्यं यदा वर्त्ते देहे सङ्गेन मोक्षकः(?) ।
आत्मा देही कथं कृत्वा सर्वव्यापिविलक्षणः ॥ १० ।
तस्मादुन्मीलयोगी च विकल्पः कौलशिक्षया ।
समाभ्युत्थानमन्यानि देहसङ्गेन व्यर्थता ॥ ११ ॥
आत्मा प्रज्ञानमानन्दनित्यशुद्धनिरामयः ।
विचरेज्ज्ञप्तिमात्रेण देहातीतं च सर्वदा ॥ १२ ॥
यावद्देहाभिमानं च यावत्सिद्धिः प्रवर्त्तते ।
तावज्जन्यानिदानं च भवेत्कर्मानुसारतः ॥ १३ ॥

तत्र निषेधार्थश्रुतिः—

न कर्मणा न प्रजया धनेन
त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहितं गुहायां
विभ्राजते यद्यतयो विशन्ति ॥

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्ध-सत्त्वाः इति श्रुतेः । आब्रह्मभुवनाल्लोकात् इति गीतासु

इष्टादर्शनदृश्यानां विरामो यत्र वा भवेत्।
तस्माद्विलक्षणं ह्यात्मा ह्यपरोक्षे भवेत्स्वयम् ॥ १ ॥
यावन्न ज्ञायते आत्मा कर्तृलाभलत्वं मुनिः।
तावत्सर्वं भवेद्व्यर्थं यथा वन्ध्या विभूषिता ॥ २ ॥

इति कर्मेश्वरः। परन्तु अनर्थकारी देहनाशकारी। तस्माज्ज्ञानाय साधयेत्। तत्र चक्रम आधारं नाम देहम् ॥ १ ॥ स्वाधिष्ठानं सात्त्विकमहङ्कारः ॥ २ ॥ मणिपुरं बुद्धिः ॥ ३ ॥ अनाहतं सदाचारः ॥ ४ ॥ विशुद्धं गुरुभक्तिः ॥ ५ ॥ आज्ञाचक्रे ज्ञाने सावधानता ॥ ६ ॥ सहस्रदलं तुर्या ॥ ७ ॥ त्रिकूटं गुणरहितम् ॥ ८ ॥ श्रीहठं मायारहितम् ॥ ९ ॥ गोहठमविद्यातिरस्कारः ॥ १० ॥ भ्रुवोर्गुम्फा कामनाशून्यम् ॥ ११ ॥ ब्रह्मरन्ध्रं मनोलयः ॥ १२ ॥ सूलबन्धमिन्द्रियनिग्रहः ॥ १३ ॥ यानं विषयनिरासः ॥ १४ ॥ जालन्धरं स्वपररहितम् ॥ १५ ॥ टाली पदार्थवार्ताशून्यम् ॥ १६ ॥ लोली युक्ताहारः ॥ १७ ॥ धोती सर्वज[illegible]व्यैक्यम् ॥ १८ ॥ लम्बिका स्तुतिनिन्दारहितम् ॥ [illegible] ॥ खेचरी अवकाशे दृष्टिः ॥ २० ॥ भूचरी युग्ममात्रम[illegible]ाकनम् ॥ २१ ॥ महाकाष्ठा सर्वं ब्रह्मेतिनिश्चयः ॥ २२ ॥ उद्यानमनिकेतम् ॥ २३ ॥ लोपनं कार्यातीतम् [illegible] २४ ॥ गाठनं देहदुःखसहनम् ॥ २५ ॥ अवकाशं देह[illegible]तम् ॥ २६ ॥

इडा पिङ्गलयोर्नाम ॥ २७॥ २८ ॥ प्रपञ्चबुद्धिराहितम् ॥
एवन्तु साधयेत्प्राज्ञो न तु देहविडम्बनम् ।
देहाद्विलक्षणं आत्मा वृथा भ्रमन्ति मानवाः ॥

इतिपातञ्जलहठयोगः ॥

अथ साङ्ख्यराजयोगः ।

विना साङ्ख्येन प्रत्यक्षं न भवेदात्मयोगिनाम्(?) ।
देहः कञ्चुकवत्त्यक्त्वा स्वस्थं खमिव राजते ॥ १ ॥
यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सर्वे घूर्णिपराः प्रपञ्चविकलाः सांख्यात्परं नान्यथा ॥२॥
सांख्यं योगं समभ्यस्येत पुरुषं पञ्चविंशतिः ।
इति श्रुतिर्वेदद्वाक्यं वेदान्तैः सद्भिरुच्यते ॥ ३ ॥
आकाशपूरकं सांख्यं योगः समीरपूरकः ।
देहाद्विलक्षणं आत्मा तस्मात्सांख्यं समभ्यसेत् ॥ ४ ॥
स...ख्यः सर्वतद्वाचामात्मनो व्यतिरेकता(?) ।
...ख्ययोगसंज्ञा च इतरं श्रामिकं मतम् ॥ ५ ॥
सर्वाद्वि...क्षणोह्यात्मा एकमनेकरूपिणम् ।
एकमेवाद्वि...ीयं ब्रह्म अलं ततः परं भवेत्(?) ॥ ६ ॥

इति सांख्ययोगः ।

अथ देहलक्षणम्—

भोगरोगं तथा मलं निधनं क्षेतगामिता ।
प्रारब्धमनुवर्त्तन्ते यथा तद्दै विनिश्चितम् ॥ १ ॥
पञ्चतन्मात्रभूतानि प्रत्यक्षमखिलं जगत् ।
प्रकृतिर्गुणकर्माणि वर्त्तन्ते चित्प्रकाशतः ॥ २ ॥
मनोत्थाय यदा देहे तत्कर्म जीवसंज्ञकम् ।
देहेन मनमुत्थाय तत्कर्म देहसंज्ञितम(?) ॥ ३ ॥
भक्ष्यभक्ष्यकभावं च भूतं भूतेषु युज्यते ।
तदर्थं शृणु मे वत्स पञ्चभूतान्यनुक्रमात् ॥ ४ ॥
आपः पृथिवी भक्ष्यं च वायुरग्निश्च भक्षकः ।
तत्राकाशमायपनं सत्ता चिन्मात्रसंज्ञिता ॥ ५ ॥
क्षुत्पिपासाविसर्गं च देहे कर्माणि केवलम् ।
अन्यत्कार्याणि कर्माणि वेदसंज्ञा विधीयते ॥ ६ ॥
धैर्यं समरसश्चैव सर्वभक्षस्य निस्पृहः ।
अखण्डपञ्चभूतानि लक्षणैर्देह उच्यते ॥ ७ ॥

तत्राहमन्तःकरणं भोक्ता, भोक्ता नाम साक्षित्वम् इन्द्रियाणां भोगसाधनता नाम रसपरीक्षा पञ्चभूतानां भोग्यं नाम स्थूलकृशादिद्रव्यगुणाः । यथा भवन्ति तथा । तत्र प्रमाणं श्रुतिः—ताभ्यः पुरुषमानयत्ता अब्रुवन्पुरुषं स्तुतेति पुरुषो वा वसु कृतं यथायतनं प्रविशामि क्षुत-

पिपासे भवतेति श्रुतेः मातावालकन्यायेन तत्र गीतासु

इदं शरीरं कौन्तेयक्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ ८ ॥

इति सांख्यपरिभाषा(१) ॥

---

(१) सांख्यपरिभाषाग्रन्थस्य एकमेवादर्शपुस्तकं प्राप्तमपि च ग्रन्थकृता ग्रन्थप्रारम्भे—

विभक्तिमत्र यो पश्येत्तस्य ज्ञानं च दूरतः ।
गुरुयुक्त्या प्रसादेन ग्रन्थगर्भावलोकनम् ॥

इति प्रतिज्ञातत्वादस्य मुद्रणे कारिते बहुषु स्थलेषु अगत्याऽशुद्धिरस्ति किन्तु ग्रन्थार्थरक्षार्थं न तन्निरासेऽस्माभिर्हस्तक्षेपः कृतः । ग्रन्थोऽपि खण्डित इवाभाति ।

# चौखम्बासंस्कृतसीरीज़ ।



—:०:—


जयकृष्णदास गुप्तः सेक्रेटरी
चौखम्बासंस्कृतसीरीज़ आफिस
बनारस सिटी।